**स्मृ.कृष्णाचार्य—**अतिदुर्घटे कलियुगे भगवदर्चनस्यावश्यत्वं दर्शयन्भगवदर्चकं स्तौति— **कलौ कलिमलध्वंसीति** ।। कलिकृतरागद्वेषाद्यरिषड्वर्गादिना प्राप्तमल-नाशकम् । अत एव सर्वपापहरं श्रीहरिं ये नराः पुण्यपुरुषाः अर्चयन्ति तन्त्र-साराद्युक्तरीत्या भगवदर्चनं नित्यं कुर्वन्ति तेऽपि स्वावरैः जनैः वन्द्या भवन्ति । यद्वा येऽपि स्वोत्तमादिभिरपि पापयुगेऽपि हरिं स्वगतिप्राप्त्यर्थं अर्चयन्ति तेऽपि पुण्यपुरुषाः स्वात्मोद्धारका इति वन्द्याः स्तुत्या भवन्तीत्यर्थः । अनेन इह भगवदर्चनेन हरिः कलिमलसर्वपापपरिहारकश्च भवतीत्यवश्यं भगवदर्चनं कर्तव्यमिति सूचितमिति द्रष्टव्यम् । यथा हरिरिति वन्द्यत्वमात्रे दृष्टान्तो ज्ञेयः । अथवा कलियुगे भगवदर्चकाः हरेर्नित्यं प्रियत्वेनार्च्या इति यथा हरिरित्युक्तमिति ज्ञेयम् ।। ७ ।।

**कृष्णाचार्य—**ये भक्त्या विष्णुं पूजयन्ति ते सर्वे हरिवत् वन्द्याः भवन्तीत्याह- — **कलाविति** ।। कलियुगे कलिकृतपापानां ध्वंसिनं नाशकर्तारं सर्वपापनाश-कर्तारं सर्वान्तर्यामिणं हरिं ये अर्चयन्ति ते जना अपि सर्वैर्वन्द्या भवन्ति । सर्वदेवा यथा वन्द्याः तथा भवन्तीत्यर्थः ।। ७ ।।

**कृष्णामृतमहार्णवः**

**नास्ति श्रेयस्तमं नृणां विष्णोराराधनान्मुने ।**
**युगेऽस्मिंस्तामसे लोके सततं पूज्यते नृभिः ।। ८ ।।**

**ताम्रपर्णी—**ननु हर्यर्चनादधिकफलप्रापकमन्यदस्तीति चेत् तदेव शिवाद्यर्चनं कार्यमित्यत आह— **नास्तीति** ।। तामसे तमोगुणप्रचुरे । सततं नृभिः पूज्यत इति यत्तस्मादाराधनाच्छ्रेयस्तमं नास्तीत्यन्वयः ।। ८ ।।

**उमर्जी—**तथेन्द्राद्यर्चनस्यापि भाग्यरूपत्वं किन्न स्यादित्यत आह— **नास्तीति** ।। अस्मिन्कलियुगे । तामसे तमोगुणयुक्ते लोके जने हरिः सततं पूज्यत इति यत् तस्मादन्यच्छ्रेयस्तमं अतिशयितं श्रेयः नास्तीति सम्बन्धः । अत इन्द्राद्यर्चनस्य न भाग्यरूपत्वमिति भावः ।। ८ ।।

**उपेन्द्र—**भगवदर्चनमन्तरेण पुरुषार्थान्तरं नास्तीत्युपसंहरति— **नास्तीति** ।। अस्मिन्युगे कलियुगे । तामसे तमोगुणयुक्ते जनमध्ये । हरिः सततं पूज्यते इति

यत् । तस्मान्नित्यार्चनात् श्रेयस्तमं उत्तमश्रेयो नास्तीति यच्छब्दाध्याहारेण योज्यम् ।। ८ ।।

**कोनेरी**—हे मुने! अस्मिन्युगे सन्मार्गनिवृत्तिकलियुगे । लोके जने । "लोकस्तु भुवने जने" इत्यभिधानम् । तामसे तामसगुणोपेते । यैर्नृभिः हरिः सततं पूज्यते । तेषां नृणां विष्णोराराधनादृते अन्यत् श्रेयस्तममुत्तमं श्रेयो नास्तीत्यन्वयः ।। ८ ।।

**स्मृ.कृष्णाचार्य**—भगवदर्चनस्य सर्वश्रेयोऽपेक्षया अधिकफलप्रदत्वाद्भगवदर्चनं कार्यमिति प्रमाणमाह— **नास्तीति** ।। हे मुने इति कस्यचित्सम्बोधनम् । विष्णो-राराधनात्परमात्मार्चनादृते नृणां श्रेयस्तमं उत्तमं श्रेयस्साधनं नास्ति । तत्कुत इत्यत उक्तम् । युगेऽस्मिन्नित्यादि । तामसे लोके तामसजनभूयिष्ठे धर्मविघ्नकरे अस्मिन्कलियुगे हरिः सततं पूज्यत इति यत्तस्मान्नास्ति श्रेयस्तममित्यर्थः ।। ८ ।।

**कृष्णाचार्य**—परमात्मनः आराधनं विना अन्यन्मोक्षोपायं नास्तीत्याह ।। **नास्ति श्रेयस्तममिति** ।। लोके परमात्माराधनादृते अन्यत्पुरुषार्थसाधनं नास्तीत्यभिप्रायः मुने इति कस्यचिदृषिसम्बोधनम् । विष्णोराराधनात्परं परमात्मार्चनादृते नृणां श्रेयस्तमुत्तमश्रेयः साधनं नास्तीति । तत्कुत इत्युत उक्तम् ।। **युगेऽस्मिन्नित्यादि**।। तामसे लोके तामसजनभूते दुष्टे धर्मविघ्नकरेऽस्मिन् कलियुगे हरिः सततं पूज्यते इति यस्मात्तस्मान्नास्ति श्रेयस्तममित्यर्थः ।। ८ ।।

**कृष्णामृतमहार्णवः**

**अर्चिते देवदेवेशे शङ्खचक्रगदाधरे ।**
**अर्चिताः सर्वदेवाः स्युर्यतः सर्वगतो हरिः ।। ९ ।।**

**ताम्रपर्णी**—ननु भगवत्पूजायाः सर्वदा करणे देवतापूजनं न लभ्यत इत्यत आह— **अर्चित इति** ।। यस्माद्धरिः सर्वगतः सर्वदेवताख्यप्रतिमागत एव अर्च-नीयः तस्मात्तदधिष्ठाने भगवत्यर्चिते सर्वदेवास्तदधिष्ठानतया अर्चिताः स्युरिति भावः ।। ९ ।।

**उमर्जी**—सर्वदेवार्चनरूपत्वाद्भगवदर्चनमेव कार्यमित्याह— **अर्चित इति** ।। यत सर्वगतः सर्वदेवान्तर्यामी । "अन्तर्यामितया ध्येयः सर्वदेवेषु सर्वदा"

इत्युक्तेः । सर्वदेवान्तर्यामितयार्चिते सति अधिष्ठानभूताः सर्वे देवाः अर्चिताः स्युः । सर्वदेवान्तर्यामित्वोपपादकानि विशेषणानि । सर्वदेवान्तर्यामितया भगवदर्चनं कार्यमिति भावः ।। ९ ।।

**उपेन्द्र**—भगवदर्चनेनैव सर्वदेवार्चनं भवतीत्याह— **अर्चित इति** ।। यतः सर्वगतः सर्वदेवान्तर्यामी 'अन्तर्यामितया ध्येयः सर्वदेवेषु सर्वदा' इत्युक्तेः । अन्तर्यामितयार्चिते सति अधिष्ठानभूताः सर्वदेवाः अर्चिताः स्युः । अन्तर्यामित्वोपपादकं देवदेवेश इति विशेषणम् ।। ९ ।।

**कोनेरी**—सतीष्वन्यासु देवतासु ताः विहाय हर्यर्चनमात्रेण कथमुत्तमश्रेयः स्यादित्याशंक्य भक्त्या हरावर्चिते सति सर्वदेवार्चनमपि कृतं स्यादित्याह— **अर्चित इति** ।। शङ्खचक्रगदाधरे देवदेवेशे देवानां इन्द्रादीनां देवाः ब्रह्मादयः तेषां ईशे स्वामिनि । हरौ पूजिते सति । सर्वेऽपि देवाः पूजिताः स्युरित्यन्वयः । नन्वेकस्य पूजने कथं सर्वदेवपूजनं कृतं भवतीत्यत आह— **यत इति** ।। यतो यस्मात्कारणाद्धरिः सर्वनियन्तृत्वेन सर्वगतः । व्याप्तोपासकाः पूजाकाले सर्वान्तर्यामिणं हरिं पूजयन्ति । तस्मादन्तर्गतभगवत्पूजनेन तेऽपि पूजिताः स्युरिति । यद्वा पूजाकाले परिवारतया पूज्या इत्युक्तेरिति भावः ।। ९ ।।

**स्मृ.कृष्णाचार्य**—इतरदेवतार्चनत्यागेनापि भगवदर्चने सर्वदेवार्चनं फलमङ्गत्वेन भवतीत्याह— **अर्चित इति** ।। इतरदेवतार्चनापेक्षया तदर्चनस्य फलाधिक्यं कुत इत्यत उक्तम् ।। **देवदेवेश इति** ।। तर्हि तदर्चने सर्वदेवार्चनफलं कथमित्यत उक्तम् ।। **यतस्सर्वगत इति** ।। यस्माद्धरिः सर्वदेवनियामकतया सर्वान्तर्यामितया सर्वगतः । तेन अर्चिताः सर्वदेवाः स्युरित्यर्थः ।। ९ ।।

**कृष्णामृतमहार्णवः**

**स्वर्चिते सर्वलोकेशे सुरासुरनमस्कृते ।**
**केशवे कंसकेशिघ्ने न याति नरकं नरः ।। १० ।।**

**ताम्रपर्णी**—भगवदर्चनमावश्यकमिति भावेन तात्पर्यलिङ्गभूतं, पूजाकरणे नरका-भावं मोक्षलक्षणं च फलमाह श्लोकद्वयेन ।। **स्वर्चित इति** ।। नरकं न यातीत्य- नेनान्यथा विपरीतफलं भवतीत्युक्तं भवति ।। १० ।।

**उमर्जी—**सर्वोत्तमत्वात्सर्ववन्द्यत्वार्यर्चनमेवाशेषानिष्टनिवर्तकमित्याह— **स्वर्चित इति** ।। देवदेवेत्यादीनि सर्वोत्तमत्वोपपादकानि । सुरासुरनमस्कृते सुराश्च, असुभिः स्वरूपेन्द्रियैः चिन्मात्रैरेव रमन्त इति असुराः मुक्ताः, असौ मुख्यप्राणे रमन्तीति असुराः प्रह्लादादयो वा, तैर्नमस्कृते । केशी तुरङ्गरूपी दैत्यः। नरकमित्युपलक्षणम् । अशेषानिष्टनिवृत्तिर्भवतीत्यर्थः ।। १० ।।

**उपेन्द्र—**भगवदर्चनमेवाशेषानिष्टनिवारकमित्याह— **स्वर्चित इति** ।। भक्त्यादि-पूर्वकेणेत्यर्थः। भगवदर्चनस्यैवाशेषानिष्टनिवर्तकत्वे निमित्तोपपादकानि विशेष-णानि सुरासुरनमस्कृते सुराश्च असुभिः स्वरूपेन्द्रियैः चिन्मात्रैरेव रमन्ते स्वरूपा-नन्दमनुभवन्तीत्यसुरा मुक्ताः, असौ मुख्यप्राणे रमन्तीत्यसुराः प्रह्लादादय इति वा तैर्नमस्कृते । केशी तुरङ्गरूपी दैत्यः । नरकमित्युपलक्षणं अशेषानिष्टनिवृत्ति-र्भवतीत्यर्थः ।। १० ।।

**कोनेरी—**पूजनफलमाह— **स्वर्चित इति** ।। कंसकेशिघ्ने सुरासुरनमस्कृते सर्व-लोकानामीशे केशवे सम्यक् सर्वोत्तमबुद्ध्या अर्चिते पूजिते सति । नरो नरकं न याति । नराणां कं स्वरूपसुखं यस्मिन् लोके सः नरकः वैकुण्ठादिस्तं प्राप्य न याति । पुनः संसारमिति शेषः । अपुनरावृत्तिलोकं प्राप्नोतीत्यर्थः । भगवदर्चन-फलस्य नरकगमनाभावमात्रोक्तौ तस्याल्पफलत्वेन भगवदर्चनेन विष्णुलोकप्राप्ते-र्वक्ष्यमाणत्वादिति ।। १० ।।

**स्मृ.कृष्णाचार्य—**अर्चनस्य फलान्तरमप्यस्तीति वचनान्तरेणाह— **स्वर्चितेति**।। स्वर्चिते सुष्ठु पूजिते । इतरासाधारण्येन अर्चने निमित्तान्याह सर्वलोकेशेत्यादिविशे-षणचतुष्टयेन ।। **सुरासुरनमस्कृत इति** ।। "असुरूपसुरश्च मुक्तः वन्द्यः स एव" इति निर्णयोक्तदिशा सुरैः सर्वदेवैः संसारिभिः असुरैः मुक्तब्रह्मादिभिश्च नमस्कृते केशवे ।

क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ।
सृष्ट्यादिना वर्तयाति तौ यतः केशवो भवान् ।।

इत्युक्तदिशा ब्रह्मरुद्रनियामके । कंसः प्रसिद्धकंसः केशी तुरङ्गरूपी दैत्यस्तदुभय-हन्तरीत्यर्थः । नरः भक्तः नरकं न यातीत्यर्थः ।। १० ।।

## कृष्णामृतमहार्णवः

**[*][४]सकृदभ्यर्च्य गोविन्दं बिल्वपत्रेण मानवः ।**
**मुक्तिभागी निरातंकी विष्णुलोके चिरं वसेत् ।। ११ ।।**

**ताम्रपर्णी**—बिल्वपत्रेणेत्यर्चनाङ्गकथनम् ।। ११ ।।

**उमर्जी**—भगवदर्चनस्य अतिसौलभ्यमुपपादयन् मुख्यफलमाह— **सकृदिति** ।। त्रिकालार्चनासमर्थः । सकृत् एकवारम् । बिल्वपत्रपदेन तुलस्युपलक्ष्यते ।

बिल्वपत्राच्छमीपत्राज्ञाजीपुष्पात्सरोरुहात् ।
वल्लभं तुलसीपत्रं कौस्तुभादधिकं मम ।। इति स्कान्दोक्तेः ।।

तुलसीं विना पूजनस्य निषिद्धत्वाच्च ।

तुलसीं तु विना स्वर्णकोटिभिः पूजनं नरः ।
करोति यदि मूढात्मा नरकानेव विन्दति ।।
तथा ममापराधी स्यात्तयैव पूजयेद्धरिम् ।। इत्युक्तेः ।।
पापान्मुक्तिं भजतीति मुक्तिभागी ।
रूक्षापनाका स्वातंकज्वलनादहसञ्ज्वराः ।
तापश्च प्रोच्यते सद्भिः दुःखपर्यायवाचकाः ।।

इत्यभिधानादातंकस्तापः, तद्वानातंकी, स न भवतीति निरातंकी । आध्यात्मिकादिक्लेशरहित इति यावत् । चिरं उत्तरावधिरहितकालम् ।। ११ ।।

**उपेन्द्र**—भगवदर्चनसौलभ्यमुपपादयति— **सकृदिति** ।। बिल्वपत्रशब्देन तुलस्युपलक्ष्यते ।

---

[*] अस्य श्लोकस्य आकरः विष्णुरहस्यमिति स्मृतिचन्द्रिकायामुदाहृतः ।।

४. बिल्वपत्रं शमीपत्रं पत्रं भृङ्गमृगांकयोः ।
तमालमालतीपत्रं शस्तञ्च हरिपूजने ।। वामनपुराणे ९५-१५ ।।
भृङ्गराजस्य बिल्वस्य चक्रपुष्पस्य च द्विजाः ।
तथैव बीजपूराणि पत्राणि तु निवेदयेत् ।।
पत्राणि तु सुगन्धीनि पल्लवानि मृदूनि च ।
तेन पुण्यमवाप्नोति पुष्पदानसमुद्भवम् । ।विष्णुधर्मोत्तरे ३-३४१-२०७,२०८ ।।

बिल्वपत्राच्छमीपत्राद्भाजीपुष्पात्सरोरुहात् ।

वल्लभं तुलसीपत्रं कौस्तुभादधिकं मम ।। इति स्कान्दे ।।

तुलसीं विना पूजनस्य निषिद्धत्वाच्च । पापान्मुक्तिं भजतीति मुक्तिभागी । आतंकस्तापः तद्वान् आतंकी स न भवतीति निरातंकी । आध्यात्मिकादिक्लेशरहितः चिरं पूर्वोत्तरावधिरहितकालम् ।। ११ ।।

**कोनेरी**—पूजाकरणप्रकारमाह— **सकृदिति** ।। मानवो गोविन्दं बिल्वपत्रेण सकृदभ्यर्च्य निरातंकी प्रतिबन्धकशून्यः मुक्तिभागी सन् चिरं विष्णुलोके वसेत् वासं करोतीत्यन्वयः ।। ११ ।।

**स्मृ.कृष्णाचार्य**—पूजासाधनं वदन् सकृदभ्यर्चनमात्रेणाप्यनेकफलमस्तीति वचनान्तरेणाह— **सकृदिति** ।। गोविन्दं गोवर्धनधरं वेदप्रतिपाद्यं श्रीकृष्णम् । सकृत् कालत्रयाभ्यर्चनाशक्तो मानवः सकृदेककालं वा । तमभ्यर्च्य मुक्तिभागी तदर्चनद्वारा सकलकर्मक्षयरूपमुक्तिभाक् भवति । ततो मोक्षपर्यन्तं निरातंकी आध्यात्मिकादिव्यथारहितः ततो विरजानदीस्नानेन त्यक्तचरमदेहः विष्णुलोके वैकुण्ठादौ चिरं उत्तरावधिरहितं कालं वसेदित्यर्थः । पूजासाधनेषु तुलसीव्यतिरिक्तपुष्पादिषु मध्ये बिल्वपत्रस्य प्रधानत्वात्तदुक्तिः ।। ११ ।।

## कृष्णामृतमहार्णवः

शंकरः—

**सकृदभ्यर्चितो येन देवदेवो जनार्दनः ।**
**यत्कृत्यं तत्कृतं तेन सम्प्राप्तं परमं पदम् ।। १२ ।।**
[5]**सकृदभ्यर्चितो येन हेलयाऽपि नमस्कृतः ।**
**स याति परमं स्थानं यत्सुरैरपि दुर्लभम् ।। १३ ।।**

**ताम्रपर्णी**—उक्तार्थेऽभियुक्तसम्मतिमाह— **शंकर इत्यादिना** ।। हेलयाऽनादरेणापि । नमस्कृत इत्यर्चनाङ्गान्तरकथनम् । नमस्कारो ह्याद्यन्तयोरर्चना-

---

५. येन केनापि भावेन यस्य कस्यापि मानसम् ।
मयि संयोक्ष्यते न तं नेष्ये ब्रह्मगति पराम् ।। स्कन्दपुराणे २-७-१९-३७ ।।

ङ्गम् । नमस्कारस्य चाष्टाङ्गानि वक्ष्यन्ते । तत्राङ्गलोपेऽप्यङ्गिमात्रानुष्ठानेऽपि सुरैरपि साधनं विना दुर्लभं मोक्षाख्यं स्थानम् । स्वयोग्यं सः भगवदर्चको यातीत्यर्थः ।। १३ ।।

**उमर्जी**—परिवारभूतसुरैः सह भगवान् अर्चित एव महाफलं ददातीत्याह— **सकृदिति** ।। येनार्चकेन सुरैः परिवारभूतैः सह। सहार्थे तृतीया । अभ्यर्चितः। "अङ्गत्वेनैव सम्पूज्या विष्णोराराधने सुराः" इति वचनात् । अर्चनवद्वन्दनमपि महाफलहेतुरिति ज्ञापनाय नमस्कृत इति । हेलया अन्यहेलनया । अन्यहेलनार्थमुक्तम् । अघहरमित्युक्तेस्स अर्चनादिकर्ता पुरुषः अर्चनाद्यकर्तृकैर्दुर्लभमपि परमं स्थानं यातीति सम्बन्धः ।। १३ ।।

**उपेन्द्र**—परिवारभूतसुरैः सह भगवदर्चनं फलसाधनमित्याह— **सकृदिति** ।। येन अर्चकेन । सुरैः परिवारभूतसुरैः सह । सहार्थे तृतीया । अभ्यर्थितः । 'अङ्गत्वेनैव सम्पूज्या विष्णोराराधने सुराः' इति वचनाद्भगवानर्चितो भवति । हेलया अन्यहेलया अन्यहेलनार्थमुक्तमप्यघहरमिति तात्पर्यवचनात् । अर्चनं वन्दनमवश्यं कार्यमिति ज्ञापनाय हेलयापीत्युक्तम् । सः अर्चनादिकर्ता पुरुषः नमनपूजनाद्यकर्तृकैः सुरैरपि दुर्लभमिति ।। १२ ।।

**कोनेरी**—उक्तार्थदाढ्यार्थं रुद्रोक्तिमाह— **शंकर इति** ।। येनाधिकारिणा देवदेवो जनार्दनः । भक्त्या सकृदभ्यर्चितः । तेन यत् कृत्यं मोक्षसाधनत्वेन कर्तव्यं तत्कृतमेव । परमं पदं मुक्तपदं च सम्प्राप्तमेवेत्यन्वयः । येन पुरुषेण हेलया उत्पन्नभक्त्या नमस्कृतश्च । स पुरुषः परमं स्थानं विष्णुलोकं याति । कीदृशं यत् सुरैरपि दुर्लभं बहुकल्पप्रारब्धभोगानन्तरं प्राप्यम् । यद्वा अपिसुरैः गर्हितसुरैः असुरैः दुर्लभं अप्राप्यमित्यर्थः । "यातुधान्यपि सा स्वर्गं" इत्यत्र अपिस्वर्गं गर्हितस्वर्गं नरकमिति तट्टीकोक्तेः ।। १२ ।।

---

५. अङ्गभावेन देवानामर्चनं न निषिद्ध्यते ।
स्वतन्त्रबुद्ध्या यः कुर्यात् ब्राह्मणो नरकं व्रजेत् ।।
तस्मात्तु ब्राह्मणो नित्यं प्रयत्नेनार्चयेद्धरिम् ।
तदाधारणभावेन देवताः परितोऽर्चयेत ।। यतिसंस्कारस्मृतौ १-२६,२७ ।।

**स्मृ.कृष्णाचार्य**—भगवदर्चनस्य मुक्तिहेतुत्वं साक्षाच्छंकरेणाप्युक्तत्वात्तद-र्चनं कार्यमिति तद्वाक्यं पठति— **शंकर इति** ।। सकृदभ्यर्चितः अशक्तेन सकृदभ्यर्चितः भक्त्यैकवारमपि पूजितो हरिः स्वकं स्थानं ददाति । तत्कीदृश-मित्यतः आह—**यत्सुरैरपि दुर्लभमिति** ।। हेलया हासेनापीति भक्तविषयम् । अभक्तस्य तदसम्भवात् ।। १३ ।।

**कृष्णामृतमहार्णवः**

नारदः—

**समस्तलोकनाथस्य देवदेवस्य शार्ङ्गिणः ।**
**साक्षाद्भगवतो विष्णोः पूजनं जन्मनः फलम् ।। १४ ।।**

**ताम्रपर्णी**—नारदवाक्यम् । जन्मनः साक्षान्मुख्यं फलमित्यर्थः ।। १४ ।।

**उमर्जी**—नन्विन्द्राद्यर्चनमन्तरेण कथं स्वर्गादिप्राप्तिरित्यत आह— **समस्तेति**।। सर्वस्वामित्वोपपादकानि विशेषणानि । साक्षाद्भगवत इत्यनेनान्येषां भगवच्छब्द-वाच्यत्वममुख्यया वर्तत इति ज्ञापितं भवति ।

ऐश्वर्यादिगुणैः षड्भिः सामग्र्यात्सर्वदेवताः ।
भगवच्छब्दवाच्याश्च साक्षात्तु भगवान् हरिः ।। इति ।।
निरपेक्षं तु सामग्र्यं हरेस्सर्वाधिकं यतः ।इति कूर्मपुराणोक्तेः ।।

यद्वा । साक्षात् साक्षात्कारेण पूजनमिति वा । सर्वस्वामित्वादिना पूजनमेव जन्मनः फलमित्यर्थः । "परिवारतया ग्राह्या अपि हेयाः प्रधानतः" इत्युक्तेः । स्वर्गादिफलदातृत्वं भगवत एव युक्तमिति भावः ।। १४ ।।

**उपेन्द्र**—नन्विन्द्रादिपूजनेनैव स्वर्गादिप्राप्तिसम्भवात् किमर्थं भगवत्पूजनमित्यतः स्वर्गादिस्वामी भगवानेवेत्याह— **समस्तेति** ।। अस्यैव स्वामित्वोपपादकानि विशेषणानि। साक्षादित्यनेन अन्येषां भगवच्छब्दवाच्यत्वममुख्यमिति ज्ञापयति।

ऐश्वर्यादिगुणैः षड्भिः सामग्र्यात्सर्वदेवताः ।
भगवच्छब्दवाच्याश्च साक्षात्तु भगवान्हरिः ।।
निरपेक्षन्तु सामग्र्यं तस्य सर्वाधिकं यतः ।। इत्युक्तेः ।।

यद्वा साक्षात्कारेण पूजनमित्यन्वयः । यदेव विद्ययेति श्रुतेः । जन्मनः साक्षात्फलमिति वा । अतस्तत्पूजामेव मानुषजन्मनः फलं सम्पादयतीत्यर्थः ।। १४ ।।

**कोनेरी**—नारदवचनमप्याह— **नारद इति** ।। साक्षादनुपचरितभगवच्छब्दवाच्यस्य विष्णोः पूजनं जन्मनः फलम् । उर्वरितपदानामर्थः स्पष्टः ।। १४ ।।

**स्मृ.कृष्णाचार्य**—उक्तार्थे नारदवाक्यं पठति— **नारद इति** ।। समस्तलोकनाथस्येत्यादिविशेषणं विष्णोस्सर्वाधिक्येन तत्पूजनमवश्यं कार्यमिति ज्ञापनार्थम् ।। **जन्मनः फलमिति** ।। दुर्लभस्य मनुष्यजन्मनः भगवदर्चनं महाफलप्रदमित्यर्थः ।। १४ ।।

## कृष्णामृतमहार्णवः

पुलस्त्यः—

❖ [६]**भक्त्या दूर्वांकुरैः पुंभिः पूजितः पुरुषोत्तमः ।**
**हरिर्ददाति हि फलं सर्वयज्ञैश्च दुर्लभम्** ।। १५ ।।

**ताम्रपर्णी**—"तद्विशिष्टं फलं नृणाम्"इत्युक्तार्थेऽर्चनाङ्गान्तरकथनपूर्वं प्रमाणमाह-
-**पुलस्त्य इत्यादिना** ।। भक्त्येत्यन्तरङ्गकथनम् । दूर्वेति, सलिलेनापीति च वाह्याङ्गस्य ।। १५ ।।

**उमर्जी**—भक्त्याद्यर्चनमेव यज्ञाद्यधिकं महाफलमित्याह— **भक्त्येति** ।। भक्तेः प्राधान्यं ज्ञापयन्नाह— **दूर्वांकुरैरिति** ।। अयोग्यैः मोक्षं फलम् । हिशब्दः भक्तेरेव मोक्षसाधनत्वं ज्ञापयति ।। १५ ।।

**उपेन्द्र**—भक्तिपूर्वकार्चनमेव मोक्षसाधनमित्याह— **भक्त्येति** ।। भक्तेः प्राधान्यज्ञापनाय **दूर्वांकुरैरिति** ।। "तदहं भक्त्युपहृतमश्नामि" इति वचनात् । सर्वयज्ञैः दुर्लभं फलं मोक्षम् । हिशब्दः "भक्तिर्मोक्षाय केवला"इति श्रुतिं सूचयति ।। १५ ।।

---

❖अस्य श्लोकस्य आकरः विष्णुधर्मोत्तरः इति स्मृतिचन्द्रिकायां उदाहृतः ।

६. पुष्पालाभेऽपि यो दद्यादपि दूर्वांकुराणि च ।
सोऽपि पुण्यमवाप्नोति हेमदानस्य वै द्विजाः ।।विष्णुधर्मोत्तरं ३-३४१-२०५ ।।

**कोनेरी**—पुलस्त्यवचनेनापि उक्तमर्थं दृढयति— **पुलस्त्य इति** ।। पुरुषोत्तमः क्षराक्षरपुरुषोत्तमो हरिः । पुष्पिः दूर्वांकुरैः भक्त्या पूजितः सन् फलं स्वरूपानन्द-रूपफलं ददाति । कीदृशं सर्वयज्ञैर्दुर्लभम् । चशब्द अप्यर्थे । स्वर्गादिकामनया कृतज्योतिष्टोमादियज्ञैरपि दुर्लभं लब्धुमशक्यमिति ।। १५ ।।

**स्मृ.कृष्णाचार्य**—भगवदर्चनं सर्वयज्ञादिफलापेक्षयाऽधिकमित्यत्र पुलस्त्यवचनं प्रमाणयति— **पुलस्त्य इति** ।। कैस्साधनैः पूजितः फलं ददाति इत्यतः आह– - **भक्त्या दूर्वांकुरैरिति** ।। भक्त्येति अभक्तस्य पूजाफलं नास्तीति ज्ञापयितुम् । तुलसीपुष्पादीनामुपलक्षणम् । अनेन दूर्वांकुरैरिति "पत्रं पुष्प"मिति गीतावाक्य-सम्मतिरुक्ता । सर्वयज्ञैश्च दुर्लभमित्यनेन कर्मसाध्यज्ञानैकसाध्यमोक्षलक्षणफल-मित्युक्तम् ।। १५ ।।

कृष्णामृतमहार्णवः

**विधिना देवदेवेशः शङ्खचक्रधरो हरिः ।**
**फलं ददाति सुलभं सलिलेनापि पूजितः ।। १६ ।।**

**ताम्रपर्णी**—विधिना तन्त्रसारविधिप्रकारेण सुलभं यथा भवति तथा ।। १६।।

**उमर्जी**—विधिपूर्वकार्चनस्य सौलभ्यं मन्दाधिकारिणां क्षिप्रप्रवृत्तये उपपादयति- — **विधिनेति**।। चक्रशङ्खादिधारणविधिना ।

चक्रादिचिह्नहीनस्तु यः पूजयति केशवम् ।
तत्सर्वं विफलं याति पूजामन्त्रजपादिकम् ।।

इत्यादिना निन्दितत्वात् । सुलभं यथा भवति तथा पूजित इति सम्बन्धः । सुलभं अनायासयोग्यं फलमिति वा ।। १६ ।।

**उपेन्द्र**—विधिपूर्वकार्चनमेव फलसाधनमित्याह— **विधिनेति** ।। दीक्षापूर्वकत्व-विधिना—

चक्रचिह्नविहीनस्तु यः पूजयति केशवम् ।
तत्सर्वं विलयं याति पूजामन्त्रजपादिकम् ।। इति निषेधात् ।

**कोनेरी**—।। **विधिनेति** ।। देवदेवेशः शङ्खचक्रगदाधरः हरिः विधिना वेद-तन्त्रोक्तविधिना एकान्तभक्तैः सलिलेनापि पूजितः विपुलं स्वयोग्यं फलं ददातीत्यन्वयः ।। १६ ।।

**स्मृ.कृष्णाचार्य**—दरिद्रस्य भक्तस्य कथं मोक्षलक्षणफलं ददाति इत्यत आह- – **विधिनेति** ।। तन्त्रसाराद्युक्तविधिना दरिद्रेण भक्तेन सुलभं यथा भवति तथा सलिलेनापि अन्नादिनैवेद्यादिविनाऽपि केवलसुलभसलिलेन विधिना पूजितः फलं ददातीति भावः इति ।। १६ ।।

**कृष्णामृतमहार्णवः**

धर्मः—

**नरके पच्यमानस्तु यमेन परिभाषितः ।**
**किं त्वया नार्चितो देवः केशवः क्लेशनाशनः ।। १७ ।।**

**ताम्रपर्णी**—भगवदाराधनस्य नरकनिवर्तकत्वम् । अनाराधने तत्प्राप्तिः । आराधनस्य मोक्षहेतुत्वमन्यथा तदभावः । तदाराधनस्य सौलभ्यमित्युक्तार्थे प्रमाणमाह- – **नरके पच्यमान इत्यादिना श्लोकत्रयेण** ।। १७ ।।

**उमर्जी**—एवं भगवदर्चनस्य महाफलसाधनत्वं अभिधाय तदकरणे विविध-नरकाद्यनुभव इति नारकयमसंवादमाह— **नरक इति** ।। तु विशेषतः पच्यमानः। किमर्थं नार्चितो हरिस्त्वयेति यमेन परिभाषित इत्यन्वयः ।। १७ ।।

**उपेन्द्र**—एवं भगवत्पूजनस्य फलसाधनत्वमभिधाय तदकरणे विविधनरका-द्यनुभव इति नारकयमसंवादमाह— **नरक इति** ।। तु विशेषतः पच्यमानः । किमर्थं नार्चित इति यमेन परिभाषित इत्यन्वयः ।। १७ ।।

**कोनेरी**—धर्मनारकीसंवादकथाव्याजेनाल्पाधिकारिणां विषयविरक्तिं हरौ भक्तिं चोद्बोधयन् यमनारकीसंवादं कथयति— **धर्म इति** ।। नरके यमकिंकरैः पच्यमानो नारकी यमेन परिभाषितः पृष्टः । अभूदिति शेषः । किमिति । हे नारक । क्लेश-नाशनः पापक्लेशनाशनः । देवः क्रीडादिगुणविशिष्टः केशवः किमर्थं त्वया न पूजितः ? पूजितश्चेदेतादृशक्लेशो तव न भवेदिति ।। १७ ।।

**स्मृ.कृष्णाचार्य**—यथाकथञ्चिद्भगवदर्चनमेव कर्तव्यं तदकरणे नरकाद्यनर्थप्राप्तिर्भवतीति नारकीयमसंवादेनाप्याह स एव— **नरके पच्यमान इति** ।। भगवदनर्चननिमित्तेन अधोनरके पच्यमानः मनुष्यादिजीवसङ्घः यमेन परिभाषितः प्रत्युक्तः ।। **किमिति** ।। किं त्वया नरके पच्यमानेन पापकर्मिणा त्वया जीवेन देवः क्रीडादिगुणविशिष्टो हरिः किमर्थं न पूजितः पूज्यो नासीत् । पूजाऽकरणेनानेकविधनरके पच्यमान भवसीति ।। १७ ।।

**कृष्णामृतमहार्णवः**

**[७]द्रव्याणामप्यभावे तु सलिलेनापि पूजितः ।**
**यो ददाति स्वकं स्थानं स त्वया किं न पूजितः ।। १८ ।।**

**उमर्जी**— अर्चनाकरणं फलाभावाद्द्रव्याभावाद्वेति विकल्प्य आद्यं निराकरोति- – **द्रव्याणामिति** ।। अविशेषतः पूजितो भवति। द्वितीयस्याप्युत्तरम् ।। **य इति** ।। यमेनोत्तमसाधनेन परितोषित इति पूर्वेणान्वयः ।। १८ ।।

**उपेन्द्र**— अर्चनाकरणं द्रव्याभावात्फलाभावाद्वेति विकल्प्य निराकरोति— **द्रव्याणामिति**।। तु विशेषतः पूजितो भवतीति शेषः । द्वितीयस्योत्तरं— **य इति** ।। १८ ।।

**कोनेरी**—दरिद्रस्य पूजासाधनद्रव्याद्यभावात्कथमित्यत आह— **द्रव्याणामिति** ।। यो दयालुः श्रीकृष्णः द्रव्याणामपि अभावे भक्त्या अपरोक्षज्ञानवता सलिलेनापि पूजितः स्वकं स्थानं ददाति सः त्वया किं न पूजित इति पूर्ववदर्थो ज्ञेयः।। १८ ।।

**स्मृ.कृष्णाचार्य**—ननु भगवत्पूजासाधनद्रव्याद्यभावाद्धरिर्मया न पूजित इत्यत उक्तम् ।। **सलिलेनापीति** ।। सलिलमात्रेण तत्पूजने किं फलमित्यत उक्तम् ।। **मोक्षं ददातीति** ।। अरे, नारकी जीव, सलिलेन सलिलमात्रेणापि पूजितो हरिः

---

[७] पुष्पालाभेऽपि दद्यानि पत्राण्यपि जनार्दने ।
पत्रालाभे जलं दद्यात्तेन पुण्यमुपाकृते ।। २०५ ।।
पत्रं पुष्पं फलं तोयं भक्त्या देयं जनार्दने ।
तेन लोकानवाप्नोति भक्तिरेवाऽत्र कारणम् ।। २०६ ।। विष्णुधर्मोत्तरे ३-३४१ ।।

स्वकं स्थानं मोक्षं ददाति किल । तादृशो हरिः किमर्थं त्वया न पूजितः । तद-पूजादिना नारकीभावः । इतःपरं जन्मान्तरे वा तदर्चनं कुर्विति भावः ।। १८ ।।

**कृष्णामृतमहार्णवः**

**नरसिंहो हृषीकेशः पुण्डरीकनिभेक्षणः ।**
**स्मरणान्मुक्तिदो नृणां स त्वया किं न पूजितः ।। १९ ।।**

**उमर्जी**—नरकपरिहारोपायमाह— **नरसिंह इति** ।। स्मरणे वैशेष्यं ज्ञापयति ।। **हृषीकेश इत्यादिना** ।। १९ ।।

**उपेन्द्र**—अर्चनस्य नरकपरिहारकत्वे कैमुत्येनाह— **नारसिंह इति** ।। स्मरणान्नारसिंहेत्यादिना नाम्ना "स्मरणान्नरसिंहस्य शक्रो मुक्तो वृहद्वधात्" इत्युक्तेः किमर्थं न पूजित इति यमेन परिभाषित इत्यन्वयः ।। १९ ।।

**कोनेरी—**हृषीकेशः इन्द्रियगणनियन्ता पुण्डरीकनिभेक्षणः नृसिंहः स्मरणात् **भक्त्या अखण्डध्यानात्** नृणां ज्ञानिनां मुक्तिदः सः एतादृशः त्वया किं किमर्थं **न पूजित** इति ।। १९ ।।

**स्मृ.कृष्णाचार्य**—तत्रैवार्थे धर्मवाक्यं प्रमाणयति— **नरसिंह इति** ।। हे नारक हे जीव । हरिः त्वया किमर्थं न पूजितः । भगवतः पूजाकरणमात्रेण नरकोद्धारः कथमित्यत उक्तम् ।। **स्मरणान्मुक्तिद इति** ।। तदपि हरेः कुत इत्यतो नारसिंहेत्यादिविशेषणानि । नृणामिति भक्तानामिति ज्ञेयम् ।। १९ ।।

**कृष्णामृतमहार्णवः**

ब्रह्मा—

**गर्भस्थिता मृता वाऽपि मूषितास्ते सुदूषिताः ।**
**[1]न प्राप्ता यैर्हरेर्दीक्षा सर्वदुःखविमोचनी ।। २० ।।**

**ताम्रपर्णी**—"येन लब्धा हरेर्दीक्षा" इत्यत्र प्रमाणमाह— **गर्भेति** ।। यैः हरेर्दीक्षा न प्राप्ता । ते गर्भस्थिताः तत्तुल्या इत्यादि योज्यम् । मूषिताः अपस्मरादिना प्रज्ञाप्रमोषं प्राप्ताः । सुदूषिताः ब्रह्महत्यादिदोषं प्राप्ताः । तेषां यथा न कर्माधिकारस्तथा

---

१. 'न लब्धा' इति स्मृ.कृ. तथा कृ. पाठः ।

दीक्षारहितानामपीत्यभिप्रायः । यद्वा यैर्हरेर्दीक्षा न प्राप्ता ते गर्भस्थिताः मृताः प्रज्ञाप्रमोषयुक्ता अपि सुदूषिता एव । मातुर्दीक्षाभावे शरीरस्य मृतपुरुषस्य च दूषितत्वमपस्मारादिग्रस्तस्यापि । यैर्विष्णुदीक्षा न प्राप्ता तस्यास्पृश्यत्वादिना दूषितत्वमिति भावः ।। २० ।।

**उमर्जी**—सिंहावलोकनन्यायेन विष्णुदीक्षाऽकरणे निन्दावाक्यान्तरं पठति— **गर्भस्थिता इति** ।। सदा गर्भवासदुःखवन्तः । मूषिताः 'मुष स्तेय' इति धातोः कर्तरि क्तप्रत्ययः । तस्करा भवन्तीति शेषः ।

शङ्खचक्रोर्ध्वपुण्ड्रादिरहितो ब्राह्मणाधमः ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ।।

इत्यादिना दूषिताश्च भवन्ति ।। २० ।।

**उपेन्द्र**—विष्णुदीक्षाऽकरणेऽनर्थपरम्परामाह— **गर्भस्थिता इति** ।। यैर्दीक्षा न प्राप्ता ते गर्भवासदुःखवन्तः । मृताः मरणदुःखवन्तोऽपि मूषिताः 'मुष स्तेय' इति धातोः कर्तरि क्तप्रत्ययः । तस्करा भवन्तीत्यर्थः । सुदूषिताश्च भवन्ति ।। २० ।।

**कोनेरी**—भगवद्दीक्षावतो मुक्तिफलमुक्त्वा तद्रहितानां विपरीतफलं भवतीति ब्रह्मवचनेनाह— **ब्रह्मेति** ।। सर्वदुःखविमोचनी जननमरणसर्वदुःखविमोचनी हरेर्दीक्षा पूर्वोक्तरीत्योभयदीक्षा यैर्न प्राप्ता । ते गर्भस्थिताः तत्समानदुःखयुक्ताः । मृताः मृतदेहवदस्पृश्याः । मूषिताः म्लेच्छादिभिर्वञ्चिताः तज्जातिमनुगताः । पतिता इति यावत् । तेष्वपि ब्रह्महत्यादिना दूषिताः । अनेनेदमुक्तं भवति । यैर्हरेर्दीक्षा न प्राप्ता ते नित्यदुःखयुक्ताः अस्पृश्याः महापातकयुक्ता इव भवन्तीति ।। २० ।।

**स्मृ.कृष्णाचार्य**—सर्वदुःखविमोचकहरेः दीक्षार्चनाद्यकरणे अनर्थश्रवणात्तत्कार्यमिति ब्रह्मणो वाक्यं पठति— **गर्भस्थितेत्यादिना** ।। हरेर्दीक्षा वैष्णवदीक्षा अर्चनादिकञ्च । यैः पापिभिः न लब्धा न कृता । ते गर्भस्थिताः गर्भे नित्यवासिनः । ते मृताः सदा मरणशीलाः । ते मुषिताः स्तेयाः भवन्ति । अत एव विष्णुभक्तैः सुदूषिताः भवन्ति । तस्माद्धरेर्दीक्षार्चनादिकं कार्यमिति तस्य ब्रह्मणो भाव इति ।। २० ।।

## कृष्णामृतमहार्णवः

मार्कण्डेयः—

**सकृदभ्यर्चितो येन देववेदो जनार्दनः ।**
**[1]यत्कृत्यं तत्कृतं तेन सम्प्राप्तं परमं पदम् ।। २१ ।।**

**ताम्रपर्णी**—विष्णुपूजनं जन्मनः फलमिति नारदोक्तार्थ एव प्रमाणान्तरमाह- - **मार्कण्डेय इत्यादिना** ।। २१ ।।

**उमर्जी**—भगवदर्चनेनैव स्ववर्णाश्रमधर्मानुष्ठानफलं भवतीत्याह— **सकृदिति** ।। येन अधिकारिणा । तेन अर्चकेन । यत्कृत्यं स्वानुष्ठेयं तत्सर्वं कृतम् । भवतीति शेषः । परमं पदं वैकुण्ठस्थानं सम्प्राप्तं भवति ।। २१ ।।

**उपेन्द्र**—भगवदर्चनेनैव स्वविहितसर्वधर्मानुष्ठानफलं भवतीत्याह— **सकृदिति** ।। अभीत्युपसर्गवशाद्वैभवेनार्चितः । तेनार्चकेन यत्स्वानुष्ठेयं कृत्यं तत्सर्वं कृतं **भवति । परमं पदं सम्प्राप्तं भवति । भगवद्विषयकार्चनस्यैव मोक्षसाधनत्वज्ञापनाय देवदेव इति विशेषणम्** ।। २१ ।।

**कोनेरी**—"सकृदभ्यर्चित" इति श्लोकेन उक्तार्थदार्ढ्यार्थं पुनरुदाहृतस्तत्कथार्थः ।। २१ ।।

**स्मृ.कृष्णाचार्य**—हरेरर्चनं महाफलप्रदं तस्माद्वैष्णवैः कार्यमिति मार्कण्डेयवाक्यं प्रमाणयति— **सकृदभ्यर्चित इति** ।। येन अधिकारिणा । देवदेवः ब्रह्मादिभ्यः सर्वोत्तमः जनार्दनः । सकृत् एकवारं वा । अभि सम्यक् अर्चितः पूजासाधनद्रव्यैर्यथेष्टं पूजितो हरिः । तेन अधिकारिणा । यत्कृत्यं यत्कर्तव्यं साधनजातं । तत् सर्वं मोक्षसाधनम् । कृतं सम्यगनुष्ठितं भवति । अत एव परमं पदं मोक्षरूपं सम्यक्प्राप्तप्रायम्। तस्मात्तदर्चनं कार्यमिति भावः ।। २१ ।।

## कृष्णामृतमहार्णवः

**धर्मार्थकाममोक्षाणां नान्योपायस्तु विद्यते ।**
**सत्यं ब्रवीमि देवेश हृषीकेशार्चनादृते ।। २२ ।।**

---

१. 'यत्कृतं' इति क्वचित् पाठः ।

**ताम्रपर्णी**—न केवलं मोक्ष एव फलम् । किन्तु चतुर्विधपुरुषार्थो भवतीत्याह-- **धर्मेति** ।। धर्मो धर्मसाध्यः स्वर्गादिः । कामः काम्यं स्रक्चन्दनादि । अन्यश्चासौ उपायश्चान्योपायः । धर्मादीनां हृषीकेशार्चनादृतेऽन्य उपायो न विद्यते। यद्यपि अन्य उपायो विद्यत एव । अन्यथा तद्विधिवैयर्थ्यात् । अथाऽप्यर्चने सत्येवान्यस्योपायत्वं भवति । तदृतेऽन्य उपाय एव न भवतीति भावः । एतेन हृषीकेशार्चनादन्य उपायो नास्तीति पूर्णत्वाद् ऋत इति व्यर्थमिति निरस्तम् ।।२२।।

**उमर्जी**—चतुर्विधपुरुषार्थस्यापि अयमेवोपाय इत्याह— **धर्मेति** ।। निवृत्तिरूपो धर्मः । दैवमानुषरूपोऽर्थः । "दैवो विद्या हिरण्यादिः मानुषः परिकीर्तितः" इति वचनात् । कामः भक्त्यादिकामना । "इच्छा च भक्त्यादेर्युक्ता" इत्याद्युक्तेः । तेषां प्राप्त्यर्थम् । देवेशेति रुद्रं प्रति मार्कण्डेयसम्बोधनम् ।। २२ ।।

**उपेन्द्र**—चतुर्विधपुरुषार्थस्याप्ययमेवोपाय इत्याह— **धर्म इति** ।। निवृत्तिरूपो धर्मः । "निवृत्तं सेवमानस्तु" इति वचनात् । दैवो मानुषरूपोऽर्थः । "दैवो विद्या हिरण्यादिः मानुषः परिकीर्तितः" इत्युक्तेः । कामः भक्त्यादिकामना । "इच्छा च भक्त्यादेर्युक्ता" इत्याद्युक्तेः । तेषां प्राप्त्यर्थं देवदेवेशेति मार्कण्डेयसम्बोधनम् । सत्यं ब्रवीमीत्यनेन न तत्स्तुतिप्रपञ्चनमिति ज्ञायते ।। २२ ।।

**कोनेरी**—हे देवेश हृषीकेशार्चनादृते धर्मार्थकाममोक्षाणां प्राप्तयेऽन्योपायो न विद्यते नास्तीति । हे देवेश इति इन्द्रादीन् प्रति ब्रह्मसम्बोधनम् ।। २२ ।।

**स्मृ.कृष्णाचार्य**—चतुर्विधपुरुषार्थस्यान्तरङ्गसाधनत्वाद्भगवदर्चनं सर्वथा कार्यमिति स एवाह— **धर्मार्थ इति** ।। धर्मः निवृत्तधर्मः । कामो विष्णुभक्त्यादौ कामः । अर्थः भगवत्पूजासाधनभूतोऽर्थः । मोक्षः कर्मक्षयद्वारा स्वरूपानन्दाविर्भावः । एतेषां चतुर्णाम् अन्य उपायः प्रधानसाधनं न विद्यते । साधनान्तराणां सत्वात्कथं न विद्यत इत्यत उक्तम् ।। **हृषीकेशार्चनादृत इति** ।। हृषीकेशः सर्वेन्द्रियनियामकः हरिः तस्य अर्चनात् । भक्त्यादियुक्तभगवत्प्रीतिकरोत्तमपूजनात् ऋते । अन्यन्मुख्यं

---

८. नित्यं धर्मार्थकामेषु युज्येत नियतो द्विजः ।
न धर्मवर्जितं काममर्थं वा मनसा स्मरेत् ।। कूर्मपुराणे २-१६-३९ ।।

साधनं नास्तीति भावः । इदं स्तुतिपरं न मन्तव्यमित्याह— **सत्यमिति** ।। देवेशेति रुद्रं प्रति मार्कण्डेयवचनम् ।। २२ ।।

**कृष्णामृतमहार्णवः**

***तस्य यज्ञवराहस्य विष्णोरमिततेजसः ।**
**प्रणामं ये प्रकुर्वन्ति तेषामपि नमो नमः ।। २३ ।।**

**ताम्रपर्णी**—"तेऽपि वन्द्या यथा हरिः"इत्युक्तार्थे प्रमाणमाह— **तस्येति** ।। यज्ञवराहस्य यज्ञाङ्गस्रुक्स्रुवदर्भादिजनकस्य तदाश्रयस्य यज्ञपूज्यस्य वराहस्येत्यर्थः। प्रणामं तत्पूर्वमर्चनम् । अर्चनाङ्गानां वराहाङ्गाज्ञातत्वं चानुसन्धेयमिति भावेन यज्ञवराहस्येत्युक्तम् ।। २३ ।।

**उमर्जी**—अर्चनवन्नमनमप्यवश्यं कर्तव्यमित्यभिप्रेत्य तत्कर्तृणां नमनप्रतिपादकं मार्कण्डेयवाक्यं पठति— **तस्येति** ।। अर्चनादेः फलदातुः यज्ञवराहस्य यज्ञेशस्य **वराहस्य । "यज्ञेशं सौकरं वपुः"** इति भागवतोक्तेः । यज्ञसाधनोत्पादकस्य **वराहस्य** "विधून्वतः प्रयागे तु वराहवपुषाऽभवन्" इत्युक्तेः । नमनकर्तारो भक्ता एव नम्या इति आदराद्द्विरुक्तिः । अवधारणार्थोऽपिशब्दः ।। २३ ।।

**उपेन्द्र**—अर्चनं वन्दनमावश्यकमित्यभिप्रेत्य तत्कर्तृणां नमनप्रतिपादकं मार्कण्डेय-वाक्यं पठति— **तस्येति** ।। अर्चनेन पुरुषार्थदातुः यज्ञवराहस्य यज्ञेश्वरवराहस्य। "यज्ञेशः सौकरं वपुः" इति भागवते । यज्ञसाधनोत्पादकस्य वा "विधून्वतः प्रयागे तु वराहवपुषाऽभवन्" इत्युक्तेः । नमनकर्तारो भक्ताः परमपूज्या इत्यादराद् द्विरुक्तिः ।। २३ ।।

**कोनेरी**—अर्चनफलमुक्त्वा प्रणामफलमाह— **तस्येति** ।। अमिततेजसः अमितसामर्थ्योपेतस्य । विष्णोः व्याप्तस्य यज्ञवराहस्य । प्रणामं भक्त्या ये कुर्वन्ति । तेषामपि नमो नम इति । विष्णुदासा इति वन्दनीया इति भावः ।। २३ ।।

---

*अयं श्लोकः वराहपुराणे २११-८६ ।।

**स्मृ.कृष्णाचार्य**—विष्णोरर्चनैकदेशं प्रणाममपि ये कुर्वन्ति तेऽपि नमस्कार्याः । किमुतार्चनकर्तारो महात्मान इत्यभिप्रेत्य स्वयं तान्नमति— **तस्य यज्ञवराहस्येति** ।। भगवदर्चनस्य तादृशमाहात्म्यं कुत इत्यतः यज्ञवराहस्येत्यादिविशेषणत्रयमिति । तेषां प्रणामकर्तृणां महात्मनामपि नमो नम इति आदराद्द्विरुक्तिः ।

एकोऽपि कृष्णस्य सकृत्प्रणामो दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामो न पुनर्भवाय ।।

इत्याद्यभिप्रायेण कार्यमिति भावः ।। २३ ।।

## कृष्णामृतमहार्णवः

मरीचिः—

***अनाराधितगोविन्दैर्नरैः स्थानं नृपात्मज ।**
**नहि सम्प्राप्यते श्रेष्ठं तस्मादाराधयाच्युतम् ।। २४ ।।**

**ताम्रपर्णी**—मोक्षतदभावयोः अर्चनान्वयव्यतिरेकानुविधायित्वादवश्यं तदनुष्ठेयमिति भावेन मरीच्यत्रिवचने पठति— **मरीचिरित्यादिना** ।। २४ ।।

**उमर्जी**—"स्थानमग्र्यं समस्तेभ्यो स्थानेभ्यो द्विजसत्तम" इत्यादि उत्तमस्थानार्थं पृच्छन्तं ध्रुवं प्रति उत्तररूपं विष्णुपुराणस्थं मरीच्यादिपञ्चानां वाक्यं पठति— **अनाराधितगोविन्देत्यादिना** ।। गोविन्दो यैर्नरैरनाराधितः पूजितो न भवति । पूर्वोक्तार्चनादिषट्केन । तैस्तथोक्तैरित्यर्थः । नृपात्मजेति ध्रुवं प्रति मरीचेः सम्बोधनम् ।। २४ ।।

**उपेन्द्र**—"स्थानमग्र्यं समस्तेभ्यः स्थानेभ्यो द्विजसत्तम" इत्यादिना उत्तमस्थानार्थं उपायं पृच्छन्तं ध्रुवं प्रत्युत्तररूपं विष्णुपुराणोक्तं मरीच्यादीनां वाक्यं पठति— **अनाराधितगोविन्दैरित्यादिना** ।। अनाराधितो गोविन्दो यैर्नरैः । नहि सम्प्राप्यते। नृपात्मजेति ध्रुवं प्रति सम्बोधनम् ।। २४ ।।

**कोनेरी**—हर्यर्चनविषये मरीचिवचनसम्मतिमाह— **मरीचिरिति** ।। हे नृपात्मज! पाण्डुपुत्र! अनाराधितः गोविन्दो यैस्ते अनाराधितगोविन्दाः । ते च ते नराश्च तैः ।

---

* अय श्लोकः विष्णुपुराणे १-११-४२ ।

श्रेष्ठं दुःखरहितम् । भगवत्सम्बन्धिस्थानं यस्मान्न प्राप्यते तस्मादच्युतं आराधयेति । हिशब्दः प्रसिद्धिद्योतकः ।। २४ ।।

**स्मृ.कृष्णाचार्य**—भक्तानां भगवदर्चनाकरणे स्वयोग्यमुक्तिरूपस्थानं न भवेत् स्मात्तदर्चनं कार्यमित्यत्र मरीचिवाक्यं प्रमाणयति— **अनाराधितेति** ।। अनाराधितः अपूजितः गोविन्दः यैर्नरैर्योग्यमनुष्यैः श्रेष्ठं स्थानं वैकुण्ठादि न सम्प्राप्यते हि । ततः किमित्यत उक्तम् ।। **तस्मादिति** ।। तस्मादच्युतमाराधय । तथा सति स्वयोग्यस्थानं भवतीति भावः । नृपात्मज इति कस्यचिद्राज्ञः सुतं प्रति मरीचेस्सम्बोधनम् ।। २४ ।।

### कृष्णामृतमहार्णवः

अत्रिः—

> ***परः पराणां पुरुषस्तुष्टो यस्य जनार्दनः ।**
> **स चाप्नोत्यक्षयं स्थानमेतत्सत्यं मयोदितम् ।। २५ ।।**

**ताम्रपर्णी**—तुष्टो अर्चनयेति शेषः ।। २५ ।।

**उमर्जी**— ।। **पर इति** ।। पराणां ब्रह्मादीनां परः पुरुषः उत्तमः पुरुषः इत्यन्वयः । अत्र परेषामिति वक्तव्ये पराणामिति सर्वनामसंज्ञामन्तरेण प्रयोगः परशब्दवाच्यब्रह्मादीनां लोकोत्तमत्वज्ञापनार्थः । चशब्द एवार्थे । सः पुरुष एवेत्यर्थः । फलसन्देहो न कार्य इत्याह— **सत्यमिति** ।। २५ ।।

**उपेन्द्र**—परेषामिति वक्तव्ये पराणामिति सर्वनामसंज्ञामन्तरेण प्रयोगः परशब्दवाच्यब्रह्मादीनामुत्तमत्वज्ञापनार्थः । चशब्द एवार्थे । यस्य तुष्टो भवति स एवेत्यर्थः । नाविश्वसनीयमिति ज्ञापनाय सत्यमित्युक्तम् ।। २५ ।।

**कोनेरी**—अत्रिवचनमप्याह— **अत्रिरिति** ।। पराणां ब्रह्मादीनाम् । परः उत्तमः । जनार्दनः यस्य तुष्टः । सः अक्षयं नाशरहितम् । स्थानं आप्नोति । 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतन' इति वचनात् । मयोक्तमेतद्वचनं सत्यं नानृतमिति ।। २५ ।।

---

* अयं श्लोकः विष्णुपुराणे १-११-४३ ।

**स्मृ.कृष्णाचार्य**— भगवदर्चनस्य भगवत्प्रीतिकारणत्वात्सर्वैस्तत्कार्यमित्यत्र वाक्यं पठति— **परः पराणामिति** ।। यस्याधिकारिणः भगवाञ्जनार्दनः सम्यग-र्चनेन सन्तुष्टः स चाधिकारी अक्षयं स्थानं वैकुण्ठं प्राप्नोति । जनार्दनतुष्टेः तत्फल-कत्वं कुत इत्यतः परः इत्यादिविशेषणम् । एतत्तु मयोक्तमौपचारिकं न भवती-त्याह— **एतत्सत्यमिति** ।। एतदित्यस्य विवरणं मयोदितमिति ।। २५ ।।

## कृष्णामृतमहार्णवः

अङ्गिराः—

***यस्यान्तः सर्वमेवेदमच्युतस्याव्ययात्मनः ।**
**तमाराधय गोविन्दं स्थानमग्र्यं यदिच्छसि ।। २६ ।।**

**ताम्रपर्णी**— सर्वदेवेशेऽर्चिते सर्वेऽपि देवाः स्वर्चिताः स्युः । तत्प्रतिमात्वेन तदन्त-र्भूतत्वात्पृथङ्नार्चनीयाः इत्युक्तार्थे प्रमाणमाह— **यस्यान्तरिति** ।। इदं सर्वं देव-जातम् । अच्युतस्य वृद्धिह्रासरहितस्य । स्वरूपतो नाशरहितस्य वा । **अव्ययात्मनः** अव्ययः आत्मा देहो यस्य तस्य वा । यस्य गोविन्दस्यान्तः । तदन्तर्भूतमिति यावत् तत्प्रतिमात्वात् । अङ्गावबद्धेति न्यायेन तदङ्गाश्रितत्वा-त्तज्जन्यत्वाद्वा । यद्वेदं द्युभ्वादिकं यस्यान्तः यदाश्रितमिति योज्यम् । तथाच सर्वप्रधानत्वात्तस्यार्चनीयत्वमिति भावः ।। २६ ।।

**उमर्जी**— अच्युतस्य चतुर्विधनाशरहितस्य । अव्ययात्मनः अव्ययं आदिमध्या-न्तरहितं आत्मा स्वरूपं यस्य । "अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्ययः" इत्युक्तेः । अवयवतोऽपि नाशरहितः आत्मा देहो यस्येति वा । यस्यान्तः उदरान्तः । इदं प्रमाणप्रमितम् । जगद्वर्तत इति शेषः ।। २६ ।।

**उपेन्द्र**— अच्युतस्य चतुर्विधनाशरहितस्य "अनित्यत्वं देहहानि"रित्युक्तेः । अव्ययः आदिमध्यान्तरहितस्वरूपं यस्य । "अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्ययः" इत्युक्तेः । अवयवतो नाशरहितं आत्मा देहो यस्येति वा । यस्य भग- वतः

---

* अयं श्लोकः विष्णुपुराणे १-११-४४ ।

अन्त उदरान्त एव इदं प्रमाणप्रसिद्धम् । जगत् वर्तत इति शेषः । सर्वाधारत्वात् । अर्चनं फलसाधनमिति भावः ।। २६ ।।

**कोनेरी**—अङ्गिरोक्तिमप्याह— **अङ्गिरा इति** ।। यदि अग्र्यं स्वरूपानन्दप्रदं स्थानं इच्छसि । अव्ययात्मनः अच्युतस्य न विद्यते च्युतिः प्राप्तस्थानाद्यस्मात्सोऽच्युतः तस्य हरेः । अन्तः इदं वर्तत इति निश्चित्य । गोविन्दं गोभिर्वेदवाक्यैर्ज्ञेयं हरिम् आराधयेति ।। २६ ।।

**स्मृ.कृष्णाचार्य**—भगवदर्चनविषय एव अङ्गिरसो वाक्यं प्रमाणयति— **यस्येति** ।। इदं सर्वं रमाब्रह्मादि सर्वं जगत् । यस्याच्युतस्य चतुर्विधनाशरहितस्य अव्ययात्मनः देहतोऽपि नाशरहितस्य विष्णोस्तदधीनतया उदरे वा वर्तते तं गोविन्दमाराधय भक्तिश्रद्धापूर्वकमर्चनं कुरु । कुत इत्यत आह— **स्थानमग्र्यं यदीच्छसीति** ।। स्थानं वैकुण्ठादि । तदिच्छा कुतः कार्येत्यत आह— **अग्र्यमिति** ।। वैकुण्ठस्थानस्याग्र्यत्वं कुत इत्यत उक्तम् ।। **अच्युतस्याव्ययत्मन इति** ।। अच्युतस्याव्ययात्मनः देहतो नाशरहितस्य विष्णोरधीनतया अधिकं स्थानं यत इति ।। २६ ।।

### कृष्णामृतमहार्णवः

पुलस्त्यः—

> ***परं ब्रह्म परं धाम योऽसौ ब्रह्म सनातनम् ।**
> **तमाराध्य हरिं याति मुक्तिमप्यतिदुर्लभाम् ।। २७ ।।**

**ताम्रपर्णी**—"धर्मार्थकाममोक्षाणां नान्योपायस्तु विद्यते" इत्युक्तमर्थं कैमुत्येन प्रमाणान्तरेणाह— **पुलस्त्य इति** ।। योऽसौ हरिः परं सर्वजगद्विलक्षणं सर्वोत्तमम् । ब्रह्म पूर्णम् । परं धाम उत्तमतेजोरूपम् । तेजःस्वरूपं च गृहं प्राज्ञैर्धामेति कथ्यत इति स्मृतेः । 'न तत्र सूर्यो भाति'इत्यादिश्रुतेश्च । तं सनातनं नित्यं ब्रह्म हरिमित्यनुवादः । यद्वा ब्रह्मपरमित्येकं पदम् । चित्प्रकृतेर्जीवसमुदायाच्चतुर्मुखाच्च परमित्यर्थः । आद्यस्य परमित्यस्य धामेत्यनेनान्वयः । ब्रह्मसनातनमित्येकं पदं

---

* अयं श्लोकः विष्णुपुराणे १-११-४५ ।

वा । वेदाख्येन नादेन शब्देन सहितं तत्प्रतिपाद्यमित्यर्थः । "सनातन एव सनादन" इत्यन्यत्रोक्तत्वात् ।। २७ ।।

**उमर्जी— ।। परमिति** ।। सनातनं सदैकप्रकारम् । ब्रह्म वेदः । "ब्रह्म वेदस्तपस्तत्त्वम्" इत्युक्तेः । योऽसौ मुख्यतः वेदप्रतिपाद्यः तं आराध्य इति सम्बन्धः। असौ मुख्यप्राणे आराध्येति वा । अपिरनुक्तसमुच्चये । अग्र्यं स्थानं मुक्तिमपीत्यर्थः ।। २७ ।।

**उपेन्द्र**—परं ब्रह्म परब्रह्मस्वरूपं परं धाम मुख्याश्रयः । परं अप्राकृतत्वेन सर्वोत्तमं धामत्रयं यस्येति वा । सनातनं सदैकप्रकारं ब्रह्म वेदराशिः मुख्यतो वेदप्रतिपाद्य इत्यर्थः। ब्रह्मणः चतुर्मुखस्य पितरं तातम् । असौ मुख्यप्राणे "वायौ मुख्यधिये"त्युक्तेः । अनुक्तसमुच्चायकोऽपिशब्दः अग्र्यं स्थानं मुक्तिमपीत्यर्थः ।। २७ ।।

**कोनेरी**—पुलस्त्यवचनेनापि इममर्थं दृढयति— **पुलस्त्य इति** ।। यः अनन्तानन्तवेदराशिप्रतिपाद्यः बिम्बरूपो हरिः । असावेव परं ब्रह्म मुख्यब्रह्म

ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते ।
असम्पूर्णाः परे यस्मादुपचारेण वा भवेत् ।। इत्युक्तेः ।।

"बृहजाति" इति सूत्रात् । अन्यत्र ब्रह्मशब्दस्य वृत्तावपि उपचारेण अमुख्यया वृत्त्या वृत्तित्वं भवति । परममुख्यवृत्त्या वृत्तित्वमिति ज्ञेयम् । परं धाम परेषां मुक्तानां धाम आश्रयो । ब्रह्म गुणपूर्णम् । "अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः" इति श्रुतेः सनातनं अनाद्यनन्तकाले विद्यमानम् । एतादृशं तं हरिं आराध्य । ब्रह्माद्यधिकारिणः अतिदुर्लभां बहुजन्मप्रयत्नसाध्यां मुक्तिं यान्ति । प्रारब्धभोगक्षपणानन्तरमिति शेषः । अपिपदेन प्रारब्धभोगदशायामपि हरिमाराध्य प्रारब्धकर्मप्राप्यसत्यलोकादिलोकाधिपत्यरूपमुक्तिं यान्तीति सूचयति । उक्तं च चतुर्थे स्कन्धे प्राचेतसाख्याने ।

स्वकर्मनिष्ठः शतजन्मभिः पुमान्विरिञ्चितामेति ततः परं हि माम् ।
अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाहं विविधैः कलात्यय ।।
—इति ।। २७ ।।

**स्मृ.कृष्णाचार्य**—भगवदर्चनस्य सर्वदुर्लभमोक्षसाधनत्वात्सर्वैः कार्यमिति पुलस्त्यवाक्यं प्रमाणयति— **परं ब्रह्मेति** ।। हरिमाराध्य तत्प्रसादेन अतिदुर्लभां मुक्तिं यातीत्यर्थः । हर्याराधनस्य दुर्लभमुक्तिप्रापकत्वं कुत इत्यतः, परं ब्रह्मेत्यादि-विशेषणानि । परं ब्रह्म सर्वोत्तमं सर्वगुणपूर्णम् । परं धाम अप्राकृतवैकुण्ठादि धाम । अप्राकृतमुक्ताश्रयश्च ब्रह्म सनातनं ब्रह्मणोऽपि सनातनमनाद्यन्तकालीनम् । एतादृशो योऽसौ हरिस्तमाराध्येत्यर्थः। मुक्तिस्थानं कथं यातीत्यत आह— **हरिं यातीति** ।। एतादृशहर्यर्चनेन तं हरिं प्रथमतः प्राप्य तदनुज्ञया मुक्तिं स्वयोग्यमुक्तिं प्राप्नोतीति भावः ।। २७ ।।

## कृष्णामृतमहार्णवः

पुलहः—

*** [१]ऐन्द्रमिन्द्रः परं स्थानं यमाराध्य जगत्पतिम् ।**
**प्राप यज्ञपतिं विष्णुं तमाराधय सुव्रत ।। २८ ।।**

**ताम्रपर्णी**—मुक्तिमपि प्राप्नोति किमु पदान्तरमित्युक्तेऽर्थे प्रमाणान्तरमाह— **पुलह इति** ।। ऐन्द्रम् इन्द्राणां क्लृप्तम् ।। २८ ।।

**उमर्जी**—इन्द्रः शतक्रतुभिराराध्य ऐन्द्रं स्वर्गं प्रापेति सम्बन्धः । सुव्रतेति ध्रुवं प्रति सम्बोधनम् ।। २८ ।।

**उपेन्द्र**—इन्द्रः शतक्रतुभिराराध्य । ऐन्द्ररूपभोग्यं स्वर्गम् ।। २८ ।।

**कोनेरी**—उक्तार्थं स्पष्टयति— **ऐन्द्रमिति** ।। हे सुव्रत ! इन्द्रः यं जगत्पतिं आराध्य परमुत्तमं स्थानं स्वर्गाख्यं ऐन्द्रं इन्द्रस्वामिकं प्राप । तं यज्ञपतिं विष्णुमाराधयेति ।।

**स्मृ.कृष्णाचार्य**—भगवदाराधनस्य स्वपदप्राप्त्यर्थं इन्द्रेण कृतत्वश्रवणात्तदाराधनं कार्यमिति पुलहवाक्येनाह — **ऐन्द्रमिति** ।। इन्द्रः प्रसिद्धेन्द्रः । परं उत्कृष्टं । ऐन्द्रं पूर्वेन्द्रसमधिष्ठितस्थानम् । जगत्पतिं सर्वजगतः पतिं स्वामिनं । यज्ञपतिं विष्णुं शत-

---

* अयं श्लोकः विष्णुपुराणे १-११-४७ ।

१. इष्ट्वा यमिन्द्रो यज्ञानां शतेनामरराजताम् ।
अवाप तमनन्तादिमहं द्रक्ष्यामि केशवम् ।। ब्रह्मपुराणे ८३-७ ।।

क्रतुभिराराध्य सम्यगर्चनं कृत्वा प्राप । तं विष्णुं त्वमपि मोक्षे वैकुण्ठादिस्थानप्राप्त्यर्थं आराधय सम्यगर्चनं कुरु इति कञ्चन प्रति पुलहवाक्यम् । यद्वा इन्द्रः यं विष्णुमाराध्य ऐन्द्रं इन्द्रपदस्थैः प्राप्यं परं पदं स्थानं भगवत्सायुज्यलक्षणस्थानं प्राप । तादृशं विष्णुं स्वयोग्यवैकुण्ठादिप्राप्त्यर्थं त्वमप्याराधयेति ।। २८ ।।

**कृष्णामृतमहार्णवः**

***प्राप्नोत्याराधिते विष्णौ मनसा यद्यदिच्छति ।**
**त्रैलोक्यान्तर्गतं स्थानं किमु [1]लोकोत्तरोत्तरम् ।। २९ ।।**

**ताम्रपर्णी**—कैमुत्येनेन्द्रादिपदप्राप्तिमाह— **प्राप्नोतीति** ।। विष्णावाराधिते सति त्रैलोक्यान्तर्गतं विषयजातं मनसा यद्यदिच्छति तत्तत्प्राप्नोति । लोकानामुत्तमोत्तमं स्थानमाप्नोतीति किमु वाच्यम् ।। २९ ।।

**उमर्जी**— ।। **प्राप्नोतीति** ।। मनसा यद्यदिच्छति इच्छापूर्वकप्रवृत्तकर्मणा त्रैलोक्या-न्तर्गतं स्थानं प्राप्नोतीति सम्बन्धः । निवृत्तकर्मणा लोकोत्तरोत्तरान् । उत्तमोत्तमान् प्राप्नोतीति किमु । "सकामेभ्योऽमितगुणाः याकामैस्तु कृताः क्रियाः" इत्युक्तेः। विष्णौ आराधिते सति लोकोत्तरोत्तरान् प्राप्नोतीति किमु । त्रैलोक्यान्तर्गतमिति वान्वयः ।। २९ ।।

**उपेन्द्र**—मनसा आराधिते सतीत्यन्वयः। इच्छापूर्तिप्रवृत्तकर्मणा त्रैलोक्यान्तर्गतं स्थानं प्राप्नोति । निवृत्तकर्मणा तु त्रैलोक्योत्तरोत्तरान् प्राप्नोतीति किमु । "सकामे-भ्योऽखिलगुणा याऽकामैस्तु कृताः क्रियाः" इत्युक्तेः । विष्णावाराधिते सति लोकोत्तरोत्तरान्प्राप्नोतीति किमु त्रैलोक्यान्तर्गतमिति वा अन्वयः ।। २९ ।।

**कोनेरी**—येनाधिकारिणा विष्णुराराधितः सोऽधिकारी त्रैलोक्यान्तर्गतं स्वयोग्य-स्थानं यद्यदिच्छति तत्तत्स्थानं प्राप्नोति । स्वयोग्यतानुसारेण लोकोत्तरं स्थानं प्राप्नोतीति किं वक्तव्यमिति ।। २९ ।।

---

* अयं श्लोकः विष्णुपुराणे १-११-४८ ।

१. 'लोकोत्तरोत्तरान्' इति उम. तथा उपे. पाठः ।।

**स्मृ.कृष्णाचार्य**—विष्ण्वाराधिते सति पूजासाधनद्रव्यैः प्रवृत्तकर्मणा सम्यगर्चिते सति मनसा यद्यदिच्छति यद्यत् त्रैलोक्यान्तर्गतं स्वर्गमर्त्यपातालान्तर्गतं स्थानं तत्तन्मनसा वाञ्छितं स्वयोग्यं पदं प्राप्नोति किल । निवृत्तकर्मणा भक्त्याद्यतिशयेन विष्ण्वाराधिते सति लोकोत्तरोत्तरं स्वर्गादिलोकापेक्षया उत्तरोत्तरमुपर्युपरि विद्यमानं लोकं वैकुण्ठादिलोकं भगवदर्चकोऽधिकारी प्राप्नोतीति किमु वक्तव्यमित्यर्थः । यद्वा विष्ण्वाराधिते सति लोकोत्तरोत्तरं वैकुण्ठं प्राप्नोतीति किमु त्रैलोक्यान्तर्गतं स्थानं प्राप्नोतीत्यर्थः ।। २९ ।।

### कृष्णामृतमहार्णवः

**[1]येऽर्चयन्ति सदा विष्णुं शङ्खचक्रगदाधरम् ।**
**सर्वपापविनिर्मुक्ताः परं ब्रह्म विशन्ति ते ।। ३० ।।**

**ताम्रपर्णी**—संस्मृत इत्युपक्षिप्तं स्मरणमवश्यं कर्तव्यमिति भावेन फलमाह— - **ये स्मरन्तीत्यादिश्लोकत्रयेण** ।। परं ब्रह्म नारायणरूपं 'ब्रह्म वा इदमग्र आसीत्' ब्रह्म नारायणाभिधं नारायणाख्यं परं ब्रह्मैव तदेव सत्यं वासुदेवाख्यमासीदित्यादेः ।। ३० ।।

**उमर्जी**—नित्यं भगवदर्चकाणां भगवत्प्राप्तिप्रकारमाह— **येऽर्चयन्तीति** ।। ये अपरोक्षज्ञानिनः । विरजास्नानेन सर्वपापविनिर्मुक्ताः । "प्रारब्धकर्मनाशस्तु विरजातरणावधिः" इत्युक्तेः ।। परं ब्रह्म अंशिनं विशन्ति ।। ३० ।।

**उपेन्द्र**—भगवदर्चकाणां मुक्तिप्राप्तिप्रकारमाह— **येऽर्चयन्तीति** ।। सदा नैरन्तर्येणार्चयन्ति । तेऽधिकारिणः विरजास्नानेन सर्वपापविनिर्मुक्ताः "प्रारब्धकर्मनाशस्तु विरजातरणावधि" इत्युक्तेः ।। ३० ।।

**कोनेरी**—ये ज्ञानिनः शङ्खचक्रगदाधरं विष्णुं व्याप्तं हरिं स्मरन्ति अपरोक्षीकृत्य ध्यायन्ति । ते सर्वे पापविनिर्मुक्ताः परं ब्रह्माख्यं विशन्ति । "सर्वात्मके ब्रह्मणि वासुदेवे एतां गतिं भागवतो गतो यः । सर्वे पुनर्नेह विषज्जतेऽङ्ग" इति द्वितीयस्कन्धभागवतोक्तेरिति ।। ३० ।।

---

१. 'ये स्मरन्ति' इति कोनेरी पाठः ।।

**स्मृ.कृष्णाचार्य**—भगवदाराधनस्य ऐहिकामुष्मिकपुरुषार्थप्रदत्वात्तदाराधनमवश्यं कार्यमिति स एवाह—**येऽर्चयन्तीति** ।। शङ्खचक्रगदाधरं विष्णुमर्चयन्ति । ते सर्वे भगवदर्चनमहिम्ना सर्वेभ्यः कायिकवाचिकमानसिकेभ्यः पापेभ्यः अपरोक्षज्ञानेन विनिर्मुक्ता भवन्ति । ततः परं ब्रह्म सर्वोत्तमं ब्रह्म गुणपरिपूर्णं विष्णुं विशन्ति वैकुण्ठं प्राप्नुवन्तीत्यर्थः ।। ३० ।।

**कृष्णामृतमहार्णवः**

**[१०]ततोऽनिरुद्धं [१]देवेशं प्रद्युम्नञ्च ततः परम् ।**
**ततस्संकर्षणं देवं वासुदेवं परात्परम् ।। ३१ ।।**
**वासुदेवात्परं नास्ति इति वेदान्तनिश्चयः ।**
**वासुदेवं प्रविष्टानां पुनरावर्तनं कुतः ।। ३२ ।।**

**ताम्रपर्णी**—विशन्तीत्यस्यानिरुद्धमित्यादौ सर्वत्र सम्बन्धः ।। ३१ ।। वासुदेवात्परं रूपान्तरं प्राप्यं नास्तीत्यर्थः । ननु "एतमन्नमयमात्मानमुपसंक्रम्ये"-त्यारभ्य "एतमानन्दमयमात्मानमुपसंक्रामती"त्यन्तेन तैत्तरीयोपनिषदि अनिरुद्धस्य प्रथमप्राप्यत्वं नारायणस्य चरमप्राप्यत्वमुक्तम् । तथाच विरोध इति चेत्स-त्यम्। 'शिरो नारायणः पक्षो वासुदेवः शिरोऽपि वा' इतिवदधिकारिभेदेनोपपत्तेः। अधिकार्यैक्येऽपि तत्तदुपासनाफलभेदेनाविरोधात् । ननु तथाऽपि बृहद्भाष्ये—

गायत्री त्रिपदं ज्ञेयमनिरुद्धादिकं त्रयम् ।
ब्रह्मा व्याप्नोति मुक्तः सन् वासुदेवं न कश्चन ।।
लोकस्थमनिरुद्धं च प्रद्युम्नं वेदगं तथा ।
संकर्षणं वायुसंस्थमाप्य ब्रह्मा विमुक्तिगः ।।

---

१. 'जीवेशं' इति उपं. पाठः ।।

१० एकान्तभावोपगता ये भवन्तीह मानवाः ।
अकामाद्य जगन्नाथमर्चयन्ति सदा च ये ।। २५ ।।
न यान्ति देहमुत्सृज्य तद्द्वीपं श्वेतसंज्ञितम् ।
अनिष्यन्दा निराहाराः सर्वज्ञाः सर्वदर्शिनः ।। २६ ।।

गायत्री ज्ञानसामर्थ्यात्प्रणवज्ञानशक्तितः ।
वासुदेवञ्च संपश्येन्न व्याप्नोति कथञ्चन ।।
अनन्तत्वाद्वासुदेवः कथं व्याप्यो भवेत्पुनः ।।

इति वासुदेवस्य दर्शनमेव न प्रवेश इति चेत्? तस्य ग्रन्थस्य गायत्रीपदचतुष्टय-ज्ञेयचतुर्व्यूहान्तर्गतवासुदेवरूपविशेषप्राप्त्यभावपरत्वात् अस्य ग्रन्थस्य सन्ततानु-स्मरणफलत्रया पञ्चव्यूहान्तर्गतपरिच्छिन्नरूपविशेषपरत्वादविरोधः । यद्वा स्मरणरूपं वासुदेवं पश्यन्न प्राप्नोति । एकदेशप्रवेशस्तु वर्तत एवेति तदर्थ इत्यविरोधः ।। ३२ ।।

**उमर्जी**—स्वरूपांशैर्विना प्राप्तुं नालम् इत्युक्त्या अंशिप्राप्त्यर्थं अंशप्राप्तेरावश्य-कत्वात्तत्प्रकारमाह— **तत इति** ।। तदर्थं अंशिप्राप्त्यर्थं । अनिरुद्धशब्दवाच्यजीव-व्यावृत्त्यर्थं देवेशमित्युक्तम् । ततः अनिरुद्धप्रवेशानन्तरं परं सर्वोत्तमं प्रद्युम्नं । परात्परं वासुदेवम् । ततः अंशिनं परं ब्रह्म विशन्तीति पूर्वेणान्वयः ।

विश्वाद्या अनिरुद्धाद्यास्ते द्विधा सम्प्रकीर्तिताः ।
विष्णुरूपास्तदन्ये च तान्सर्वान्याति मोक्षगः ।। इत्युक्तेः ।।

यद्वा शेषमार्गेण भगवन्तं गच्छन्तीत्याह— **तत इति** ।। तदुक्तं ध्यानमण्डले कुबेरवरुणयोः सोमे । सोमस्य विष्वक्सेने । विष्वक्सेनादीनां चानिरुद्धे । अनि-रुद्धस्य सनकादीनां च कामरूपप्रद्युम्ने । कामस्य वारुण्याम् । वारुण्याः संकर्षणे इति । अत्रानिरुद्धादिशब्देन जीवा विवक्षिताः ।। ३१ ।।

इतरप्रवेशापेक्षया वासुदेवप्रवेशस्य वैशेष्यमाह— **वासुदेवादिति** ।। ल्यब्लोप-निमित्ता पञ्चमी । वासुदेवं प्राप्य परं अन्यत् प्राप्यं नास्तीत्यर्थः । इति एवंरूपः

---

१०. सर्वेश्वरा नित्यतृप्ताः परं सुखमुपागताः ।
पूजयन्ति हरिं तत्र दिव्यं वर्षशतं पुनः ।। २७ ।।
ततोऽर्कमण्डलं भित्त्वा अनिरुद्धं विशन्ति ते ।
ब्रह्मन् तपोभिः प्रद्युम्नं ततः संकर्षणं प्रभुम् ।। २८ ।।
वासुदेवं ततः प्राप्य तेनैव सदृशास्ततः ।
भवन्ति सर्वे सर्वज्ञाः सर्वदा सर्वशक्तयः ।।
मुक्ताश्च सर्वदुःखेभ्यः परं सुखमुपागताः ।। २९ ।। विष्णुधर्मोत्तरे ३-३४९ ।।

अर्थः । वेदान्तनिश्चयः निर्णयरूपः । उक्तार्थे हेतुमुपपादयति— **वासुदेवमिति** ।। पुनः संसारावर्तनं नहीति हिशब्देन हेतुत्वं सूचयति ।। ३२ ।।

उपेन्द्र—अनिरुद्धशब्दवाच्यजीवव्यावृत्त्यर्थं **जीवेशमिति** ।। ततः अनिरुद्ध-प्रवेशानन्तरं सर्वोत्तमं प्रद्युम्नं च परात्परं परं महद्ब्रह्म वासुदेवं विशन्तीति पूर्वेणान्वयः। चतुर्व्यूहात्मकं वटपत्रशयम् ।

विश्वाद्या अनिरुद्धास्ते द्विविधाः सम्प्रकीर्तिताः ।

विष्णुरूपास्तदन्ये च तान्सर्वान्याति मोक्षगः ।। इत्युक्तेः ।।

वासुदेवप्राप्त्यर्थं प्रद्युम्नादिस्थितिरुक्ता सत्यनाथश्रीनाथैः ध्यानमण्डले । अव्याकृता-काशस्तत्र व्याप्तमूर्तिः, तस्मादितो वासुदेवः, ततोऽपीतो विरजानदी, इतः संकर्षणः, इतः प्रद्युम्नः, इत अनिरुद्धः, इति । यद्वा शेषमार्गेण गच्छतीत्याह—तदुक्तं कुबेर-वरुणयोस्सोमे, सोमस्य विष्वक्सेनादीनां चानिरुद्धे, अनिरुद्धस्य सनकादीनां कामरूपप्रद्युम्ने, कामस्य वारुण्यां, वारुण्याः संकर्षणरूपे शेषे इति । अनिरुद्धा-दिशब्देन अत्र जीवाः विवक्षिताः । यद्वा अधिकारिभेदेन प्रलये ब्रह्मप्राप्तिप्रकारमाह-— **अर्चयन्तीति** ।। स्वस्वयोग्यतानुसारेण सर्वपापविनिर्मुक्ताः अधिकारिणः प्रलये वटपत्रशयं ब्रह्म विशन्ति ।

तत्प्रकारमेव दर्शयति— **तत इति** ।। अर्चनादिसाधनेन भविष्यद्ब्रह्मणा मुक्तिं यान्ति । ततः अनिरुद्धम् । ततोऽन्तस्थदीर्घसंसारिणः चोऽवधारणे प्रद्युम्नमेव । ततो अधिकाः प्रारब्धकर्मशेषिणः साधनपूर्तिरहिताः संकर्षणम् । पूर्णसाधन-सम्पन्नाः ब्रह्मणा सह त्यक्तलिङ्गाः वासुदेवं परं ब्रह्म विशन्तीति पूर्वेणान्वयः । तदुक्तं नारदीये—

जाते ब्रह्मलये ब्रह्मन् भगवान् हरिरीश्वरः ।
वहुधा व्यसृजज्जीवान् तथा तेषां स्थलानि च ।।
पूर्णसाधनसम्पन्नान्विलिङ्गान्दृष्टबिम्बकान् ।
कर्मत्रयविनिर्मुक्तान् वासुदेवोदरेऽकरोत् ।।
प्रारब्धशेषिणो ये च किञ्चिदूनाश्च साधनैः ।
सलिङ्गकान् दृष्टबिम्बान् चक्रे संकर्षणोदरे ।।
भविष्यद्ब्रह्मणा साकं येषां मुक्तिप्रदो भवेत् ।

तान्सर्वाननिरुद्धस्य कुक्षिगानकरोद्विभुः ।।
दीर्घसंसारिणः शिष्टान् प्रद्युम्नस्योदरेऽकरोत् ।
वटपत्रपुटे यस्तु शयीत हरिरीश्वरः ।।
केवलं तदुरःस्था हि पूर्वं मुक्तिगता जनाः ।
चतुर्व्यूहात्मको विष्णुः वटपत्रशयं हरिम् ।।
विचिन्त्यामन्दसान्द्रौघचिदानन्दघनो हरिः ।। इति ।। ३१ ।।

इतरप्रवेशापेक्षया वासुदेवप्रवेशस्य विशेषमाह— **वासुदेवादिति** ।। ल्यब्लोपनिमित्ता पञ्चमी । वासुदेवं प्राप्य परं अन्यत् नास्तीत्ययमर्थः वेदान्तनिश्चयः निर्णयरूपः । उक्तार्थे हेतुमुपपादयति— **वासुदेवमिति** ।। पुनस्संसारे आवृत्तिर्नहीति प्रमाणप्रसिद्धिं सूचयति ।। ३२ ।।

**कोनेरी**—वासुदेवप्राप्तौ द्वारभूतानिरुद्धादिभगवद्रूपाण्याह— **तत इति** ।। ततः वासुदेवप्रवेशात्पूर्वमिति शेषः । ततः इत्यारभ्य पुनरावर्तनं कुत इत्यन्तश्लोकद्वयस्यार्थः स्पष्टः ।। ३१-३२ ।।

**स्मृ.कृष्णाचार्य**—ततः रूपभेदेन परब्रह्मप्रवेशप्रकारमाह— **ततोऽनिरुद्धमिति** ।। परब्रह्मणश्चतूरूपेषु मध्ये । मुक्ताधिकारिणः । ततो मुक्त्यनन्तरं मुक्तिकाले वा प्रविशन्ति । ततः परं प्रद्युम्नम् । ततः संकर्षणम् । ततः परात्परं वासुदेवं प्रविशन्ति ।। ३१ ।।
वासुदेवस्य परात्परत्वं कुत इत्यतः उक्तम् ।। **वासुदेवादिति** ।। वेदान्तैस्तथा निर्णयात् ततः परो नास्तीति भावः । ननु संकर्षणादिप्रविष्टवत् वासुदेवप्रवेशानन्तरं पुनरावृत्तिरस्ति किन्नेत्याह— **पुनरावर्तनं कुत इति** ।। तस्यैवान्ते प्राप्यत्वात्परात्परत्वं युक्तमिति । अत्रोक्तप्रवेशक्रमः अधिकारिभेदेन वा संकर्षणाधिष्ठितसंकर्षणादिरूपविशेषप्रवेशक्रम इति वा ज्ञेयम् ।। ३२ ।।

## कृष्णामृतमहार्णवः

आत्रेयः—

**यो यानिच्छेन्नरः कामान् नारी वा वरवर्णिनी ।**
**तान्समाप्नोति विपुलान्समाराध्य जनार्दनम् ।। ३३ ।।**

**ताम्रपर्णी**—भगवदाराधनस्य अशेषपुरुषार्थप्रापकत्वे आत्रेयब्रह्मकौशिकवचनानि पठति— **यो यानिच्छेदित्यादिना** ।। ३३ ।।

**उमर्जी**—ऐहिकफलोद्देशेनापि भगवदाराधनमेव कार्यमित्याह— **य इति** ।। काम्यन्त इति कामान् विषयान् । वरवर्णिनी वरवर्णः ब्राह्मणादिः अस्यास्तीति वरवर्णिनी । "उत्तमा वरवर्णिनी" इत्यमरोक्तेः ।

शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला ।
भर्तृरक्ता च या नारी सा नारी वरवर्णिनी ।। इति वचनात् ।।

विपुलान् यथेष्टान् कामानाप्नोति ।। ३३ ।।

**उपेन्द्र**—ऐहिकफलोद्देशेनापि भगवदाराधनमेव कार्यमित्याह— **य इति** ।। काम्यन्त इति कामान्विषमान् । वरवर्णिनी उत्तमस्त्री "उत्तमा वरवर्णिनी" इत्यमरः। वरो वर्णो ब्राह्मणादिरस्यास्तीति सा तथा ।

शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च सुखशीतला।
भर्तृरक्ता च या नारी सा नारी वरवर्णिनी ।।

इति वचनात् । समित्युपसर्गाद्भक्तिपूर्वकमाराध्य । विपुलान्यथेष्टान् कामानाप्नोतीति ।। ३३ ।।

**कोनेरी**—आत्रेयवचनमप्याह— **य इति** ।। यो नरः वरवर्णिनी वरं उत्तमभगवदाराधनलक्षणं वर्णयतीति वरवर्णिनी नारी यान् ऐहिकामुष्मिकान् कामानिच्छति । स पुरुषः सा नारी वा जनार्दनं समाराध्य विपुलान् अपेक्षितान् कामान् आप्नोति ।। ३३ ।।

**स्मृ.कृष्णाचार्य**—भगवदर्चनं बहुफलप्रदत्वेन स्त्रीणामपि कार्यमित्युक्तार्थे वचनान्तरमाह— **यो यानिति** ।। जनार्दनं समाराध्य सम्यगर्चनं कृत्वा । यः अधिकारी नरः । यान्कामानिच्छेत् । वरवर्णिनी ब्राह्मणादिश्रेष्ठवर्णवती नारी वा पतिव्रतादिलक्षणयुक्तस्त्री वा । यान्मनसा वाञ्छितान् कामान् मनोरथान् इच्छेत् तान् विपुलान् कामान् काम्यमानधर्मार्थकाममोक्षान् समाप्नोति प्राप्नोति । तस्माद्भगवदर्चनं कार्यमिति ।। ३३ ।।

## कृष्णामृतमहार्णवः

ब्रह्मा—

**बाहुभ्यां सागरं तर्तुं क [1]इच्छेत पुमान्भुवि ।**
**वासुदेवमनाराध्य को मोक्षं गन्तुमिच्छति ।। ३४ ।।**

**ताम्रपर्णी**—बाहुभ्यामित्यस्य प्लवं विना सागरतितीर्षावान् वासुदेवाराधनं विना मोक्षं जिगमिषुश्च सम इति भावः ।। ३४ ।।

**उमर्जी**—भगवदर्चनमन्तरेण मोक्षाशा अयुक्तेति सदृष्टान्तमुपपादयति— **बाहुभ्यामिति** ।। कः पुमान् तर्तुमिच्छेदिति । एवं वासुदेवाराधनमन्तरेण मोक्षो अयुक्त इत्यर्थः ।। ३४ ।।

**उपेन्द्र**—भगवदर्चनमन्तरेण मोक्षस्य दुर्घटत्वं सदृष्टान्तमुपपादयति— **बाहुभ्यामिति** ।। **क इच्छेत** । यथा दुर्घटत्वान्नेच्छति । एवं आराधनमन्तरेण मोक्षमिच्छेत सः कः कुत्सितः । प्रमाणविरुद्धत्वाद्दुर्घटमिति भावः ।। ३४ ।।

**कोनेरी**—ब्रह्मोक्तिमाह— **ब्रह्मेति** ।। बाहुभ्यां सागरं तर्तुं कः पुमान् भुवि इच्छेत न कोऽपि । एवं वासुदेवं अनाराध्य कः मोक्षं गन्तुमिच्छति न कोऽपि ब्रह्मापि नेच्छतीति ।। ३४ ।।

**स्मृ.कृष्णाचार्य**—मोक्षस्य भगवदर्चनान्वयव्यतिरेकानुविधानादवश्यं भगवदर्चनं कार्यमिति ब्रह्मणो वाक्यं पठति— **बाहुभ्यामिति** ।। वासुदेवमनाराध्य विध्युक्तप्रकारेण तदर्चनमकृत्वा । मोक्षं मुक्तिं कः यः कोऽपि वा गन्तुमिच्छति इच्छेत् न कोऽपीत्यर्थः । भगवदर्चनस्यैव तद्धेतुत्वात्तदभावे मोक्षाभावाद्वासुदेवानाराधकस्य मोक्षगमनेच्छा न युक्ता इति । अत्र लोकदृष्टान्तः ।। **बाहुभ्यामिति** ।। लोके सागरं प्लवादिकं विना बाहुभ्यां तर्तुं पारं गन्तुं कोऽपि इच्छेत वाञ्छेत् न कोऽपि । तद्वद्भगवदनर्चकस्य मोक्षेच्छा न युक्तेति तदर्थमर्चनं कार्यमिति ।। ३४ ।।

---

१. 'इच्छति' इति स्मृ.क. तथा क. पाठः ।

## कृष्णामृतमहार्णवः

शंकरः—

*[११]कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्योक्तं हरिसंस्मरणं परम् ॥ ३५ ॥

**ताम्रपर्णी**—हरिसंस्मरणस्य दुष्कर्मप्रायश्चित्ततया विहितत्वाच्च तदवश्यमनुष्ठेयमिति शंकरवचनेनाह— **शंकर इति** ॥ अनुतापः पश्चात्तापः । परं मुख्यम् ।

कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते ।
अविद्वदधिकारित्वात्प्रायश्चित्तविमर्शनम् ॥

—इति भागवते ॥ ३५ ॥

**उमर्जी**—एवं आद्यपद्योक्तभगवदर्चनस्य मोक्षाख्यफलसाधनत्वं प्रतिपाद्य स्मरणफलं प्रतिपादयन् सर्वपापप्रायश्चित्तरूपत्वं स्मरणस्याह— **कृत इति** ॥ स्वेन प्रमादादिति शेषः । कृते सति । अनुतापस्तु भक्तस्यैवेति द्योतको वैशब्दः । तुशब्दो ज्ञानिकृतत्वरूपविशेषद्योतकः । तदुक्तम्—"अल्पमात्रकृतो धर्मो भवेद् ज्ञानवतो महान्" इति । अतः परं प्रायश्चित्तमेव नास्तीत्यर्थः । समित्यनेन स्मृत्युक्तप्रायश्चित्तं अपाकरोति। "कर्मणा कर्मनिर्हारो नह्यात्यन्तिक इष्यते" इति भागवतोक्तेः ॥ ३५ ॥

**उपेन्द्र**—एवमाद्यपद्योक्तभगवदर्चनस्य फलसाधनत्वेन कर्तव्यतां बहुप्रमाणैरुपपादयन्सर्वपापप्रायश्चित्तरूपत्वमाह— **कृत इति** ॥ अनुतापस्तु भक्तस्यैवेति प्रसिद्धिद्योतको वैशब्दः । समित्यनेन स्मृत्युक्तप्रायश्चित्तमपाकरोति । "कर्मणा कर्मनिर्हारो नह्यात्यन्तिक इष्यते" इति भागवतोक्तेः ॥ ३५ ॥

**कोनेरी**—रुद्रवचनं चाह— **कृत इति** ॥ प्रारब्धवशात् अज्ञानेन पापे कृते सति यस्य पुंसो यावदनुतापो न जायते तावत्तस्य पापस्य नाशो नेति शेषः । यस्य

---

* अयं श्लोकः अग्निपुराणे १७४-८ । तथा विष्णुपुराणे २-६-३८ ।

[११] प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ ब्रह्मपुराणे २०-३७ ॥

कृतपापस्य अनुतापो जायते तस्य पापस्य भक्त्या हरिसंस्मरणं परमुत्तमं प्रायश्चित्त-मुक्तम् । श्रुतिस्मृतिष्विति शेषः । वैशब्दः प्रसिद्धिद्योतकः । तुशब्देनापरोक्षज्ञानि-विषयकत्वं सूचयति ।। ३५ ।।

**स्मृ.कृष्णाचार्य**—एवं मोक्षार्थिभिरधिकारिभिः भगवदर्चनं कार्यमिति बहुप्रमाणै-रभिधाय "अर्चितः संस्मृतो ध्यात" इत्यत्रोक्तस्य भगवत्स्मरणस्य मोक्षसाधनत्वेन कर्तव्यत्वं बहुप्रमाणैस्साधयन् तत्र शंकरवाक्यं पठति— **कृते पापेति** ।। यस्य पुंसः कृते पापे अनेकविधपापे स्वेन कृते सति । अनुतापः पश्चात्तापः प्रजायते स्वकृतपापपरिहारार्थं तस्य पुंसः स्वकृतपापप्रायश्चित्तरूपं कर्म हरिस्मरणमेव । नतु प्रायश्चित्तविधयः । कुतः हरिसंस्मरणस्य सर्वापेक्षया उत्तमत्वादित्यभि-प्रायेणोक्तम् ।। **परमिति** ।। तस्मात्सर्वपापनिवृत्तिद्वारा मोक्षादिफलहेतुत्वाद्भगव-त्स्मरणमपि सर्वैस्सदा कार्यमिति ।। ३५ ।।

## कृष्णामृतमहार्णवः

ब्रह्मा—

> [१२]**नह्यपुण्यवतां लोके मूढानां कुटिलात्मनाम् ।**
> **भक्तिर्भवति गोविन्दे स्मरणं कीर्तनं तथा ।। ३६ ।।**

**ताम्रपर्णी**—यदि स्मरणं महाफलं तर्हि सर्वेऽपि किं नानुतिष्ठन्तीत्यादि शंका-परिहाराय ब्रह्मवचनानि पठति— **ब्रह्मेत्यारभ्य अगस्त्य इत्यन्तेन** ।। मूढानां अज्ञानाम् । कुटिलो वस्तुयाथात्म्यमपेक्ष्य वक्र आत्मा मनो येषां ते तथा तेषाम् । यद्वा मूढानां विषयमोहितानाम् ।। ३६ ।।

**उमर्जी**—भक्ताभक्तलक्षणं वदन् भक्तस्यैवेदं प्रायश्चित्तं नाभक्तस्येति श्लोकद्वयेनाह- — **नहीति** ।। अपुण्यवतामित्यादीनि विशेषणानि अभक्तलक्षणोपपादकानि । हिशब्दो हेतौ । भक्तिर्न भवतीति हेतोः । स्मरणं कीर्तनं तथा प्रायश्चित्तरूपं न भव-तीत्यर्थः । "अभक्तोदाहृतं नैव फलदातृ भविष्यति" इति भागवतोक्तेः ।।३६।।

---

१२. यथा यथा हरिं भक्त्या जानाति पुरुषोत्तमम् ।
तथा तथा समुत्सृज्य पापानि कुरुते शुभम् ।।शाण्डिल्यस्मृतौ ४-२१० ।।

**उपेन्द्र**—भक्ताभक्तलक्षणं वदन् भक्तस्यैवेदं प्रायश्चित्तं नाभक्तस्येत्याह— **नहीति श्लोकद्वयेन** ।। अपुण्यवतामित्यादिविशेषणानि अभक्तलक्षणोपपादकानि । हिशब्दो हेतौ । भक्तिर्न भवतीति हेतोः । स्मरणं कीर्तनं च तथा न भक्तस्य प्रायश्चित्तरूपं नेत्यर्थः । "अभक्तोदाहृतं नैव फलदातृ भविष्यति" इत्युक्तेरिति भावः ।। ३६ ।।

**कांनेरी**—योग्यानामेव हरिस्मृत्यादिकं भवति नायोग्यानामिति ब्रह्मवचनमाह-- **ब्रह्मेति** ।। कुटिलात्मनां ब्रह्मद्वेषिणाम् । मूढानां मिथ्याज्ञानिनाम् । अपुण्यवतां भगवद्द्वेषोत्थकर्मणां महापातकं कुर्वताम् । भगवति षड्गुणपूर्णे गोविन्दे भक्तिर्नहि भवति । तथा गोविन्दस्य स्मरणं कीर्तनं च न भवतीति ।। ३६ ।।

**स्मृ.कृष्णाचार्य**—ननु भगवत्स्मरणस्य सर्वसाधारणत्वाद्विशिष्यकर्तव्यत्वं कुत इत्यतः स एव स्मरणकीर्तनस्यासाधारण्यमाह— **नह्यपुण्यवतामिति** ।। लोके कल्याविष्टजनसमूहे । भक्तिर्भगवद्भक्तिः तद्युक्तभगवत्स्मरणं तत्कीर्तनं च न भवति । केषामित्यत उक्तम् ।। **अपुण्यवतामिति** ।। अपुण्यवतां बहुजन्मभिः भगवद्विषयकपुण्यकर्म अकुर्वतां, तथा भगवद्विषयकमाहात्म्यज्ञानशून्यानां, मिथ्याज्ञानिनां, गोविन्दे भक्तिर्न भवति । अतः स्मरणादेः सर्वसाधारणत्वाभावान्मोक्षार्थमसाधारण्येन स्मरणादिकं कार्यमित्याहेत्यर्थः ।। ३६ ।।

### कृष्णामृतमहार्णवः

**तदैव पुरुषो मुक्तो जन्ममृत्युजरादिभिः ।**
**जितेन्द्रियो विशुद्धात्मा यदैव स्मरते हरिम् ।। ३७ ।।**

**ताम्रपर्णी**—इन्द्रियजयेन विषयव्यामोहाभावे स्मरणादिलाभेन मुक्तिर्भवत्येवेत्याह-- **तदैवेति** ।। विशुद्धात्मा पुण्येनान्तःकरणशुद्धिमान् कौटिल्यत्यागेन शुद्धान्तःकरणो वा ।। ३७ ।।

**उमर्जी**—जितेन्द्रिय इत्यादि विशेषणानि भक्तलक्षणोपपादकानि । विशुद्धे परमात्मनि आत्मा मनो यस्य स तथा । भक्तिमानित्यर्थः । भक्त्या विशुद्धान्तःकरण इति वा । मुक्तो भवतीति शेषः ।। ३७ ।।

**उपेन्द्र**—जितेन्द्रिय इत्यादिविशेषणानि भक्तलक्षणोपपादकानि । विशुद्धे परमात्मनि आत्मा मनो यस्य । भक्त्यादिना विशुद्धान्तेति वा । मुक्तो भवतीति शेषः ।।३७।।

**कोनेरी**—तर्हि के ते योग्याः । स्मृतेस्तु किं फलं भवतीति तत्राह— **तदैवेति** ।। यः विशुद्धात्मा निर्मलान्तःकरणः । जितेन्द्रियः सन् । यदा भक्त्या हरिं स्मरते । स पुरुषः तदैव जन्मदुःखजरादिभिः प्राप्यदुःखैर्विमुक्तो भवतीति अस्मिन्ग्रन्थेऽनेकर्षि-देवतोदाहरणमभ्यासरूपलिङ्गतात्पर्यज्ञापनार्थमिति ज्ञेयम् ।। ३७ ।।

**स्मृ.कृष्णाचार्य**—भगवत्स्मरणादेर्मोक्षं प्रत्यसाधारण्यमेवाह— **तदैवेति** ।। यः पुरुषः अधिकारी । जितेन्द्रियः सकलेन्द्रियजयवान् विशुद्धात्मा निर्मलमनस्कः सन् । हरिं यदैव स्मरते यस्मिन्काले स्मरणं करोति । तथा भक्तिं कीर्तनं च करोति । तदैव तस्मिञ्जन्मन्येव अयं पुरुषो जन्ममृत्युजरादिभिर्जननमरणादि-संसारदुःखैः मुक्तो भवति । मुक्तः सन् सुखी भवति । तस्मात्स्मरणादेर्मोक्षसाधन-त्वात्तस्यासाधारण्येन कर्तव्यत्वमाहेत्यर्थ इति ।। ३७ ।।

**कृष्णामृतमहार्णवः**

**प्राप्ते कलियुगे घोरे धर्मज्ञानविवर्जिते ।**
**न कश्चित्स्मरते देवं कृष्णं कलिमलापहम् ।। ३८ ।।**

**ताम्रपर्णी**—ननु योग्या हरिस्मरणाद्युपायं सत्कर्म इन्द्रियजयादिकं किं नानुतिष्ठन्ती-त्यतः कालबलादित्याह— **प्राप्त इति** ।। ३८ ।।

**उमर्जी**—स्मरणेनैव सर्वपापनिर्हारसम्भवे कुतो न क्रियते सर्वैः सुलभत्वादि-त्यतस्तस्य दुर्घटत्वमुपपादयति— **प्राप्त इति** ।। पाषण्डजनसेवितत्वेन घोरे । धर्मज्ञानाभ्यां विवर्जिते । अधर्माज्ञानाभ्यां युक्ते च । धर्मविषयकज्ञानविवर्जित इति वा । स्मरणस्य फलाभावशंकां वारयति— **कलिमलापहमिति** ।। ३८ ।।

**उपेन्द्र**—ननु स्मरणेनैव सर्वपापपरिहारो भवेत्तत्कुतो न क्रियत इत्यत आह— **प्राप्त इति** ।। पाषण्डजनसेवितत्वेन घोरे । अत एव धर्मविषयज्ञानविवर्जिते सति । कश्चिदपि न स्मरते । कलौ स्मरणात् फलाभावशंकां वारयति— **कलिमलापहमिति** ।। कृष्णस्य विशेषतः कलिदोषनिवर्तकत्वाद्विशेषितम् ।। ३८।।

**कोनेरी**—धर्मविषयकज्ञानविवर्जिते । घोरे क्लेशप्रदे कलियुगे । कलिना दूषिता-न्तःकरणः सन् कश्चिदपि । कलिकल्मषघ्नं देवं सर्वोत्तमं कृष्णं न स्मरते।। ३८ ।।

**स्मृ.कृष्णाचार्य**—भगवत्स्मरणादेस्सर्वसाधारण्यं निषेधयति असाधारण्यज्ञापनाय स एवाह— **प्राप्तेति श्लोकद्वयेन** ।। भगवत्स्मरणाकरणे निमित्तद्वयम् । "प्राप्ते कलियुगे घोरे धर्मज्ञानविवर्जिते"इति । कृष्णं कलिमलापहमित्यनेन स्मरणस्यावश्यकर्तव्यत्वं सूचितमिति ज्ञेयम् ।। ३८ ।।

**कृष्णामृतमहार्णवः**

**न कलौ देवदेवस्य जन्मदुःखापहारिणः ।**
**करोति मर्त्यो मूढात्मा स्मरणं कीर्तनं हरेः ।। ३९ ।।**

**ताम्रपर्णी**—न केवलं धर्मादिवर्जनमात्रम् । किन्तु कलौ विषयव्यामोहादि च भवतीत्याह— **न कलाविति** ।। ३९ ।।

**उमर्जी**—ननु कलौ ज्ञानाभावः कुत इत्यत आह— **नेति** ।। जन्मदुःखापहारिणः जन्मेत्युपलक्षणम् । मरणादेर्रति ग्राह्यम् । तथाच जन्ममरणादिदुःखपरिहारकस्येत्यर्थः । मूढात्मा उपदेशकाभावादज्ञातभगवत्स्वरूपः । तथाचोपदेशकाभावाद्भगवद्ज्ञानं नास्तीति भावः ।। ३९ ।।

**उपेन्द्र**—जन्मदुःखापहारिणः जन्मेत्युपलक्षणम् । जन्मजरामरणादिदुःखापहारकस्येत्यर्थः। मूढात्मा उपदेशकाभावादज्ञातभगवत्स्वरूपः । तथा तादृशं स्मरणवत्सर्वदोषपरिहारकं कीर्तनं न करोतीत्यर्थः ।। ३९ ।।

**कोनेरी**— ।। **न कलाविति** ।। न केवलं न स्मरते अपितु मूढात्मा अज्ञानावृतबुद्धिर्मर्त्यः । कलौ जननमरणादिक्लेशपरिहारिणः रमाब्रह्मादिदेवानां देवस्य हरेः । स्मरणं कीर्तनं च न करोति ।। ३९ ।।

**स्मृ.कृष्णाचार्य**— अत्रापि "जन्मदुःखापहारिणः" इत्यनेन स्मरणस्यासाधरण्यं सूचयति ।। ३९ ।।

**कृष्णामृतमहार्णवः**

**ये स्मरन्ति सदा विष्णुं विशुद्धेनान्तरात्मना ।**
**ते प्रयान्ति भयं त्यक्त्वा विष्णुलोकमनामयम् ।। ४० ।।**

**ताम्रपर्णी**—तर्हि कलिकाले स्मरणविधिवैयर्थ्यमित्यत आह— **ये स्मरन्तीति** ।। कलिकालेऽपि सत्सङ्गत्या ये स्मरन्तीति योज्यम् । 'मुख्यो धर्मः कार्तयुगो वर्तितव्यः कलावपि' इत्यादेः ।। ४० ।।

**उमर्जी**—शिक्षितानां स्मरणफलमाह— **ये स्मरन्तीति** ।। विशुद्धेनान्तरात्मना विशुद्धया भक्त्या । ते भक्ताः भयं संसारभयं त्यक्त्वा । अनामयं आमयोपलक्षितसलकदोषगन्धविधुरं शाश्वतं नित्यमेकप्रकारम् । विष्णुलोकं वैकुण्ठादिकम्। योग्यतातारतम्यक्रमेण प्रयान्तीत्यन्वयः ।। ४० ।।

**कोनेरी**—तर्हि कथं कार्यमित्याह— **य इति** ।। ये ज्ञानिनः । एतादृशे कलियुगे विशुद्धेन कल्मिलरहितेन अन्तरात्मना अन्तःकरणेन । विष्णुं सदा स्मरन्ति । तेऽपि । अपिशब्दः एवार्थे । त एव भयं संसारभयं त्यक्त्वा अनामयं दोषरहितं विष्णुलोकं यान्ति ।। ४० ।।

**स्मृ.कृष्णाचार्य**—भगवत्स्मरणमसाधारण्येन मोक्षसाधनमिति पुनः स एवाह-– **ये स्मरन्तीति** ।। विशुद्धेन मनसा विष्णुं भक्त्या ये स्मरन्ति । अनामयं सर्वदुःखरहितं विष्णुलोकं वैकुण्ठं ते प्राप्नुवन्ति । किं कृत्वा इत्यत उक्तम् ।। **भयं त्यक्त्वेति** ।। भयं संसारभयम् । तस्मात्तदर्थं स्मरणं कार्यमिति ।। ४० ।।

**कृष्णामृतमहार्णवः**

**[१]गर्भजन्मजरारोगदुःखसंसारबन्धनैः ।**
**न बाध्यते नरो नित्यं वासुदेवमनुस्मरन् ।। ४१ ।।**

**ताम्रपर्णी**—भयं त्यक्त्वेत्युक्तस्यैव विवरणं गर्भेत्यादिश्लोकद्वयम् ।। ४१ ।।

**उमर्जी**—स्मरणस्यैहिकनानादुःखनिवर्तकत्वमाह— **गर्भेति** ।। दुःखशब्दः गर्भेत्यादिना प्रत्येकं सम्बद्ध्यते । तान्येव संसारबन्धनानि । तैर्न बाध्यत इत्यन्वयः ।। ४१ ।।

---

१. 'गर्भ' इति कोनेरी पाठः ।।

१३. कर्मारम्भे च मध्ये वा शेषे विष्णुश्च यः स्मरेत् ।
परिपूर्णं तस्य कर्म वैदिकञ्च भवेद् द्विजः ।। ब्रह्मवैवर्ते १-१७-१८ ।।

**उपेन्द्र**—स्मरणस्यैहिकसर्वदुःखनिवर्तकत्वमाह— **गर्भेति** ।। दुःखशब्दो गर्भेत्यादिना प्रत्येकं सम्बध्यते तान्येव संसारबन्धनानि, तैर्न बाध्यते इत्यन्वयः ।। ४१ ।।

**कोनेरी**—अनादिसंसारस्थो ज्ञानी तद्भयं कथं त्यजतीत्याशंकयाऽपरोक्षीकृतभगवत्स्वरूपतत्स्मरणादेव त्यजतीत्याह— **गर्भ इति** ।। संसारे विद्यमानोऽपि ज्ञानी नरः वासुदेवमनुस्मरन् वर्तमानः गर्भे जरारोगदुःखादिसंसारबन्धनैः न बाध्यते । वैराग्ययुक्तभगवद्ध्यानजन्यसुखेन तुच्छीकृत्य तत्र स्मरति । उक्तं चतुर्थस्कन्धे—

तं न स्मरन्त्यतितरां प्रियमीशमाद्यं स्वान्सम्पदः सुतसुहृद्गृहवित्तदारान् ।
ये त्वब्जनाभ भवदीयपदारविन्दसौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गा ।। इति ।।
अस्यार्थस्तु हे अब्जनाभ ये त्वां स्मरन्ति स्वान्सम्पदादीन् न स्मरन्ति ते त्वां स्मरन्तीति तट्टीकायां स्पष्टमुक्तम् ।। ४१ ।।

**स्मृ.कृष्णाचार्य**—संसारदुःखनिवर्तकत्वात् तत्स्मरणं कार्यमिति स एवाह— **गर्भ इति** ।। गर्भः गर्भवासः पुनर्भूमौ जननम् तत्र । जरारोगदुःखयुक्तसंसारबन्धनैर्न बाध्यते । क इत्यत उक्तम् ।। **वासुदेवमनुस्मरन्निति** ।। अनेन वासुदेवस्मरणस्य जन्ममृत्युसंसारदुःखनिवर्तकत्वात् तत्स्मरणं कार्यमिति ।। ४१ ।।

**कृष्णामृतमहार्णवः**

**[१८]यममार्गं महाघोरं नरकाणि यमं तथा ।**
**स्वप्नेऽपि नैव पश्येत यः स्मरेद्गरुडध्वजम् ।। ४२ ।।**

**ताम्रपर्णी**—घोरमित्यनेनत्थापिनां घोरवत्प्रतीयमानं यमामित्यनेनाप्यन्वेति ।।४२।।

**उमर्जी**—नारकदुःखमपि स्मरणरूपसाधनेन नश्यतीत्याह— **यममार्गमिति** ।। प्रसिद्धमार्गाद्वैलक्षण्यज्ञापनाय महाघोरमिति ।। यमविशेषणं वा । स्वप्नेऽपि स्वप्नानुभवकाले अपि । स्वप्नदुःखस्य सत्यत्वेन स्मरणेन तन्नाशः सम्भवतीति भाव ।। ४२ ।।

---

[१८] न ते दूतास्र तन्मार्गं न यमं नच तां पुरीम् ।
प्रणम्य विष्णु पश्यन्ति नरकाणि कथञ्चन ।। ब्रह्मपुराणे १०८-८६ ।।

**उपेन्द्र**—न केवलमैहिकं नारकं दुःखमपि निवर्तत इत्याह— **यममार्गमिति** ।। प्रसिद्धमार्गाद्वैलक्षण्यज्ञापनाय महाघोरमिति । यमविशेषणं वा स्वप्नदुःखानुभवस्य सत्यत्वात् स्मरणेन तत्राशस्सम्भवतीति ।। ४२ ।।

**कोनेरी**—भगवद्ध्यानस्मरणफलमाह— **यममार्गमिति** ।। यः ज्ञानी हर्युपासनोत्पन्नज्ञानसहकृतभक्त्या गरुडध्वजं स्मरेत् । सः अधिकारी घोरं यममार्गं नरकाणि यमं स्वप्नेऽपि नैव पश्येत न पश्यति ।। ४२ ।।

**स्मृ.कृष्णाचार्य**—समस्तारिष्टनिवर्तकत्वाच्च तत्स्मरणं कार्यमित्याह— **यममार्गमिति** ।। **महाघोरमिति** ।। यमभटैस्ताडनादिना नीयमानत्वात् नरकाणि घोररूपाणि । पापिनां घोररूपं यमं नैव पश्येत । क इत्यत उक्तम् ।। **यः स्मरेदिति** ।। गरुडध्वजं वासुदेवं यः अधिकारी स्मरेत् । तस्मात्सर्वदुःखनिवर्तकत्वात्तत्स्मरणं सदा कार्यमिति ।। ४२ ।।

### कृष्णामृतमहार्णवः

***हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।**
**पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ।। ४३ ।।**

**ताम्रपर्णी**—अर्चित इत्युक्तार्चनशेषमन्त्रादिकमपि दासभावेन स्वीकार्यम् । ध्यानकीर्तने च कार्ये इत्याह— **हृदीति** ।। अच्युतश्च्युतिरहितो मुक्तो भवति ।। ४३ ।।

**उमर्जी**—नरकपरिहारकसाधनान्तराण्याह— **हृदीति** ।। यस्याधिकारिणः रूपं भगवद्रूपम् । हृदि आत्महृदि । नियामकतया ज्ञानं वर्तत इति शेषः । तदेवात्मनि वेदनरूपम् ।

[1]अनाद्यनन्तकाले च मुक्तौ संसार एव च ।
मयिस्थश्चोदयत्येको विष्णुर्मां सर्वदैव तु ।।
इति सम्प्रीतिकं ज्ञानं विद्यादात्मनि वेदनम् ।। इत्युक्तेः ।।

---

* अयं श्लोकः स्कान्दे २-३-५-४५ ।

१. इदमात्मार्पणविषयं प्रमाणतया उदाहृतं भागवततात्पर्ये । आत्मनिवेदनविषयं तु—
मुक्तस्यापि ममान्तःस्थो नियन्तैव हरिः सदा ।
इति ज्ञानं समुद्दिष्टं सम्यगात्मनिवेदनम् ।। इति ब्रह्मतर्कवचनमुदाहृतं द्रष्टव्यम् ।।

नामोच्चारणविषयत्वेन वर्तत इति सर्वत्रान्वयः । सः पुरुषः अच्युतः ज्ञानभक्त्यादिना च्युतिरहितः । योग्यपदद्वा । अच्युतसारूप्यादिमान्वा । भक्त्यादिमत्त्वात्तस्य नरक-परिहारोऽपि सम्भवतीति भावः ।। ४३ ।।

**उपेन्द्र**—स्मरणवदात्मनि वेदनादिसाधनानां कर्तव्यत्वमाह— **हृदीति** ।। यस्याधिकारिणः रूपं भगवद्रूपं हृदि ज्ञानविषयतया वर्तते । तदेवात्मनिवेदनरूपम्।

अनाद्यनन्तकाले च मुक्तौ संसार एव च ।
मयिस्थश्चोदयत्येको विष्णुर्मां सर्वदैव तु ।।
इति सम्प्रीतिकं ज्ञानं विद्यादात्मनि वेदनम् ।। इत्युक्तेः ।।

सः पुरुषः अच्युतः ज्ञानभक्त्यादिना च्युतिरहितः । योग्यपदाद्वा । अच्युतसारू-प्यादिमान्वा ।। ४३ ।।

**कोनेरी**—भगवद्भक्तमहिमानमाह— **हृदीति** ।। यस्याधिकारिणः हृदि बिम्बरूप-भूतस्य हरेः रूपमपरोक्षीकृतम् । यस्य मुखे । नाम गुणनाम कर्मनाम च प्रवृत्ति-निमित्तवत्तया ज्ञानपूर्वकमुच्चरितम् । यस्य उदरे नैवेद्यं पादोदकं च जीर्यते । यस्य मस्तके पादोदकं निर्माल्यं च धार्यते । हरेरिति सर्वत्रापि सम्बन्धः । स अच्युतः अच्युताधीनसत्ताकः । "यदधीना यस्य सत्ता तत्तदित्येव भण्यते" इत्याचार्योक्तेः। यद्वा भगवद्भक्तिज्ञानादिच्युतिरहितत्वादच्युत इत्युच्यत इति ।। ४३ ।।

**स्मृ.कृष्णाचार्य**—यद्वा भक्तेन कृतमेव हरिस्मरणं मोक्षसाधनं नान्यदिति वक्तुं प्रसङ्गाद्भक्तलक्षणमाह— **हृदि रूपमित्यनेन** ।। यस्य भक्तस्य हृदि रूपं ध्येयं भगवद्रूपम् । सर्वदा भगवत्स्मरणध्यानवानित्यर्थः । यस्य मुखे नाम भगवतः रामकृष्णादिनाम वर्तते सर्वदा नामोच्चारणमस्ति । यस्योदरे हरेर्नैवेद्यं भुक्तमस्ति। हरेः पादोदकं तीर्थम् । तथा हरेर्निर्माल्यं यस्य मस्तके वर्तते नित्यम् । स भक्तः अच्युतः ज्ञानभक्त्यादिभिः च्युतिरहितः अत एव अस्मात्संसारदुःखाच्च्युतः सन् अच्युतस्य सारूप्यादिमान् भवति । एतादृशभक्तकृतस्मरणादेरेव मोक्षसाधनत्वा-त्तत्स्मरणादिकमवश्यं कार्यमिति । यद्वा हृदि रूपमिति ध्यानस्य मुखे नामेति भगवत्कीर्तनस्मरणादेः च्युतिराहित्यरूपमोक्षश्रवणात् भगवद्ध्यानादिकं कार्यमिति भावः ।। ४३ ।।

कृष्णामृतमहार्णवः

**गोविन्दस्मरणं पुंसां पापराशिमहाचलम् ।**
**असंशयं दहत्याशु तूलराशिमिवानलः ।। ४४ ।।**

**ताम्रपर्णी**—ननु पूर्वजन्मार्जितकर्मणां भावात्कथं हरिस्मरणेन मोक्ष इत्यत आह— **गोविन्देति** ।। ४४ ।।

**उमर्जी**—भगवत्स्मरणस्याशेषपापनिवर्तकत्वे असम्भावनाशंकां दृष्टान्तद्वयेन परिहरति— **गोविन्देति श्लोकद्वयेन** ।। पुंसां भगवत्पुरुषाणां पापराशिमहाचलम् पापसमूहाख्यमहापर्वतम् । असंशयं संशयो यथा न भवति तथा । दहतीत्यन्वयः ।। ४४ ।।

**उपेन्द्र**—भगवत्स्मरणस्याशेषपापनिवर्तकत्वे असम्भावनाशंकां दृष्टान्तद्वयेन परिहरति— **गोविन्देत्यादिना** ।। पापसमूहाख्यमहाचलं पर्वतम् । असंशयं संशयो यथा न भवति तथा दहति ।। ४४ ।।

**कोनेरी**—भक्त्या हरिस्मरणं सर्वाघौघविनाशकमित्यत्र दृष्टान्तमाह— **गोविन्दस्मरणमिति** ।। भक्त्या कृतं गोविन्दस्मरणम् । अनलस्तूलराशिं यथा दहति । तथा पुंसां अपरोक्षीकृतभगवतां पुंसां पापराशिमहाचलं असंशयं संशयरहितं यथा भवति तथा आशु शीघ्रेण दहति । उक्तञ्च भाष्ये "तद्यथेषिका तूलमग्नौ प्रोतं प्रदूयेत एवं हैवास्य सर्वे पाप्मान प्रदूयन्त" इति ।। ४४ ।।

**स्मृ.कृष्णाचार्य**—भगवत्स्मरणस्य पापकर्मक्षयरूपमोक्षसाधनत्वाद्धृदि तत्स्मरणं सदा कार्यमित्याह— **गोविन्दस्मरणमिति** ।। गोविन्दस्य स्मरणं माहात्म्यज्ञानपूर्वकस्मृतिः पापराशिरूपमहाचलं सञ्चितागामिपापरूपमहाचलं निःशेषं दहति । किमिव, अनलस्तूलराशिं यथा दहति तथा । गोविन्दस्मरणस्य सर्वपापनिवर्तकत्वात्तत्स्मरणं कार्यमिति । असंशयं क्रियाविशेषणम् । "तद्यथेषिका तूलमग्नौ प्रोतं प्रदूयेत एवं हैवास्य सर्वे पाप्मानः प्रदूयन्त" इति श्रुतेः ।। ४४ ।।

### कृष्णामृतमहार्णवः

कौशिकः—

**अनाराधितगोविन्दा ये नरा दुःखभागिनः ।**
**आराध्य वासुदेवं स्युर्नित्यानन्दैकभागिनः ॥ ४५ ॥**

**ताम्रपर्णी**— ॥ **अनाराधितेति** ॥ ये नराः अनाराधितगोविन्दाः । अत एव दुःखभागिनः । त एव वासुदेवमाराध्य पूर्णानन्दैकभागिनः स्युः । अतोऽन्वय-व्यतिरेकान्वेषणाय न दूरं गन्तव्यम् । अत्रैवैतज्ज्ञानसम्भवादिति भावः ॥ ४५ ॥

**कोनेरी**—कौशिकोक्तिमाह— **कौशिक इति** ॥ अनाराधितगोविन्दाः योग्या अपि गुरूपदेशाभावेन भक्तिज्ञानपूर्वकं अनाराधितः गोविन्दः यैस्ते तथा ये नराः पुनरावर्तिलक्षणदुःखभागिनः । त एव योग्यगुरूपदिष्टज्ञानेन हृदि वासनात् वासुः वासुश्चासौ देवश्च वासुदेवः तं आराध्य नित्यानन्दैकभागिनः मुक्ताः स्युरिति ॥ ४५ ॥

### कृष्णामृतमहार्णवः

अगस्त्यः—

**स्मरणादेव कृष्णस्य पापसङ्घातपञ्जरः[१] ।**
**शतधा भेदमायाति गिरिर्वज्रहतो यथा ॥ ४६ ॥**

**ताम्रपर्णी**—उक्तमेवार्थं दृढयति अगस्त्यवचनेन अगस्त्य इत्यादिना कौशिक इत्यन्तेन ग्रन्थेन ॥ पापसङ्घात एव पञ्जरः । आवरकत्वात् ॥ ४६ ॥

**उमर्जी**— ॥ **स्मरणादेवेति** ॥ पापसंघातपञ्जरः पापसमूहस्याच्छादकः कवच इति यावत् ॥ ४६ ॥

**उपेन्द्र**— ॥ **स्मरणादेवेति** ॥ पापसङ्घातपञ्जरः पापानां सङ्घातः समूहः स एव पञ्जरः आच्छादकः कवचः ॥ ४६ ॥

**कोनेरी**—उक्तार्थमगस्त्यवचनेन द्रढयति— **अगस्त्य इति** ।। अपरोक्षदशायां ज्ञानिनः । कृष्णस्य स्मरणादेव । पापसङ्घातपञ्जरं सञ्चितरूपम् । शतधा नाशमायाति । यथा वज्रहतो गिरिः पक्षनाशमाप्नोति तथेति ।। ४६ ।।

**स्मृ.कृष्णाचार्य**—उक्तार्थे अगस्त्यवाक्यमाह— **स्मरणादेवेति** ।। कृष्णस्य स्मरणादेव अनवरतस्मृतेरेव पापानां मनोवाक्कायकृतानां सञ्चितागामिरूपपापसङ्घातानां पञ्जरमाश्रयभूतं पाञ्चभौतिकस्थूलसूक्ष्मदेहादिकं शतधा अनेकधा भेदं नाशमायाति प्राप्नोति । यथा वज्रहतः इन्द्रवज्रेण भेदितः पर्वभिर्हतो गिरिः शतधा भेदमायाति तद्वदित्यर्थः ।। ४६ ।।

कृष्णामृतमहार्णवः

[१५]**कृष्णे रताः कृष्णमनुस्मरन्तः**
**तद्भावितास्तद्गतमानसाश्च ।**
**भिन्नेऽपि देहे प्रविशन्ति कृष्णं**
**हविर्यथा मन्त्रहुतं हुताशे ।। ४७ ।।**

**ताम्रपर्णी**—न केवलं कर्मावरणमात्रस्य निवृत्तिः अपितु लिङ्गदेहभेदः सायुज्यं चेत्याह— **कृष्ण इति** ।। श्रवणादिना कृष्णे रताः रतियुक्ताः । भावे क्तः । भावितं भावः भक्तिः तस्मिन् कृष्णे भावितं येषां ते तथोक्ताः । तद्गतमानसाः ध्यानेन शरवत्तल्लग्नमानसाश्चैकन्तभक्ताः पापसङ्घातपञ्जरभेदानन्तरं लिङ्गदेहेऽपि भिन्ने कृष्णं प्रविशन्तीत्यर्थः । न केवलं लिङ्गदेहात्पूर्वं तद्भेदादनन्तरमपीति वा परीक्षितांक्तेः । देवानामपि स्वस्वबिम्बेषु प्रवेशेन स्वमूलदेहक्षयं सति लिङ्गदेहविशिष्टेनोत्तरसायुज्यद्वारा हरौ सायुज्यस्यानन्तरं विरजास्नानकाले त्यक्तलिङ्गानां स्वरूपदेहेनैव लयक्रमेण हरिसायुज्यस्य व्यवस्थापितत्वाच्च । 'संकर्षणादयः सर्वे स्वाधिकारादनन्तरम् । प्रविशन्ति परं देवम्' इति गीताभाष्यवाक्यस्यैव-

---

१५. कृष्णं रताः कृष्णमनुस्मरन्ति रात्रौ च कृष्णं पुनरुत्थिता ये ।
ते भिन्नदेहाः प्रविशन्ति कृष्णं हविर्यथा मन्त्रहुतं हुताशम् ।।
—ब्रह्मपुराणे ६८-११ ।।

मुभयार्थत्वसम्भवादविरोधः । अत्रार्थविशेषस्त्वन्यत्रोक्तोऽनुसन्धेयः । कथमल्पकानां हरौ प्रवेश इत्यत्र दृष्टान्तमाह— **हविरिति** ।। मन्त्रपूर्वं हुतं हविः । संस्कृतत्वेन परमधियत्वाद्धै हुताश एवेति । तथाऽपरोक्षज्ञानेन कर्मक्षये संसृतौ जीवन्मुक्तः । लिङ्गदेहापगमेन नियमेन संसृतेर्मुक्तश्चोत्कृष्टज्ञानानन्दघनं हरिं प्रविशन्तीत्यर्थः ।। ४७ ।।

**उमर्जी**—भक्त्यानुष्ठितानामेव फलसाधनत्वमाह— **कृष्ण इति** ।। रताः पूजादिना आसक्तिमन्तः । अनु अनुसृत्य स्मरन्तः । तद्भाविताः तस्मिन्कृष्णे भावो भक्तिः सञ्जाततद्भावाः तद्भाविताः । तदस्य सञ्जातमित्यच् । तद्गतमानसाः निरन्तरमनोवृत्तिलक्षणध्यानवन्तः । देहे स्थूलसूक्ष्मशरीरे अविद्यादावपि भिन्ने विदारिते सति प्रविशन्ति । अभेदशंकावारणाय हविर्यथेति दृष्टान्तः ।। ४७ ।।

**उपेन्द्र**—भक्तानुष्ठितानामेव फलसाधनत्वमाह— **कृष्ण इति** ।। पूजनादिना आसक्तिमन्तः । भावो भक्तिः । तद्भाविताः सञ्जाततद्भावाः । तस्मिन्कृष्णे गतं मानसं मनो येषां ते निरन्तरमनोवृत्तिलक्षणध्यानवन्तः । देहे स्थूलसूक्ष्मशरीरे। अपिशब्दा-दविद्यादौ भिन्ने विदारिते सति प्रविशन्ति । अभेदशंकावारणाय हविर्यथेति दृष्टान्तः ।। ४७ ।।

**कोनेरी**—न केवलं सञ्चितपापकर्मणां नाशः । किन्तु भोगेन प्रारब्धकर्मक्षपणानन्तरं योग्यतानुसारेण चतुर्विधमुक्तिं प्राप्नुवन्तीत्याह— **कृष्ण इति** ।। ये कृष्णे रताः आसक्ताः । कृष्णमनुस्मरन्तः हृदि ध्यायन्तः । तद्भाविताः तेन हरिणा भक्तत्वेनानुगृहीताः । 'यमेवैष वृणुते तेन' ति श्रुतेः । तद्गतमानसाः तस्मिन्बिम्बभूते हरौ स्थितं मानसं येषां ते तथा । ते अधिकारिणः देहे लिङ्गदेहे । विरजातरणेन भिन्ने नष्टे । कृष्णं मूलरूपिणं कृष्णम् । प्रविशन्ति तत्सन्निधिं प्राप्नुवन्ति । 'कृष्णो मुक्तैरिज्यते वीतमोहैर' त्युक्तेः । अपिशब्दः अङ्गसायुज्यप्राप्तियोग्यस्य देवस्य सूचकः । देहशब्दः तन्त्रन्यायेनोपात्तः । ये देवोत्तमाः सायुज्ययोग्याः ते देवाः हरेर्देहेऽपि प्रविशन्ति । उक्तं च भाष्ये—

> मर्त्यं देहं परित्यज्य चित्तिमात्रात्मदेहिनः ।
> चित्तिमात्रेन्द्रियाश्चैव प्रविष्टो विष्णुमव्ययम् ।।

तदङ्गानुनुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम् ।
कुर्वन्ति भुञ्जते भोगांस्तदन्तर्बहिरेव वा ।।
यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिताः ।
आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति ।
गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत् ।। इतिं ।।
यथा मन्त्रैर्वेदमन्त्रैः हुतं हविः हुताशे अग्नौ प्रविशति तथेति ।। ४७ ।।

**स्मृ.कृष्णाचार्य**—भगवत्स्मरणस्य तत्प्रेवशलक्षणमोक्षहेतुत्वात्तत्स्मरणं सदा कार्यमिति स एवाह— **कृष्णे रता इति** ।। तस्मिन्नेवासक्ताः । कृष्णमनुस्मरन्तः भक्त्यादिना सम्यग्भगवत्स्मरणकर्तारः । तद्भावितास्तस्मिन्भक्तियुक्ताः । तद्गत-मानसाः तस्मिन्नेव निवेशितमनोवन्तः । ये भक्ताः ते । देहे पञ्चभूतात्मकस्थूल-सूक्ष्मदेहे भिन्ने नष्टे सति। विष्णुं वैकुण्ठस्थितं वासुदेवं प्रविशन्ति । तत्र मुक्ताः सन्तः। तत्र दृष्टान्तः ।। **हविर्यथेति** ।। मन्त्रहुतं यज्ञे दत्तं हविः पुरोडाशादिकम् । हुताशे आवहनीयादिसंस्कृताग्नौ प्रविशति । तद्वद्भगवत्स्मरणकर्तारः विष्णुं प्रविशन्तीति तस्माद्भगवत्स्मरणादिकं कार्यमिति भावः ।। ४७ ।।

**कृष्णामृतमहार्णवः**

**सा हानिस्तन्महच्छिद्रं सा चान्धजडमूकता ।**
**यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते ।। ४८ ।।**

**ताम्रपर्णी**—न केवलं फलातिशयेच्छया तत्स्मरणमनुष्ठेयम् । किन्तु तत्त्याग-स्यातिदुष्टत्वाच्चेति भावेनाह— **सेति** ।। वासुदेवः क्षणं मुहूर्तम् । चापिशब्दाभ्यां तदर्धं कालं वा । न चिन्त्यत इत्यतः सा हानिः । भगवत्स्मरणस्य लाभरूप-त्वात्तदेव महच्छिद्रं पापम् । 'स्मर्तव्यः सततं विष्णुः' इत्यादिविधित्यागात्सैवान्धता अज्ञता ज्ञातव्या । अपरिस्फूर्तेस्सैव जडता मन्दबुद्धिता । सूक्ष्मबुद्धित्वे सदा स्मरणासम्भवात्सैव मूकता । स्मरणस्यैव श्रवणकथनबलत्वात् ।। ४८ ।।

**उमर्जी**—स्मरणाकरणमेवानिष्टरूपमित्याह— **सेति** ।। वासुदेवो न चिन्त्यत इति यत् सा हानिः । आयुषः इति शेषः । हानिशब्दापेक्षया सेति स्त्रीलिङ्गप्रयोगः ।

तदचिन्तनं महच्छिद्रं अतिपापम् । सा चान्धजडमूकता । अन्धत्वादिधर्माभेदोक्त्या भगवदचिन्तकः अन्धः जडः मूक इत्यर्थः ।। ४८ ।।

**उपेन्द्र**—स्मरणाकरणेऽनर्थपरं वाक्यं पठति— **सेति** ।। वासुदेवो न चिन्त्यत इति यत् सा हानिः । हानिशब्दापेक्षया सेति स्त्रीलिङ्गनिर्देशः । तदचिन्तनं महछिद्रं महापापम् । चोऽवधारणे । "सैवान्धजडमूकता" इति अन्धत्वादिधर्माभेदोक्त्या भगवदचिन्तकः अन्धो जडो मूक इत्यर्थः ।। ४८ ।।

**कोनेरी**—हरिस्मृत्यभावोऽनर्थहेतुरित्याह— **सेति** ।। नृभिः या घटिका यन्मुहूर्तं यत्क्षणं वापि । वासुदेवो न चिन्त्यते । सा घटिका हानिः हानिप्रदम् । तन्मुहूर्तं छिद्रं दोषप्रापकम् । सा घटिका अन्धजडमूकभावप्रदा । अतो मुमुक्षुणा हरेः स्मरणादिकं सर्वदा कार्यमिति ।। ४८ ।।

**स्मृ.कृष्णाचार्य**—भगवच्चिन्तारूपस्मरणरहितस्य अनर्थफलश्रवणान्मोक्षार्थिना तच्चिन्तनं सदा कार्यमिति तद्वाक्यं पठति— **सा हानिरिति** ।। यत् येन संसारिणा मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते न स्मर्यते । तस्य भगवदचिन्तनं यत् सा हानिः आयुषः प्रज्ञादेश्च नाशप्रदं भवति । तत् तस्य अचिन्तनं तन्महच्छिद्रं आयुष्यादेः छिद्रप्रदं हानिप्रदं दोषप्रदं वा । सा चान्धजडमूकता । सा तदचिन्त्यता। जडमूकता जाड्यधर्मादेः बधिरमूकभावस्य च प्रदा यत्तस्मात्कारणात् वासुदेव-चिन्तनं स्मरणादिकं सदा कार्यमिति ।। ४८ ।।

**कृष्णामृतमहार्णवः**

**नारायणो नाम नरो नराणां**
**[1]प्रसह्य चोरः कथितः पृथिव्याम् ।**
**अनेकजन्मार्जितपापसञ्चयं**
**हरत्यशेषं स्मृतमात्र एव ।। ४९ ।।**

**ताम्रपर्णी**—नन्वनेकजन्मार्जितपापानां कथं स्मरणान्निवृत्तिः तेषामनियतदेश-कालविपाकत्वादजराभिमतत्वेन प्रबलतया अनिवर्तनीयत्वाच्चेत्यतः स्मरणेन

१. 'प्रसिद्धचोरः' इति कोनेरी, स्मृ.कृ. तथा क. पाठः ।

प्रसन्नो भगवान्निवर्तयतीत्याह— **नारायण इति** ।। नारायणो नाम नारायण इति प्रसिद्धः । नरः परमपूरुषः 'रीङ् क्षये' इति धातोरक्षीणः पूर्णो भगवान् । पृथिव्यां चोरः कथितः । कथं, यतो नराणामनेकजन्मार्जितपापसञ्चयं स्मृतमात्र एव । निमित्तसप्तमी इयम् । स्मरणादेव अशेषं निःशेषं यथा भवति तथा हरतीत्यर्थः ।। ४९ ।।

**उमर्जी**—स्मरणस्य पापपरिहारकत्वप्रकारमुपपादयति— **नारायण इति** ।। हे नर इति नृशब्दः बहुवचनम् । रीङ् क्षय इति धातोः न रीयते इति नरः शश्वदेकप्रकारो नारायण इति वा । स्मृतमात्रः केवलस्मरणविषयः सन्नेव प्रसह्य बलात्कारेण हरतीति चोर इति कथितः । यद्वा नराणामयं नारायण एव नरः कृष्णत्वेनावतीर्णः सन् अशेषनवनीतादिकं हरतीति चोर इति कथितः । अनेकजन्मार्जितपापसञ्चयं हरतीति प्रसिद्धम् ।। ४९ ।।

**उपेन्द्र—स्मरणेऽशेषदोषपरिहारः** कथमित्यत तं प्रकारमुपपादयति— **नारायण इति** ।। हे नर इति नृशब्दो बहुवचनम् । नारायणः स्मृतमात्रः केवलस्मरणविषयः सन्नेव प्रसह्य बलात्कारेण हरतीति हेतोश्चोर इति कथितः । यद्वा नारायण एव नरः कृष्णत्वेनावतीर्णः नवनीतादिकं मुष्णन् अशेषं पापं हरतीति चोर इति शास्त्रे कथितः । "नवनीतादि मुष्णन्" इत्युक्तेः । एवं स्मृतमात्रः केवलस्मरणविषयः सन्नेव अनेकजन्मार्जितपापसञ्चयं हरतीति नाम प्रसिद्धम् । अतः माहात्म्यज्ञानपूर्वकस्मरणेन पापपरिहारको भगवानेवेति भावः ।। ४९ ।।

**कोनेरी**—भगवन्नाम्नः स्मृतिमात्रेण सर्वपापपरिहारकत्वमुक्तम् । तत्कथमित्याशंक्य बुद्ध्यारोहार्थं लोके चौर्यकर्मकुशलाः चोराः धनिनां गृहं प्रविष्टाः यथा सर्वस्वमपहरन्ति तद्वद्भगवन्नाम्नोऽपि पापनिर्हरणे चोरसमानधर्ममाह— **नारायण इति** ।। भक्त्या नारायण इति स्मृतं नाम यस्मात्, नराणां अनेकजन्मार्जितपापसञ्चयं अशेषं स्मृतिमात्रे क्रियमाण एव हरति नाशयति । तस्मात्प्रसिद्धचोर इति पृथिव्यां कथितः । ज्ञानिभिरिति शेषः । कीदृग्विधः । न रीयते न क्षीयते इति

नरः नाशरहितः चोराणां राजादिभिर्नाशो दृष्टः । अस्यानन्तकालेऽपि कैरपि नाशो नास्तीति सूचनाय प्रसिद्धचोर इति चोरपदं प्रायुङ्क्त ।। ४९ ।।

**स्मृ.कृष्णाचार्य**—नारायणस्मरणमात्रस्य समस्तपापपरिहारकत्वात्तत्स्मरणं सदा कार्यमिति स एवाह— **नारायणेति** ।। नरः शश्वदेकप्रकारः नररूपी नारायणः । पृथिव्यां च प्रसिद्धचोरः कथितः । तस्य चोरत्वं कुत इत्यत उक्तम् ।। **अनेकेति** ।। नारायणः स्वभक्तानामनेकजन्मभिः सञ्चितानां मनोवाक्कायकृतपापानां सञ्चयं समूहं हरति अपहरति । तत्कथमित्यत उक्तम् ।। **स्मृतिमात्रेति** ।। केवलस्मरणमात्रेण साधनान्तरमनपेक्ष्य स्मृतिमात्रेण हरति । तस्मात्तत्स्मरणं कार्यमिति । प्रसह्यचोर इति पाठे प्रसह्य हरतीति सम्बन्धः ।। ४९ ।।

## कृष्णामृतमहार्णवः

**यस्य संस्मरणादेव वासुदेवस्य चक्रिणः ।**
**कोटिजन्मार्जितं पापं तत्क्षणादेव नश्यति ।। ५० ।।**

**ताम्रपर्णी**—उक्तमेव विवृणोति— **यस्येति** ।। ५० ।।

**उमर्जी**—भक्तिपूर्वकस्मरणमेव पापनिवर्तकमित्याह— **यस्येति** ।। **यस्य चक्रिणः** स्मरणाद्भक्तिपूर्वकस्मरणात् । तत्क्षणात्स्मरणाव्यवहितक्षणादेव नश्यति।।५०।।

**उपेन्द्र**—पूर्वोक्तमेवोपपादयति— **यस्येति** ।। यस्य चक्रिणः स्मरणाद्भक्तिपूर्वक-स्मरणात् तत्क्षणादेव स्मरणाव्यवहितक्षणादेव नश्यति ।। ५० ।।

**कोनेरी**—तदेव विशदयति— **यस्येति** ।। यस्य चक्रिणः वासुदेवस्य । सर्व-प्राणिषु नियन्तृत्वेन वासनाद्वासुः मुख्यप्राणः तस्य देवस्य स्वामिनः स्मरणात् स्मृ चिन्तायामिति धातोः भक्त्या सन्ततध्यानादेव । ध्यातुर्कोटिजन्मार्जितं पापं तत्क्षणादेव नश्यतीति ।। ५० ।।

**स्मृ.कृष्णाचार्य**—उक्तार्थं वचनान्तरमाह— **यस्येति** ।। यस्य चक्रिणो वासुदेवस्य संस्मरणाद्भक्त्यादियुक्तस्मरणादेव स्वभक्तानामनेकजन्मभिः कोटि-जन्मभिः सञ्चितः आर्जितः पापराशिः स्मरणकरणानन्तरमेव नश्यति नष्टो भवति । तस्मात्स्मरणं सदा कार्यमिति ।। ५० ।।

### कृष्णामृतमहार्णवः

**किं तस्य बहुभिस्तीर्थैः[1] [2]किं तपोभिः किमध्वरैः ।**
**यो नित्यं ध्यायते देवं नारायणमनन्यधीः ।। ५१ ।।**

**ताम्रपर्णी**—ननु सन्ततहरिध्यानार्थं "अचलत्वं चे"त्युक्तन्यायेनैकत्र स्थातव्यम् । तथात्वे तीर्थयात्रादिविलोप इत्यत आह— **किं तस्येति** ।। अनन्यधीः प्रधानत्वेनान्यदेवतानुपासकः । विषयाव्यावृत्तचित्तो वा ।। ५१ ।।

**उमर्जी**—एवमाद्यपद्योक्तस्मरणस्य फलसाधनत्वं प्रतिपाद्य क्रमप्राप्तध्यानस्य फलसाधनतां बहुप्रमाणैरुपपादयन् अशेषतीर्थनिषेवणादधिकं फलमाह— **किं तस्येति** ।। अनन्यधीः अविद्यमाना अन्यत्र धीर्यस्य स तथा । भगवदेकनिष्ठबुद्धिरित्यर्थः । अधिकारी नित्यं ध्यायते । तस्य तीर्थादिभिः किं प्रयोजनं साध्यमस्ति । न किमपीत्यन्वयः । ननु तीर्थादिना फलाभावप्रतिपादनमयुक्तम् । "**ज्ञानी च कर्माणि सदोदितानि**" इत्यादि ज्ञानिनोऽपि कर्मविधिश्रवणादिति चेन्न । ज्ञानिनः **मुक्तौ आनन्दातिशयार्थत्वेन कर्मणः कर्तव्यत्वप्रतिपादनात्** । अत्र ज्ञानार्थिनो ध्यानाधिकारिणः ध्यानस्यैवाधिकफलत्वात्किं तस्येत्युक्तम् ।। ५१ ।।

**उपेन्द्र**—एवमाद्यपद्योक्तस्मरणस्य फलसाधनत्वेन कर्तव्यत्वमुपपाद्य ध्यानस्य फलसाधनतां बहुप्रमाणैरुपपादयन्नशेषतीर्थनिषेवणादधिकफलमाह— **किं तस्य इति** ।। योऽधिकारी । अन्यविषयका न भवतीत्यनन्यभगवद्विषयका धीर्यस्य स तथा । अतो किं तस्य दानैरित्यन्वयः । ननु "ज्ञानी च कर्माणि सदोदितानि कुर्यात्" इत्युत्तरत्र प्रतिपादनात्तद्विरोध इति चेन्न । ज्ञानिनः आनन्दातिशयार्थत्वेन कर्मणः कर्तव्यत्वप्रतिपादनात् । अत्र ज्ञानार्थिनो ध्यानाधिकारिणः ध्यानस्यैवाधिक-फलत्वात्किं तस्येत्युक्तम् ।। ५१ ।।

**कोनेरी**—अपरोक्षज्ञानिनः मुक्तिप्राप्तौ तीर्थादिसेवनया न प्रयोजनमित्याह— **किमिति** ।। योऽधिकारी अनन्यधीः भगवदितरत्र मनोरहितः । नित्यं शश्वदेक-

---

१. 'दानैः' इति उपे. पाठः ।

२. 'किं तस्य बहुभिर्व्रतैः' इति कोनेरी पाठः ।

प्रकारम् । नारायणं हृद्यपरोक्षीकृत्य ध्यायते नित्यं निरन्तरं ध्यानं करोति । तस्य बहुभिस्तीर्थैः किम् आचरितैः बहुभिर्व्रतैश्च किम् । मुक्तिप्राप्तौ किं प्रयोजनं न किमपीति । तीर्थव्रतजन्यपुण्यानां अपरोक्षज्ञानसाधनत्वेन ज्ञानोत्पत्तिदशायामेव तेषामुपक्षीणत्वात् ज्ञानोत्तरकृतकर्मणां आनन्दोद्रेककारणत्वेन एतैः किं प्रयोजनमिति बिम्बापरोक्षरहितभगवद्भक्तपरत्वे रुच्यर्थमिति ज्ञेयम् ।। ५१ ।।

**स्मृ.कृष्णाचार्य—**"अर्चितः संस्मृतो ध्यात" इत्युक्तभगवदर्चनस्मरणयोः कर्तव्यत्वे बहुप्रमाणान्युक्त्वा, ध्यात इत्युक्तध्यानकर्तव्यत्वे प्रमाणान्याह । तत्र तावद्भगवद्ध्यानस्य तीर्थस्नानबहुवैष्णवव्रताद्यपेक्षया अधिकफलकत्वाद्भगवद्ध्यानं सदा कार्यमिति वाक्यं प्रमाणयति— **किं तस्येति** ।। यः नित्यमनन्यधीः तदेकमनस्कः सन् ध्यायते ध्यानं करोति । तस्य भक्तस्याधिकारिणः । बहुभिस्तीर्थैः गङ्गादिसर्वतीर्थस्नानैः किं फलमस्ति । किं तपोभिः कृच्छ्रचान्द्रायणादिसच्छास्त्रावर्तनादितपोभिः किं फलम् । अध्वरैरग्निष्टोमादिभिर्यज्ञैश्च किं फलम् । एतत्सर्वफलापेक्षया भगवद्ध्यानफलस्यैवाधिक्यात् सदा मोक्षार्थं भगवद्ध्यानं कर्तव्यमिति ।। ५१ ।।

**कृष्णामृतमहार्णवः**

**ये मानवा विगतरागपरावरज्ञा**
**नारायणं सुरगुरुं सततं स्मरन्ति ।**
**ध्यानेन तेन हतकिल्बिष[1]चेतनास्ते**
**मातुः पयोधररसं न पुनः पिबन्ति ।। ५२ ।।**

**ताम्रपर्णी—**हरिस्मरणे इत्थंभावपूर्वं फलमाह— **ये मानवा इति** ।। परावरेति भावप्रधानो निर्देशः । पारावर्यज्ञाः तारतम्यज्ञाः । विगतरागाश्च ते पारावर्यज्ञाश्चेति विग्रहः । अत एव तारतम्यान्तर्गतत्वेन सुरगुरुं नारायणं सततं स्मरन्ति । यद्वा "परा अप्यवरा यस्मात्स हि विष्णुः परावर" इति वचनाच्छास्त्रश्रवणेन ब्रह्मानुभववन्तः । सततं नारायणं स्मरन्ति । तेन सततानुस्मरणलक्षणेन ध्यानेन हतकिल्बिषं चेतः येषां ते हतकिल्बिषचेतसः । हतकिल्बिषचेतना इति पाठेऽपि

---

१. 'चेतसस्ते' इति ताम्र. तथा उपं. पाठः ।

चेतनशब्देन चित्तं चेतनेत्युक्तो मनःप्रभेद इत्युच्यते । 'पञ्चवृत्तिमनोवद्व्यपदिश्यते' इति सूत्रात् । 'चित्तव्याप्तिस्तु चेतना' इति वचनात् । तथाच बहुदुर्विषयस्मृतिकारणचेतनस्य मनःप्रभेदस्यापि कल्मषमपगच्छतीति भावः ।। ५२ ।।

**उमर्जी**—ध्यानकर्तुः प्रबलप्रतिबन्धेन ध्यानहानिः स्यात् किमित्यत आह— **य इति** ।। विगतरागपरावरज्ञाः विगतः रागः विषयाभिलाषो येषां ते च ते । पराः ब्रह्मादयः अवराः यस्मात्तं जानन्तीति ते तथा । यद्वा विगताः रागादिदोषा येषां ते तथा ब्रह्मादयः परस्मादवरा ये तान् परिवारतया जानन्तीति तथोक्ताः ।

परं प्रति यतो नीचाः ब्रह्माद्यास्सर्वदेवताः ।

परावरास्ततः प्रोक्ता इति जानन्ति ये नराः।

परावरज्ञास्ते प्रोक्ता.................... ।। इत्यादेः ।।

सुरगुरुं ब्रह्मादीनां ज्ञानप्रदम् । हतकिल्बिषचेतनाः हतं किल्बिषं "आत्मसर्वाङ्गसम्बद्धं मलं किल्बिषमुच्यते" इति वचनात् मलयुक्तं चेतयतीति चेतनं मनः येषां ते तथा । पुनः जन्मान्तरप्राप्यं न पिबन्ति । ध्यानप्रतिबन्धकदेहरहिता भवन्तीत्यर्थः ।। ५२ ।।

**उपेन्द्र**—भगवद्ध्यानकर्तुः फलमाह— **य इति** ।। विगतो रागो येषां ते, ते च ते परावरत्वं जानन्तीति परावरज्ञाः । यद्वा विगतरागाः ये परस्मादन्याः ब्रह्मादयस्तान् तरतमभावेन जानन्तीति तथोक्ताः ।

परं प्रति यतो नीचाः ब्रह्माद्यास्सर्वदेवताः ।

परावरास्ततश्चोक्ता................ ।।

इत्युक्तेस्सततं स्मरन्ति निरन्तरं ध्यानं कुर्वन्ति । हतकिल्बिषचेतसः चेतयतीति चेतः मनः हतं किल्बिषं यस्य तत् मनो येषां ते । पुनः जन्मान्तरप्राप्यं न पिबन्ति । ध्यानप्रतिबन्धकदेहरहिता भवन्तीत्यर्थः ।। ५२ ।।

**कोनेरी**—प्राप्तापरोक्षाणां फलमाह— **य इति** ।। ये विगतरागपरावरज्ञाः विगतरागाश्च ते परावरज्ञाश्च ते मानवाः अपरोक्षज्ञानिनः । णीञ् प्रापण इति धातोः मां अपरोक्षज्ञानं नयति भक्तानामिति मानो हरिः । तमपरोक्षेण जानाति "वा गतिगन्धनयो"रिति धातोः मानवः । गत्यर्थानां ज्ञानार्थत्वात मानवशब्दो अपरोक्ष-

ज्ञानवाचीति ज्ञेयः । सुरगुरुं ब्रह्मादिगुरुं ज्ञानोपदेष्टारं नारायणं सततं अखण्डित-ध्यानेन स्मरन्ति । तेन हतं किल्बिषं यस्य तत् हतकिल्बिषं तच्च तच्चेतनं येषां ते तथा जनादिलोकस्थाः । मातुः पयोधररसं पुनः न पिबन्ति आजनात्र जनिर्भुवीत्युक्तेः ।। ५२ ।।

**स्मृ.कृष्णाचार्य—** भगवद्ध्यानस्य गर्भवासजन्मादिसर्वदुःखनिवर्तकत्वात्तत्सदा कार्यमिति स एव आह— **ये मानवा इति** ।। विगतरागपरावरज्ञाः विशेषेण निर्गत-विषयादिरागवन्तः परावरतत्त्वज्ञानवन्तः ये मानवाः ज्ञानिनः । भक्त्या नारायणं सुरगुरुं ब्रह्मादिगुरुं सततं स्मरन्ति निरन्तरं ध्यायन्ति । ते सततसंस्मरणभगव-द्ध्यानेन हतकिल्बिषचेतनाः नष्टकिल्बिषमनस्काः । मातुः पयोधररसं पुनर्गर्भवासेन ततो निर्गत्य शैशवावस्थायां मातुः स्तनक्षीरं पुनर्न पिबन्ति । जननमरणदुःखरहिता भवन्ति तस्माद्भगवद्ध्यानं कर्तव्यमिति ।। ५२ ।।

**कृष्णामृतमहार्णवः**

**हे चित्त [१]चिन्तयस्वेह वासुदेवमहर्निशम् ।**
**नूनं यश्चिन्तितः पुंसां हन्ति संसारबन्धनम् ।। ५३ ।।**

**ताम्रपर्णी—** हरिस्मरणार्थं चित्ताभिमानिदेवताप्रार्थनं कार्यमिति भावेनाह— **हे चित्तेति** ।। अभिमानिषु चिन्तनं मुख्यमिति भावेन चिन्तयस्वेत्युक्तम् । मया चिन्तनं कारयस्वेति यावत् । इह चिन्तनीयतया प्रसक्तेषु मध्ये । वासुदेवं मुख्यतः चिन्तयेत्यर्थः । यद्वा इदानीमेव चिन्तय । कालविलम्बो न विधेयः । "इह चेदवेदीदथ सत्यमस्ति" इत्यादि श्रुतेः । स्नेहादित्यपि क्वचित्पाठस्तेन स्नेहादि-त्यादरः । अहर्निशमिति नैरन्तर्यमुच्यत इति ज्ञेयम् ।। ५३ ।।

**उमर्जी—** ध्यानस्य चित्तदेवताप्रसादसाध्यत्वात्तत्प्रार्थनाप्रकारं निरूपयति— **चित्त इति** ।। इह हृदि चिन्तयस्व । चिन्तितः भगवान् संसाराख्यबन्धनं हन्तीति नूनं निश्चयः ।। ५३ ।।

---

१. 'चिन्तय स्नेहात' इति ताम्र. पाठः ।

**उपेन्द्र**—ध्यानस्य मनोनैरन्तर्यपूर्वकत्वेन कर्तव्यत्वात्तन्निग्रहोपायं दर्शयति— **हे चित्तेति** ।। इह हृदयाकाशे चिन्तितः ध्यातो यो हरिः । संसाराख्यबन्धनं हन्ति नाशयति ।। ५३ ।।

**कोनेरी**—भगवद्ध्यानविषये स्वेनैव स्वात्मा बोधनीय इत्याह— **हे चित्त इति** ।। हे चित्त । इह संसारावस्थायाम् । त्वं अहर्निशं वासुदेवं चिन्तयस्व । चिन्तितो यो वासुदेवः पुंसां संसारबन्धनं संसारेण जीवं बध्नातीति संसारबन्धनं लिङ्गशरीरम् । तन्नूनं निश्चयेन हन्ति नाशयति ।। ५३ ।।

**स्मृ.कृष्णाचार्य**—भगवच्चिन्तारूपध्यानस्य संसारनिवर्तकत्वश्रवणात् तत्कर्तव्यमित्याह— **हे चित्तेति** ।। स्वचित्तं प्रति यस्यकस्यचिद्भक्तस्य सम्बोधनम् । हे चित्त हे मनः । इह मनुष्यदेहे वासुदेवमहर्निशं दिवारात्रं सर्वदा चिन्तयस्व ध्यानं कुरु । ततः किं फलमित्यत उक्तम् ।। **हन्ति संसारबन्धनमिति** ।। हे **मच्चित्त** त्वया चिन्तितः ध्यातः । यः वासुदेवः । पुंसां तादृशचित्तयुक्तभगवद्भक्तपुरुषाणाम् । संसारबन्धनं अनादिकालमारभ्य विद्यमानप्राकृतसंसारबन्धनं हन्ति नाशयति । तस्मात्तच्चिन्तनं त्वया कार्यमिति ।। ५३ ।।

**कृष्णामृतमहार्णवः**

*** आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः ।**
**इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ।। ५४ ।।**

**ताम्रपर्णी**—साधनेषु मध्ये मोक्षान्तरङ्गतया ध्यानस्य निर्णीतत्वादवश्यमनुष्ठेयमित्याह— **आलोड्येति** ।। विचार्य सर्वशास्त्राण्युपक्रमादिना पुनःपुनः विचार्य । आलोड्य एकवाक्यतां नीत्वा । नारायणः सदा ध्येय इतीदं सुनिष्पन्नं निर्णीतम् ।। ५४ ।।

**उमर्जी**—भगवानेव ध्येय इत्यत्र निर्णयरूपं व्यासवाक्यं पठति— **आलोड्येति** ।। आलोडने इतिकर्तव्यतां दर्शयति— **विचार्येति** ।। शास्त्रतत्त्वं विचार्य स्थितस्य ममेति शेषः । विचारफलमाह— **इदमिति** ।। कस्यायं परामर्श

---

*अयं श्लोकः महाभारते १३-१२४ । नृसिंहपुराणे च ।

इत्यत उक्तम् ।। **ध्येय इति** ।। सर्वोत्तमत्वेनेति पूरणीयम् । शास्त्रमुख्यार्थत्वात् ध्येय इति भावः ।। ५४ ।।

**उपेन्द्र**— अयमेव ध्येय इति शास्त्रनिश्चितार्थं व्यासवाक्यं पठति— **आलोड्येति**।। आलोडने इतिकर्तव्यतां दर्शयति— **विचार्येति** ।। पुनःपुनः विचार्य स्थितस्य ममेति शेषः । विचारफलमाह— **इदमिति** ।। कस्यायं परामर्श इत्यत उक्तम् ।। **ध्येय इति** ।। सर्वोत्कृष्टत्वेनेति पूरणीयम् । शास्त्रमुख्यार्थत्वात्सर्वोत्तमत्वेन स एव ध्येय इत्यर्थः ।। ५४ ।।

**कोनेरी**—श्रीनारायणध्यानकरणे किं मानमित्यत आह— **आलोड्येति**।। व्यासादिभिः सर्वशास्त्राणि पुनःपुनः विचार्य । आलोड्य आलोडने कृते मथने कृते । इदमेकमेव तत्त्वं सु सम्यक् निष्पन्नं उत्पन्नम् । तत्किमिति तत्राह— **ध्येयो नारायणः सदेति** ।। आलोड्येत्यव्ययं सप्तम्यर्थकम् । अव्ययानामनेकार्थत्वात् आलोडने कृते सतीत्यर्थः ।। ५४ ।।

**स्मृ.कृष्णाचार्य**—चित्ते सर्वशास्त्रालोचनविचारादौ क्रियमाणे सति भगवद्ध्यानमेव कर्तव्यमिति निर्णीतत्वात्तद्ध्यानं कर्तव्यमित्याह ऋषिः— **आलोड्येति** ।। सर्वशास्त्राणि ऋगादिवेदभारतपञ्चरात्रादिशास्त्राणि आलोड्य मथित्वा । यद्वा तथा पुनःपुनरुपक्रमादितात्पर्यलिङ्गैरालोचने क्रियमाणे सति इदमेकं प्रधानं निष्पन्नं निश्चितम् । सर्वैर्विद्वद्भिः । तत्किमित्यत उक्तम् ।। **ध्येय इति** ।। नारायणः सदा मुक्त्यर्थं ध्येय इति । तथाच भगवद्ध्यानकर्तव्यत्वस्य सर्वशास्त्रैर्निर्णीतत्वान्मोक्षार्थिना तत्कार्यमिति ।। ५४ ।।

**कृष्णामृतमहार्णवः**

***स्मृते सकलकल्याणभाजनं यत्र जायते ।**
**¹पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ।। ५५ ।।**

**ताम्रपर्णी**—न केवलं स्मरणं ध्यानादिद्वारा प्रसादजनकम् । किन्तु सत्कर्मैवपुण्यप्रदम् । तेन च पुनरन्तःकरणशुद्धिद्वारा ज्ञानवृद्धिरित्याह— **स्मृत इति** ।। यत्र

---

* अयं श्लोकः ब्रह्मपुराणे १९१-१७ । विष्णुपुराणे ५-१७-१७ । १. 'पुरुषप्रवरं' इति क्वचित्पाठः

यस्मिन्हरौ स्मृते पुरुषः सकलकल्याणानां पुण्यानां भाजनं पात्रम् । जायते भवति । तमित्यन्वयः ।। ५५ ।।

**उमर्जी**—दास्यरूपसाधने प्रकारप्रतिपादकं विष्णुपुराणोक्तमक्रूरवाक्यं पठति- – **स्मृत इति** ।। यत्र यस्मिन्हरौ स्मृते सति । पुरुषः सकलकल्याणानां भाजनं पात्रं जायते । तद्गतं वा भवति । शरणं व्रजामीत्यन्वयः । अस्यैवात्मार्पण-रूपत्वम्। "नित्यं किंकरभावेन स्वात्मानं विनिवेदयेत्" इति वचनात् । शरणं नाम—

रक्षतीत्येव विश्वासः तदीयोऽहमिति स्मृतिः ।
शरणागतिरेषा स्याद्विष्णौ मोक्षफलप्रदा ।। इत्युक्तेः ।। ५५ ।।

**उपेन्द्र**—श्रीविष्णुपुराणोक्तमक्रूरवाक्यं पठति— **स्मृत इति** ।। यत्र यस्मिन् हरौ रक्षतीत्यादिना स्मृते सति सकलकल्याणानां भाजनं पात्रं जायते भवति । ततो **हरेर्भाजनमुत्पद्यत इति वा** ।

शरणं नाम—

रक्षतीत्येव विश्वासः तदीयोऽहमिति स्मृतिः ।
शरणागतिरेषा स्याद्विष्णौ मोक्षफलप्रदा ।। इत्युक्तेः । इदमेव दास्यम्-–"नित्यं किंकरभावेन स्वात्मानं विनिवेदयेत्" इति वचनात् ।। ५५ ।।

**कोनेरी**—यत्र संसारे । हरौ स्मृते विषयतां गते सति । पुरुषः अधिकारी जनः । सकलकल्याणानां मङ्गलानाम् । भाजनं पात्रम् । जायते भवति । तं हरिं शरणं व्रजामीति अधिकारिणा ध्येय इति पूर्वेणान्वयः ।। ५५ ।।

**स्मृ.कृष्णाचार्य**—भगवत्स्मरणस्य सर्वमङ्गलपरत्वात्तत्स्मरणरूपध्यानं कार्यमिति भक्तवाक्यं पठति— **स्मृतेति** ।। यत्र पुरुषदेहे । यस्मिन्हरौ । स्मृते भक्तिज्ञाना-दिभिस्सम्यक्स्मरणे कृते सति । पुरुषाः भगवद्भक्ताः सकलकल्याणभाजनं सकलानां मङ्गल-रूपाभीष्टानां भाजनं पात्रं जायते भवति । सकलकल्याणवतो **हरेर्भाजनं** जायते उत्पद्यते । तमजं हरिं नित्यं शरणं व्रजामि । अनेन हरेः शरणं प्राप्तस्य भक्तस्य स्मरणमेव मङ्गलप्रदमिति सूचितमिति । तेन तत्कार्यमिति ।। ५५ ।।

**कृष्णामृतमहार्णवः**

**वेदेषु यज्ञेषु तपस्सु चैव**
**[16]दानेषु तीर्थेषु व्रतेषु यञ्च ।**
**[17]इष्टेषु पूर्तेषु च यत्प्रदिष्टं**
**पुण्यं स्मृते तत्खलु वासुदेवे ।। ५६ ।।**

**ताम्रपर्णी**—तस्यैव विवरणम् ।। **वेदेष्विति** ।। वेदेषु अधीतेषु । यज्ञेषु अश्वमेधादिषु । तपस्सु अनशनादिषु । व्रतेषु कृच्छ्रादिषु । इष्टेषु वैश्वदेवादिषु। पूर्तेषु अन्नदानादिषु साधनेषु । यत्पुण्यं वेदेषु प्रदिष्टमुपदिष्टमित्यर्थः ।। ५६ ।।

**उमर्जी**—स्वानुमेयवेदाध्ययनादीनां भगवत्स्मृतिपूर्वकानुष्ठितानामेव फलसाधनत्वमाह— **वेदेष्विति** ।। वेदेषु प्रतिपाद्यत्वेन । यज्ञेषु भोक्तृत्वेन । तपस्सु ध्येयत्वेन । दानेषु पत्राधिष्टितत्वेन । तीर्थेषु सन्निहितत्वेन । व्रतेषूद्देश्यत्वेन । इष्टं यजनं, पूर्तं अन्नदानादिकं, तेषु प्रीत्युद्देश्यत्वेन । यद्धर्मसाधनं तस्मिन्स्मृते सति यत्प्रदिष्टं शास्त्रनिर्दिष्टं तत्पुण्यं भवति । वासुदेवस्मृतिपूर्वकानुष्ठितान्येव फलसाधनानीत्यर्थः । तदुक्तं संग्रहरामायणे—

मन्त्रतन्त्रोपकरणकर्तृवह्निषु केशवम् ।
देशे काले च मन्वानाश्चक्रुस्ते कर्म निर्मलम् ।। इति ।। ५६ ।।

**उपेन्द्र**—पञ्चरात्रवचनात्स्वानुष्ठेयवेदाध्ययनादिकं भगवत्स्मृतिपूर्वकानुष्ठितमेव फलसाधनं भवतीत्याह— **वेदेष्विति** ।। वेदेषु प्रतिपाद्यत्वेन । यज्ञेषु भोक्तृत्वेन । तपस्सु ध्येयत्वेन । दानेषु पात्राधिष्ठितत्वेन । तीर्थेषु सन्निहितत्वेन । व्रतेषु उद्देश्यत्वेन । इष्टं यजनं, पूर्तं पूजा, तेषु पूर्तेषु अन्नदानादिषु प्रीत्युद्देश्यत्वेन । यद्धर्मसाधनं तेषु वासुदेवे स्मृते सति यत्प्रदिष्टं शास्त्रनिर्दिष्टं पुण्यं तद्भवति । वासुदेवस्मृतिपूर्वकानुष्ठितान्येव फलसाधनानि भवन्तीत्यर्थः ।। ५६ ।।

---

१६. अहन्यहनि दातव्यमदीनेनान्तरात्मना ।
स्तोकादपि प्रयत्नेन दानमित्यभिधीयते ।। ४० ।। अत्रिसंहितायाम् ।।

१७. अग्निहोत्रं तपस्सत्यं वेदानाञ्चैव पालनम् ।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ।। ४४ ।। अत्रिसंहितायाम् ।।

**कोनेरी**—ध्यानप्राप्यफलमाह— **वेदेष्विति** ।। वेदेषु अर्थानुसन्धानपूर्वकं पठितवेदेषु । यज्ञेषु स्वकृतपञ्चमहायज्ञेषु । तपस्सु कृच्छ्रचान्द्रायणाद्युपवासादितपस्सु । दानेषु तुलापुरुषादिदानेषु क्रियमाणेषु । व्रतेषु विष्णुपञ्चकादिव्रतेषु आचरत्सु । इष्टेषु ज्योतिष्टोमादिषु । पूर्तेषु तटाकादिषु निर्मितेषु । अल्पाधिकारिणां यत्पुण्यं प्राप्यतयोक्तं तत्सदृशं पुण्यं सर्वमपि वासुदेवे स्मृते अखण्डध्यानेन हृदि विषयीकृते । उत्तमाधिकारिणा लभ्यते । खलु यथार्थ इति ।। ५६ ।।

**स्मृ.कृष्णाचार्य**—सकलसाधनैः क्रियमाणपुण्यसङ्घः भगवत्स्मरणमात्रेण भवतीति स्मरणरूपसाधनं कार्यमित्याह कश्चन ऋषिः— **वेदेष्विति** ।। वेदेषु वेदोक्तकर्मसु । यज्ञेषु ज्योतिष्टोमादियज्ञेषु । तपस्सु कृच्छ्रादिषु । दानेषु षोडशमहादानेषु । तीर्थेषु गङ्गादिसर्वतीर्थेषु । स्नानेषु तीर्थस्नानेषु । व्रतेषु चान्द्रायणादिव्रतेषु । इष्टेषु—

अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् ।
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ।।

इति उक्तरीत्या इष्टेषु । पूर्तेषु तटाकादिषु क्रियमाणेषु सत्सु । पुण्यफलं एतैर्जायमानं पुण्यफलं, यत्तु प्रदिष्टं शास्त्रेषु निर्दिष्टं तत्सर्वं पुण्यफलं वासुदेवे स्मृते सति माहात्म्यज्ञानपूर्वकं स्मृते ध्याते सति तादृशाधिकारिणः निर्दिष्टं शास्त्रेष्वभिहितम् । तस्मात्सर्वपुण्यफलापेक्षया अधिकपुण्यप्रदत्वात्तादृशभगवत्स्मरणं सदा कार्यमिति । अत्र सर्वत्र ध्यानप्रकरणत्वात्स्मरणशब्देनाखण्डा स्मृतिरुच्यते "खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यत" इत्युक्तेः ।। ५६ ।।

**कृष्णामृतमहार्णवः**

**आराध्यैव नरो विष्णुं मनसा [१]यद्यदिच्छति ।**
**फलं [२]प्राप्नोति विपुलं भूरि स्वल्पमथापि वा ।। ५७ ।।**

**ताम्रपर्णी**—विष्णोरिवान्यस्याप्यर्चने किमेतत्फलं भवति कदाचिद्विष्ण्वनर्चनेऽपि तद्भवति । कदाचिद्विष्ण्वर्चनेऽपि न भवतीत्यत आह— **आराध्यैवेति** ।। नरो भूरि स्वल्पं वा यद्यत्फलमिच्छति । तद्विपुलं सर्वमपि । विष्णुमेव मनसाऽऽराध्य

---

१. 'यज्ञ वाञ्छति' इति स्मृ.कृ. तथा कृ. पाठः । २. 'प्राप्नोत्यविकलं' इति उम. पाठः ।।

भक्तिपूर्वमाराध्य । विष्णुमाराध्यैवेति वा । प्राप्नोत्येवेति वा सम्बन्धः । फलंप्राप्नोत्यविकलमिति पाठे पूर्णमित्यर्थः ।। ५७ ।।

**उमर्जी**—भगवत्स्मृतिपूर्वकार्चनमेव फलसाधनमित्याह— **आराध्येति** ।। भक्तिपूर्वकमनसा । भूरि स्वल्पं वा । आराध्य भक्ताभिलषितं अविकलं पूर्णं फलं प्राप्नोति ।। ५७ ।।

**उपेन्द्र**—ध्यानादिकमेव फलसाधनमित्याह— **आराध्येति** ।। मनसा भक्तिपूर्वकम् । भूरि स्वल्पमपि वा । आराध्य विपुलं यथेष्टमपि फलं प्राप्नोत्येव ।।५७।।

**कोनेरी**—ऐहिकामुष्मिकं सर्वमपि हरिपूजनेनैव लभ्यमित्याह— **आराध्येति** ।। नरः अधिकारी । मनसा ध्यानावस्थितमनसा । विष्णुमाराध्य । यद्भूरि मोक्षम् । अल्पं स्वर्गादिकं इच्छति । वा इत्यनेन ऐहिकं विषयसौख्यं वा इच्छति । तत्तद्विपुलमाप्नोति । उक्तञ्च द्वितीयस्कन्धे—

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ।। इति ।।

एवकारोऽन्यदेवताव्यावर्तकः । विष्णुमेवेति सम्बन्धः ।। ५७ ।।

**स्मृ.कृष्णाचार्य**—नानाप्रकारेण भगवदाराधनस्यैव भक्तापेक्षितबहुफलसाधनत्वाद्भगवदाराधनं कार्यमित्यत्रिवचनमाह— **आराध्येति** ।। नरोऽधिकारी पुरुषः । मनसा विष्णुं मनोवाक्कायकर्मभिर्नित्यं निरन्तरं भक्तिश्रद्धाद्यतिशयपूर्वकमाराध्य पूजां कृत्वैव । भूरि स्वल्पं वा भूरि महत्फलं मोक्षादिकं स्वल्पं नश्वरं फलं स्वर्गादि विद्यादिफलं धर्मार्थकाममोक्षादिरूपं फलं मनसा वाञ्छति । तद्विपुलं यथेष्टं फलमाप्नोति प्राप्नोति । यतस्तस्माद्बहुफलसाधनत्वात्सदा आराधनं कार्यमिति ।। ५७ ।।

**कृष्णामृतमहार्णवः**

*** [५८]यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् ।**
**मैत्रेयाशेषपापानां धातूनामिव पावकः ।। ५८ ।।**

* अयं श्लोकः विष्णुपुराणे ६-८-२० ।

**ताम्रपर्णी**—स्मरणस्योक्तं सर्वपापनिवर्तकत्वं कीर्तनेऽप्यतिदिशति— **यन्नामेति**।। विलापनं विलापकं नाशकम् । धातूनां रसगन्धकादीनाम् ।। ५८ ।।

**उमर्जी**—ध्यानस्यैवं फलसाधनतां प्रतिपाद्य भगवन्नामकीर्तनफलं प्रमाणैः प्रतिपादयन् अशेषपापनिवर्तकत्वमाह— **यन्नामकीर्तनमिति** ।। न विद्यते उत्तमं यस्मात् अनुत्तमं । यन्नामकीर्तनम् । विलापनं विनाशकरम् । धातूनां सुवर्णादीनाम्। मैत्रेयेति ऋषेस्सम्बोधनम् ।। ५८ ।।

**उपेन्द्र**—ध्यानस्य फलसाधनत्वेन कर्तव्यतां बहुप्रमाणैरुपपादयन् अशेषपापनिवर्तकत्वमाह— **यन्नामकीर्तनमिति** ।। न विद्यते उत्तमं यस्मात् तदनुत्तमम् । भक्त्या यन्नामकीर्तनं विनाशकं धातूनां सुवर्णादीनां पावक इव । मैत्रेयेति ऋषेः सम्बोधनम् ।। ५७ ।।

**कोनेरी**—आराधनफलमुक्त्वा नामकीर्तनफलमाह— **यन्नामकीर्तनमिति** ।। यस्मात् यन्नामकीर्तनं भक्त्या यस्य विष्णोर्नामकीर्तनं अशेषपापानां विलापनं नाशकं भवति । तस्मादुत्तमं सर्वोत्कृष्टमिति । तत्र दृष्टान्तः । यथा पावकः धातूनां सुवर्णादीनां दोषं मलं तत्रत्यं नाशयति । मैत्रेयेति सम्बुद्धिः ।। ५८ ।।

**स्मृ.कृष्णाचार्य**—एवं 'अर्चित' इति त्रिष्वर्थेषु सम्मतिप्रमाणान्युक्त्वा कीर्तित इत्युक्तभगवत्कीर्तनकर्तव्यताविषय एव वचनान्याह आचार्यवर्यः । तत्र भगवन्नामकीर्तनस्य अशेषसञ्चितागामिपापनिवर्तकत्वात्तत्कीर्तनं सदा कार्यमित्यत्र ऋषिवचनमाह— **यन्नामेति** ।। यन्नामकीर्तनं यस्य विष्णोर्नाम्नः कृष्णरामादिनाम्नः कीर्तनम् । तन्माहात्म्यज्ञानपूर्वकमुच्चारणम् । अशेषपापानां मनोवाक्कायकृतजन्मान्तरपापानां विलापनं नाशकम् । कर्मादेरपि पापनिवर्तकत्वात् किमनेनेत्यतः उक्तम् ।। **अनुत्तममिति** ।। तदपि कुत इत्यत उक्तम् ।। **भक्त्येति** ।। एवं भक्त्या भगवन्नामकीर्तनस्याशेषपापनिवर्तकत्वात्तत्सदा कार्यमिति कीर्तनस्य पापनिवर्तकत्वे दृष्टान्तः ।। **धातूनामिति** ।। धातूनां स्वर्णादिलोहानां पावक इव मैत्रेयेति कस्यचिदृषेः सम्बोधनमिति ।। ५८ ।।

---

१८. नामसंकीर्तनं कृत्वा क्षुतप्रस्खलनादिषु ।
वियोगं शीघ्रमाप्नोति सर्वानर्थैरसंशयम ।।विष्णुधर्मोत्तरे ३-३४१-४० ।।

**कृष्णामृतमहार्णवः**

***कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ।**
**प्रयाति विलयं सद्यः सकृत्संकीर्तितेऽच्युते ।। ५९ ।।**

**ताम्रपर्णी**—कलिकल्मषं कलिकृतं कल्मषं कामादि ।। ५९ ।।

**उमर्जी**—कलौ भक्त्या कीर्तनमेव कलिदोषनिवर्तकमित्याह— **कलिकल्मष-मिति**।। अज्ञानं मिथ्याज्ञानलक्षणम् । तस्येतराद्वैलक्षण्यमाह— **अत्युग्रमिति** ।। तस्य फलमाह— **नरकार्तिप्रदमिति** ।। समित्युपसर्गाद्भक्तिपूर्वकं कीर्तिते सति ।। ५९ ।।

**उपेन्द्र**—कीर्तनस्य मिथ्याज्ञानकृतदोषनिवर्तकत्वमाह— **कलिकल्मषमिति** ।। कलिना मिथ्याज्ञानेन प्राप्तं कल्मषं पापम् । तस्येतरपापाद्वैलक्षण्यमाह— **अत्युग्र-मिति** ।। अत एव नरकार्तिप्रदम् । समित्युपसर्गाद्भक्तिपूर्वकं कीर्तिते सति ।। ५८ ।।

**कोनेरी**—तदेव स्पष्टमाह— **कलिकल्मषमिति** ।। अच्युते न विद्यते च्युतिर्नाशः यस्मात्तथा तस्मिन्हरौ । कलौ सकृत्संकीर्तिते सति । नृणां नरकार्तिप्रदम् । अत्युग्रं अतिक्रूरम् । कलिकल्मषं सद्यः विलयं नाशं प्रयाति । तस्मादवश्यं हरिः कीर्तनीय इति ।। ५९ ।।

**स्मृ.कृष्णाचार्य**—भगवत्कीर्तनस्य कलिकृतात्युग्रनरकार्तिप्रदपापनिवर्तकत्वात् तत्कीर्तनं मुमुक्षुभिः कार्यमिति प्रमाणेनाह— **कलिकल्मषमिति** ।। कलिकल्मषं कलियुगे कल्यादिप्रेरणेन प्राप्तं कल्मषं मनोवाक्कायजं कल्मषं अनेकविधम् । अत एवात्युग्रं अत्यन्तं असह्यम् । नरकार्तिप्रदं नरकेषु नानाविधनरकेषु पातनेन प्राप्तमनेकविधदुःखप्रदं पापम् । अच्युते सकृत्संकीर्तिते सति सकृदेकवारं संकीर्तिते नारायणादिनामसंकीर्तने भक्त्या क्रियमाणे सति । सद्यः पापं विलयं प्रयाति आत्यन्तिकं नाशं याति । तस्मात्कीर्तनं कार्यमिति ।। ५९ ।।

---

* अयं श्लोकः विष्णुपुराणे ६-८-२१ ।

कृष्णामृतमहार्णवः

**अनायासेन चायान्ति मुक्तिं केशवसंश्रिताः ।**
**तद्विघाताय जायन्ते शक्राद्याः परिपन्थिनः ।। ६० ।।**

**ताम्रपर्णी**— भगवदाराधनमिव तत्परिवारत्वेन देवताराधनमपि कार्यम् । अन्यथा तत्पूजाविघटनेन मोक्षविघातप्रसङ्गादिति भावेनाह— **अनायासेनेति** ।। यद्यपि केशवसंश्रिता भगवदर्चका अनायासेन मुक्तिमायान्ति । तथाप्यपूजिताः शक्राद्याः । तद्विघाताय मोक्षविघाताय । तत्साधनपूजापरिपन्थिनो जायन्ते भवन्तीति योजना। 'अपूजिता अधर्मादिदातारस्ते तथाभिधा' इति तन्त्रसारवचनात् । 'त्वां सुन्वतां सुरकृता बहवोऽन्तरायास्तान्नोऽविलङ्घ्य भजतां परमं पदं त' इति भागवतवचनात्

'देवान्हित्वा यजन्तोऽपि विष्णुं देवेशमच्युतम् ।
नाभिगच्छन्ति ते विष्णोः प्रसादं मोक्षसाधनम् ।।'

इति वचनाच्च । यद्वा देवानां मोक्षप्रतिबन्धकासुरघातकत्वात्तत्पूजा कार्येत्याह— **अनायासेनेति** ।। केशवसंश्रिता मुक्तिमनायासेन यान्ति । तस्या मुक्तेर्विघाताय ये जायन्ते । तेषां असुराणां शक्राद्याः परिपन्थिन इत्यर्थः । अथवा तद्विघाताय मुक्तविघातकासुरवर्गाय शक्राद्याः परिपन्थिनो जायन्ते भवन्तीत्यर्थः ।। ६० ।।

**उमर्जी**— एवं अर्चनादिना भक्त्या भगवदाश्रितानामेव मोक्षः नान्येषामित्याह— **अनायासेनेति** ।। केशवसंश्रिता एव अयासमन्तरेण मुक्तिं यान्ति नान्ये । इतरेषां कुतो न मुक्तिरित्यत आह— **तद्विघातायेति** ।। मुक्तिपरिपन्थिनः शत्रवः सन्तः तद्विघाताय तेषां भगवदनाश्रितानां मोक्षविघाताय जायन्ते । विपर्ययेच्छां जनयित्वा जायन्ते मोक्षविघाताय भवन्ति । "निकृष्टानां विपर्ययं" इत्युक्तेः । यद्वा अनायासेनैव कुतो मोक्ष इत्यत उक्तम् ।। **तद्विघातायेति** ।। तेषां विष्ण्वाश्रितानां विघाताय भवन्ति । विघ्नमुद्दिश्य परिपन्थिनो जायन्ते । मोक्षविघ्नपरिहारका भवन्तीत्यर्थः । "आत्मनो भजने बुद्धिमुत्पाद्य फलदाः सुराः" इत्युक्तेः ।। ६० ।।

**उपेन्द्र**— एवं अर्चनध्यानकीर्तनादिना भक्त्या भगवदाश्रितानामेव मोक्षो नान्येषामित्याह— **अनायासेनेति** ।। चोऽवधारणे । संमित्यपसर्गाद्भक्तिपूर्वकं श्रिताः

एवमनायासेन ज्योतिष्टोमाद्यायासमन्तरेण मुक्तिं यान्ति नान्ये । अन्येषां कुतो न मोक्ष इत्यत उक्तम् ।। **तदिति** ।। शक्राद्याः परिपन्थिनः सन्तः तद्विघाताय तेषामभक्तानां विषयेच्छां जनयित्वा मोक्षविघाताय जायन्ते भवन्ति । "निकृष्टानां विपर्यय" इत्युक्तेः । यद्वा भगवदाश्रितानामनायासेनैव कुतो मोक्ष इत्यत उक्तम् ।। **तदिति** ।। तेषां विष्ण्वाश्रितानां विघाताय मोक्षविघातमुद्दिश्य शक्राद्याः परिपन्थिनो भवन्ति । मोक्षविघ्नपरिहारका भवन्तीत्यर्थः । "आत्मनो भजने बुद्धि-मुत्पाद्य फलदास्सुरा" इत्युक्तेः ।। ६० ।।

**कोनेरी—**ज्ञानिभिः हरिः सर्वोत्तम इति ज्ञात्वा पूज्यः । तदन्ये देवा अपि भगवद्भक्ता इति तारतम्येन पूज्याः "परिवारतया पूज्याः" इत्युक्तेः । पूजितास्तु सत्कर्माणि प्रेरयन्ति । नोचेद्भगवदाज्ञया विघ्नकारिणो भवन्तीत्याह— **अनायासेनेति** ।। यैरधिकारिभिः । शक्राद्याः केशवसंश्रिताः केशवभक्ताः इति भक्त्या पूजिता भवन्ति । तेऽप्यधिकारिणः केशवसंश्रिताः विष्णुभक्ताः । अनायासेन तत्त्वाभिमानिदेवतानुग्रहादायासराहित्येन मुक्तिं स्वरूपानन्दानुभवरूपां मुक्तिं आयान्ति प्राप्नुवन्ति । "मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः" इत्युक्तेः । देवाः शक्राद्याः स्वपूजाद्यकरणे तेषां स्वपूजाविषये ज्ञानोत्पादनार्थं तत्र कृतकर्मविघाताय परिपन्थिनः विरोधिन एव जायन्ते भवन्ति । उक्तमेकादशतात्पर्ये ।

> कुर्युर्विष्णावपि द्वेषं देवा देवावमानिनः ।
> पूजिताः विष्णुभक्त्या च नावज्ञेयास्ततः सुराः ।। इति ।।

कुर्युः कारयेयुरित्यर्थः । "देवाश्चक्रुस्तपोविघ्नं त्रासयन्तः स्वमायया" इति चतुर्थभागवतोक्तेश्च । यद्वा शक्राद्याः तन्नामानः असुराः तत्त्वाभिमानिनः ते यदा भगवद्भक्तैः क्रियमाणसत्कर्मपरिपन्थिनो भवन्ति । तदा केशवसंश्रिताः शक्राद्याः देवास्तद्विघाताय तेषामसुराणां विघाताय भवन्ति । असुरान्निवार्य सत्कर्म कारयन्ति । दैत्यानां तत्त्वाभिमानित्वमुक्तमेकादशतात्पर्ये ।

> देहेन्द्रियप्राणधियां त्रिधैव ह्यभिमानिनः ।
> तत्रोत्तमा देवतास्तु सर्वदोषविवर्जिताः ।
> गुणैः सर्वैः सुसम्पन्नाः विरिञ्चादुत्तरोत्तरम् ।
> मध्यमा गुणदोषेता असुरा अधमा मताः ।। इति ।। ६० ।।

**स्मृ.कृष्णाचार्य**—आत्यन्तिकविघ्ने विद्यमानेऽपि भगवत्कीर्तनादिना केशवसंश्रितानां अनायासेनैव मुक्तिप्राप्तेः भगवत्कीर्तनादिकमवश्यं कार्यमित्यत्र वचनमाह— **अनायासेनेति**।। यद्यपि कल्याद्या देवादिमनुष्यान्तानां अधिकारिणां मोक्षविघाताय जायन्ते । तथापि शक्राद्या हरिसंश्रिताः सन्तः भगवदर्चनादिसाधनेनानायासेनैव मुक्तिं अनिष्टनिवृत्तिविशिष्टेष्टप्राप्तिरूपमोक्षमेव यान्ति । नतु मोक्षपरिपन्थिनः कल्यादेर्विघातेन मोक्षं न यान्तीति । यद्वा केशवसंश्रिताः भक्ताः अनायासेन आयासराहित्येन मुक्तिं यान्ति मुक्तिं गन्तुमिच्छन्ति । तद्विघाताय अनायासकृतस्मरणादिमात्रसाध्यमोक्षविघाताय परिपन्थिनः शक्राद्याः तत्त्वाभिमानिनो जायन्ते भवन्तीति । अतः स्मरणादिबहुसाधनं मोक्षार्थं कर्तव्यमिति ।

देवान्हित्वा यजन्तोऽपि विष्णुं देवेशमव्ययम् ।
नाधिगच्छन्ति ते विष्णोः प्रसादं मोक्षसाधनम् ।।

इत्युक्तेः स्वोपेक्षकाणां शक्राद्याः विघाताय जायन्त इति वार्थः । शाक्याद्या इति पाठे तु स्पष्टोऽर्थः ।। ६० ।।

**कृष्णामृतमहार्णवः**

**[1]चतुःसागरमासाद्य जम्बूद्वीपोत्तमे क्वचित् ।**
**न पुमान्केशवादन्यः सर्वपापचिकित्सकः ।। ६१ ।।**

**ताम्रपर्णी**—ननु तर्ह्यावश्यकेनान्यदेवताराधनेनालम् । किं भगवत्पूजयेत्यत आह— **चतुःसागरमिति** ।। पूर्वदक्षिणपश्चिमोत्तरसागरमासाद्य सर्वमध्यस्थिते जम्बूनामके द्वीपे द्वीपोत्तमे । क्वचिद्द्वीपान्तरे लोकान्तरे वा । केशवादन्यः सर्वपापचिकित्सकः सर्वपापपरिहर्ता नास्तीत्यर्थः ।। ६१ ।।

**उमर्जी**—भगवदन्येन कुतो न मोक्षः इत्यत आह— **चतुःसागरमिति** ।। जम्बूद्वीपोत्तमे चतसृणां सागराणां समाहारः चतुःसागरमासाद्य । स्थितस्य पुरुषस्येति शेषः । क्वचित्काले देशे वा केशवदान्यः पुमान् । सर्वपापचिकित्सको न । सर्वपापपरिहारकत्वेन मोक्षदातृत्वाद्भगवदाश्रयः कार्य इति भावः ।। ६१ ।।

---

१. 'समसागरं' इति कोनेरी पाठः ।।

**उपेन्द्र**—भगवदन्येन कुतो न मोक्ष इत्यतः अन्यस्य पापनिवर्तकत्वमेव नास्तीत्याह— **चतुरिति** ।। जम्बूद्वीपोत्तमे । स्थितस्य पुरुषस्येति शेषः । क्वचित्काले देशे वा केशवादन्यः पुमान् चतसृणां सागराणां समाहारश्चतुस्सागरं समासाद्यान्वेषणेऽपि नास्ति। पापनिवृत्तिद्वारा मोक्षदातृत्वात्तदाश्रयः कार्य इति भावः ।। ६१ ।।

**कोनेरी**—सर्वपापप्रणाशको हरिरेवेत्याह— **सप्तसागरमिति** ।। सागराणां सप्त सप्तसागरम् । तन्मध्यवर्तिद्वीपांश्चासाद्य प्राप्य । तेषु विचारितेषु । तथा उत्तमे जम्बूद्वीपेऽपि विचारिते सति । शास्त्रेष्विति शेषः । क्वचित् कुत्रापि । केशवादन्यः पुमान् पुरुषः सर्वपापचिकित्सकः सर्वपापप्रणाशको नास्ति । ननु प्लक्षादिद्वीपेषु सत्सु जम्बूद्वीपस्योत्तमत्वे को विशेष इति चेदस्ति च विशेषः । जम्बूद्वीपपदेन तद्गतभारतवर्षमुच्यते । यद्वा जम्बूद्वीपे विद्यमानवर्षेषु उत्तमो जम्बूद्वीपोत्तमः तस्मिन्निति । तस्य देवाद्यशेषाधिकारिणां साधनस्थानत्वात्तदितरद्वीपानां तदभावात्तस्योत्तमत्वमुक्तमाचार्यैरिति ज्ञेयम् ।। ६१ ।।

**स्मृ.कृष्णाचार्य**—अन्येषामपि पापनिवर्तकत्वात्तदर्थं भगवत्कीर्तनादिकं किमर्थं कर्तव्यमित्यतः चतुःसागरपर्यन्तं जम्बूद्वीपे जनैः क्रियमाणस्य पापस्य । जम्बूद्वीपे अन्यस्य निवर्तकस्याभावात्तत्कीर्तनादिकमेव कार्यमिति प्रमाणेनाह— **चतुःसागरमिति** ।। उत्तरसमुद्रादिचतुःसमुद्रमासाद्य सम्बद्ध्य विद्यमाने । जम्बूद्वीपे कर्मभूमौ । नानाविधतीर्थपुण्यक्षेत्रादिमत्त्वेन परमे उत्तमे । क्वचिदपि देशे केशवादन्यः पुमान् । सर्वपापचिकित्सकः । जम्बूद्वीपे नरैः क्रियमाणनानाविधपापानां चिकित्सकः अन्यो नास्ति । यतः तस्मात्सर्वपापचिकित्सकत्वात्तत्कीर्तनमवश्यं कार्यमिति ।। ६१ ।।

**कृष्णामृतमहार्णवः**

**यदभ्यर्च्य हरिं भक्त्या कृते वर्षशतैरपि ।**
**[1]फलमाप्नोति विपुलं कलौ संकीर्त्य केशवम् ।। ६२ ।।**

---

१ 'फलं प्राप्नोत्यविकलं' इति उम. तथा उपे. पाठः ।।

**ताम्रपर्णी**—ननु कृतादौ सम्यगाराधयामः किं कलावत्यायासेनेत्यत आह— **यदभ्यर्च्येति** ।। तद्विपुलं सर्वम् ।। ६२ ।।

**उमर्जी**—कीर्तनस्य कृतयुगानुष्ठितधर्मापेक्षया कलौ फलाधिक्यमाह— **यदिति** ।। कृते कृतयुगे विकलं न भवतीत्यविकलं यथा भवति तथा । अभ्यर्च्य यत्फलं भवति तत्फलं प्राप्नोतीत्यन्वयः । अत एव "कलिं सभाजयन्त्यार्याः गुणज्ञाः सारभोगिनः" इति पाद्योक्तेः ।। ६२ ।।

**उपेन्द्र**—कीर्तनस्येतरयुगापेक्षया कलौ फलाधिक्यमाह— **यदिति** ।। कृते कृत-युगे । विकलमङ्गवैगुण्यं न भवतीत्यविकलं यथा भवति तथा । अभ्यर्च्य फलं प्राप्नोति कलौ संकीर्त्य तत्फलं प्राप्नोतीत्यन्वयः । "कलिं सम्भाजयन्त्यार्याः गुणज्ञाः सारभोगिनः" इति पाद्मवचनात् ।। ६२ ।।

**कोनेरी**—कलौ भक्त्या हरिसंकीर्तनमेव सकलपातकनिरसनद्वारा मोक्षप्रदमिति कतिपयैः श्लोकैराह— **यदभ्यर्च्येत्यादिना** ।। कृते कृतयुगे । वर्षशतैर्भक्त्या हरिं अभ्यर्च्य । यत्फलं प्राप्नोति । पापजनाक्रान्ते कलौ । भक्त्या केशवं संकीर्त्य । विपुलं तत्फलं तत्समानफलं । सम्यक् प्राप्नोति । अपिशब्दः कार्त्स्न्यवाचकः । पापप्राचुर्येण हरिसंकीर्तनदुर्लभकाले भक्त्या हरिसंकीर्तने कृते तस्य सर्व-पापनिर्हरणद्वारा मोक्षफलदातृत्वफलमुक्तं भवति । उक्तमेकादशस्कन्धे—

कलिं सम्भाजयन्त्यार्याः गुणज्ञाः सारभागिनः ।
यत्र संकीर्तनेनैव सर्वस्वार्थोऽभिलभ्यते ।।
नह्यतः परमो लाभो देहिनां भ्राम्यतामिह ।
यतो विन्दन्ति परमां शान्तिं नश्यति संसृतिः ।।
कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम् ।
यत्र संकीर्तितो नृणां हरिर्दास्यत्यसम्भवमिति ।। ६२ ।।

**स्मृ.कृष्णाचार्य**—कलियुगे भगवत्कीर्तनस्य कृतयुगे शतवर्षकृतभगवदर्चना-पेक्षया अधिकफलत्वात्कलौ भगवत्कीर्तनादिकमवश्यं कार्यमिति वचनान्तरेणाह- – **यदभ्यर्च्येति** ।। कृते युगे वर्षशतैः शतवर्षैरपि हरिं भक्त्याभ्यर्च्य सम्यग-

चंनादिकं कृत्वा । यत्फलं पुण्यफलम् । पुरुषः प्राप्नोति । तदपेक्षया विपुलं अधिकं प्राप्नोति । किं कृत्वेत्यत उक्तम् ।। **कलौ संकीर्त्य केशवमिति** ।। कलौ कलियुगे केशवं संकीर्त्य भक्त्याद्यतिशयेन भगवन्नामादिसंकीर्तनं कृत्वा । तदधिकफलं प्राप्नोतीति अवश्यं भगवत्कीर्तनं कर्तव्यमिति ।। ६२ ।।

**कृष्णामृतमहार्णवः**

**क्षीयते तु यदा धर्मः प्राप्ते घोरे कलौ युगे ।**
**तदा न कीर्तयेत्[१]कश्चिन्मुक्तिदं देवमच्युतम् ।। ६३ ।।**

**ताम्रपर्णी**—कथं कलावल्पसाधनानुष्ठानेऽपि फलाधिक्यमित्यतो धर्मदुर्भिक्षकालत्वाद् 'दुर्भिक्षे चान्नदो यथा' इत्यादेर्दुर्भिक्षेऽन्नप्रदानस्य फलाधिक्यमिवेति भावेनाह— **क्षीयत इति** ।। कश्चित्कोऽपि न कीर्तयेदित्यर्थः ।। ६३ ।।

**उमजी**—तर्हि कलौ कीर्तनं कुतो न क्रियत इत्यत आह— **क्षीयत इति** ।। कलियुगे प्राप्ते सति । तदा धर्मः क्षीयते नश्यति । ह्रसतीति यावत् । अतः कश्चिदपि न कीर्तयेत् । फलाभावशंकावारणाय फलदमिति विशेषणम् ।। ६३ ।।

**उपेन्द्र**—कलौ कीर्तनाकरणे निमित्तमाह— **क्षीयत इति** ।। पाषण्डजनसेवितत्वेन घोरे कलियुगे प्राप्ते सति । धर्मः क्षीयते । तदा कश्चिद्भक्तोऽपि न कीर्तयेत् ।

कलौ न राजञ्जगतां पतिं हरिं त्रिलोकनाथानतपादपंकजम् ।
प्रायेण मर्त्या भगवन्तमच्युतं नश्यन्ति पाषण्डविभिन्नचेतसः ।।

इति भागवतोक्तेः । फलाभावशंकापरिहाराय मुक्तिदेत्यादिविशेषणम् ।। ६३ ।।

**कोनेरी**—धर्मरहिते कलौ युगे हरिकीर्तनमेव श्रेयस्करमित्याह— **क्षीयत इति** ।। घोरे पातकाल्ये कलौ युगे प्राप्ते सति । यदा भगवत्प्रीतिजनको धर्मः क्षीयते तदा कश्चित्कोऽपि । अच्युतं नाशरहितं । मुक्तिदं देवं । नारायणं न कीर्तयेत् । तदा धर्मदुर्लभकाले यः भगवन्नाम कीर्तयेत् । सः दुर्भिक्षे चान्नदातारमितिवत् सर्वपापविनिर्मुक्तः मुक्तिमाप्नोति । अन्यथा एतच्छब्दयोरन्वयासङ्गतेरिति भावः ।। ६३ ।।

---

१. 'कश्चित्फलदं' इति उम. पाठः ।।

**स्मृ.कृष्णाचार्य—**कलौ युगे भगवत्कीर्तनादेः दुर्लभत्वादवश्यं कीर्तनं मोक्षाय कर्तव्यमिति भावेनाह— **क्षीयते चेति** ।। घोरे अत्यन्तपातकजनयुक्ते कलौ धर्मः निवृत्तधर्मः भगवदर्चनादिधर्मश्च यदा कालविशेषे क्षीयते । अधर्मादिकर्तृभिः पाषण्डैर्नश्यति। तदा तस्मिन्कलिकाले अच्युतं देवं मुक्तिप्रदम् । मुक्त्यर्थं कश्चिदप्यधिकारी कालदोषेण न कीर्तयेत् भगवन्नामसंकीर्तनादिकं न करोति । तस्मात्कलियुगे भगवत्कीर्तनादिकर्तुः दुर्लभत्वात्सत्सङ्गादिना भगवत्कीर्तनादिकं मोक्षार्थं कार्यमिति।। ६३ ।।

**कृष्णामृतमहार्णवः**

***अवशेनापि [1]यन्नाम्नि कीर्तिते सर्वपातकैः ।**
**पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ।। ६४ ।।**

**ताम्रपर्णी—**कैमुत्येनादरनैरन्तर्याभ्यां नामकीर्तनस्य फलमाह— **अवशेनापीति**।। पारवश्येनापीत्यर्थः । स कीर्तकः । यथा पथि गच्छन् हननार्थमागतैर्व्याघ्रादिमृगैः सिंहत्रस्तैर्विमुच्यते तथेत्यर्थः ।। ६४ ।।

**उमर्जी—**अवशोच्चरितनाम्नोऽपि फलमाह— **अवशेनेति** ।। भक्त्युद्रेकात्स्वप्रयो-जनमन्तरेणेत्यर्थः । "ये भक्त्या विवशा विष्णोर्नाममात्रैकजल्पकाः । तेऽपि मुक्तिं व्रजन्ति" इति वचनात् । सिंहत्रस्तमृगैः सिंहेन भययुक्तैर्मृगैरारण्यमृगैः पुमानिव । **विमुच्यते इति सम्बन्धः** ।। ६४ ।।

**उपेन्द्र—**अवशेनोच्चारितनामकीर्तनफलमाह— **अवशेनेति** ।। भक्त्युद्रेकात्स्व-प्रयत्नमन्तरेणेत्यर्थः । "ये भक्त्या विवशा विष्णोर्नाममात्रैकजल्पकाः । तेऽपि मुक्तिं व्रजन्त्याशु" इत्युक्तेः । सिंहत्रस्तैरारण्यकमृगैः पुमानारण्यकमृगग्रस्तः यथा विमुच्यते तथेत्यर्थः ।। ६४ ।।

**कोनेरी—कैमुत्यमाह— अवशेनेति** ।। अथ कथञ्चित्स्खलनक्षुत्तनजृम्भणदुःख-स्थानादिषु विवशानामित्युक्तरीत्या अवशेन स्मृतिराहित्यात्पराधीनेनापि यस्य

*अयं श्लोकः विष्णुपुराणे ६-८-१९ ।

१. 'यन्नाम कीर्त्यते' इति स्म.क. तथा क. पाठः ।

विष्णोर्नाम्नि येन संकीर्तिते सति स पुमान्सर्वपातकैः सद्यः विमुच्यते । किमु सदा नामकीर्तनेनेति सदृष्टान्तमाह— **सिंहत्रस्तमृगैरिवेति** ।। यथा मृगाः वृकव्याघ्रादयः । पथि गच्छमानं कञ्चन पुरुषं खादितुं गन्तुकामाः । तदनन्तरं सिंहगर्जनं श्रुत्वा त्रस्ताः तं विहाय पलायनं कुर्वन्ति । स पथिकः मुक्तो भवति तथेति ।। ६४।।

**स्मृ.कृष्णाचार्य—**भगवद्भक्तेन अन्यासक्तमनसापि कृतभगवत्कीर्तनादेः सर्वपापनिवर्तकत्वात् तत्कीर्तनादिकं सर्वथा कार्यमिति वचनमाह— **अवशेनापीति**।। यन्नाम यस्य संसारादिमोचकस्य हरेर्नाम अवशेन विषयासक्तमनसापि परवशेन वा कीर्त्यते सम्यगुच्चारणं क्रियते येन । सः पुमान् पुरुषः सर्वपातकैर्ब्रह्महत्यादिपातकैर्विमुच्यते विशेषेण मुक्तो भवति । यन्नाम्नीति पाठे कीर्तिते इति सतिसप्तमी । तत्र दृष्टान्तमाह— **सिंह इति** ।। यथा सिंहनादेन त्रस्तैर्भीषितैर्व्याघ्राद्यारण्यमृगैरारण्यकः पुरुषो मुच्यते तद्भयान्मुक्तो भवतीति तस्मादनवधानकृतभगवत्कीर्तनादेरपि सर्वपापनिवर्तकत्वात्तदवश्यं कर्तव्यमिति ।। ६४ ।।

## कृष्णामृतमहार्णवः

ब्रह्मा—

**नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी ।**
**तथाऽपि नरके घोरे पतन्तीत्येतदद्भुतम् ।। ६५ ।।**

**ताम्रपर्णी—**नामकीर्तनस्योक्तफलहेतुत्वाश्वासाय तदकीर्तनमन्याय्यमिति सकौतूहलमाह— **नारायणेति** ।। हे नारायणेति सम्बुद्ध्यन्तः मन्त्रोऽस्तीत्यर्थः । अविभक्तिकः प्रातिपदिकलक्षणः भगवत्स्मारकः मन्त्रोऽस्तीति वा । तथाऽपि एवमतिसौलभ्येऽपि ।। ६५ ।।

**उमजी—**कलौ नरकपरिहारकनामकीर्तनसौलभ्येऽपि नराणां नरकपतनमाश्चर्यकरमित्याह— **नारायणेति** ।। मन्त्रः जप्यः । वाक् वागिन्द्रियम् । तथापि उच्चारणसौलभ्येऽपि । उच्चारणमकृत्वेति शेषः । पतन्तीत्येतत् अद्भुतं आश्चर्यकरम् ।।

**उपेन्द्र—**कलौ नरकपरिहारकनामकीर्तनसौलभ्येऽपि नराणां नरकपतनमाश्चर्यकरमिति नारदवाक्यं पठति— **नारायणेति** ।। मन्त्रो जप्यः । वाक् वागिन्द्रियम्। तथापि उच्चारणसौलभ्येऽपि पतन्तीत्येतदद्भुतमाश्चर्यकरम् ।। ६५ ।।

**कोनेरी**—भगवन्नामकीर्तनस्य सर्वपातकनिवर्तकत्वं ज्ञानिप्रत्यक्षसिद्धमित्याह- – **नारायणेति** ।। हे नारायण मां पाहीति महान्मन्त्रः अस्ति । एडमूकतायाः अभावान्मन्त्रोच्चारणार्थं वशवर्तिनी वागप्यस्ति । तथापि जनाः घोरे नरके पतन्ती-त्येतदद्भुतमाश्चर्यमिति प्रत्यक्षसिद्धम् । उक्तञ्च षष्ठस्कन्धे भागवते—

दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयम् ।
प्लावितेन स्वरेणोच्चैराजुहावाकुलेन्द्रियम् ।। इति ।। ६५ ।।

**स्मृ.कृष्णाचार्य**—स्वाधीनवाचा नारकोद्धारकनारायणमन्त्रे सत्यपि तदजपित्वा नरकपतनं नराणामद्भुतमिति तन्मन्त्रजपकीर्तनादिकं मुमुक्षुणा कार्यमिति नारद-वचनमाह– **नारायणेति** ।। यद्यपि नारायणेति जप्यं मन्त्रं कीर्तनादिकमस्ति । वागपि स्वाधीना वागिन्द्रियमपि वशवर्तिनी स्वाधीनतयाऽस्ति । तथापि स्वाधीन-वागिन्द्रियेण भगवन्मन्त्रजपादिकं ये न कुर्वन्ति । ते अत्यन्तदुःसहत्वेन घोरे नरके नानाविधनरके पतन्ति । अत्यन्तसुलभभगवन्नामजपकीर्तनादिकमकृत्वा नरके पतन्ती-त्येतदद्भुतं आश्चर्यकरम् । तस्मादत्यन्तसुलभभगवन्नामजपादौ मोक्षार्थिना भगव-द्भक्तेन यत्नः कर्तव्य इति भावः । एतदद्भुतमिति नारकान्प्रति नारदवाक्यम् ।। ६५ ।।

**कृष्णामृतमहार्णवः**

**आर्ता विषण्णाः शिथिलाश्च भीताः**
**घोरेषु च व्याधिषु वर्तमानाः ।**
**संकीर्त्य नारायणशब्दमात्रं**
**विमुक्तदुःखाः सुखिनो भवन्ति ।। ६६ ।।**

**ताम्रपर्णी**—आनुभाविकं च नामोत्कीर्तनस्य सद्य एव दुःखशामकत्वमित्याह- – **आर्ता इति** ।। विषादो नाम चित्तवैकल्यम् । यस्मिन्सति सर्वव्यापारोपरमो भवति । शिथिला अवयवशैथिल्ययुक्ताः ।। ६६ ।।

**उमर्जी**—नामकीर्तनस्यैहिकनानाक्लेशनिवर्तकत्वमाह– **आर्ता इति** ।। आर्तिं प्राप्ताः । विषादं प्राप्ताः शिथिलाः अवयवशैथिल्यं प्राप्ताः । नारायणशब्दमात्रं नारा-यण इति संज्ञामात्रं नत तदर्थमित्यर्थः ।। ६६ ।।

**उपेन्द्र**—नामकीर्तनस्यैहिकानां क्लेशानां निवर्तकत्वमाह— **आर्ता इति** ।। आर्ताः दुःखं प्राप्ताः । विषण्णाः पिशाचादिना विषादं प्राप्ताः । शिथिलाः अवयवशैथिल्यं प्राप्ताः । नारायणशब्दमात्रं संज्ञामात्रम् । न तु तदर्थमित्यर्थः । संकीर्त्य भक्तिपूर्वकं संकीर्त्य विमुक्तदुःखाः सन्तः सुखिनो भवन्ति ।। ६६ ।।

**कोनेरी**—हरिनामैव सर्वक्लेशपरिहारकमित्याह— **आर्ता इति** ।। शत्रुभिरार्ताः । विषण्णाः व्यग्रधियः । शिथिलाः अङ्गपाटवरहिताः । भीताः संसारक्लेशभीताः । घोरेषु दुःखप्रदेषु । व्याधिषु यक्ष्मभगन्दरादिषु । वर्तमानाः सन्तः । "हे नारायण मामुद्धर" इति भक्त्या नारायणशब्दमात्रं संकीर्त्य नारायणशब्दप्रवृत्तिनिमित्तज्ञानपूर्वकमुच्चार्य । निवृत्तदुःखाः त्यक्तदुःखप्रदलिङ्गशरीराः । सुखिनः स्वरूपानन्दयुक्ताः भवन्ति ।। ६६ ।।

**स्मृ.कृष्णाचार्य**—नानाविधपापकर्मभिर्नरैर्भक्त्यादिमद्भिः भगवन्नामकीर्तनमात्रेण सर्वदुःखराहित्यस्य सौख्यस्य च प्राप्तिश्रवणाद्भगवत्कीर्तनादिकं कर्तव्यमिति स एवाह—**आर्ता इति** ।। आर्ताः सांसारिकदुःखयुक्ताः । विषण्णाः आध्यात्मिकादितापत्रयेण विषण्णाः । शिथिलाः जरादिना देहादौ दौर्विध्ययुक्ताः । भीताः राजचोरादिभ्यो भीतिमन्तः । घोरेषु अत्यन्तभयंकरेषु । व्याधिषु क्षयपाण्ड्वादिनानाव्याधिषु । वर्तमाना स्वदेहादौ व्याधिमनुभवन्तः । ये नरास्ते । नारायणशब्दमात्रं नारायणेति नाममात्रं संकीर्त्य भक्त्याद्यतिशयपूर्वकं सम्यक्कीर्तनादिकं कृत्वा विमुक्तदुःखाः विशेषेण नानाविधसांसारिकदुःखैर्विमुक्ताः सन्तः । भगवत्प्रसादेन सुखिनो मोक्षसुखयुक्ताः भवन्तीति तस्मात्सर्वदुःखनिवृत्तिविशिष्टमोक्षसुखवद्भगवत्संकीर्तनादिकं सर्वैर्भक्तैः कार्यमिति ।। ६६ ।।

**कृष्णाचार्य**—नानाविधपापकर्मभिरात्यादिमद्भिः नरैः भगवन्नामकीर्तनमात्रेण सर्वदुःखराहित्यस्य सौख्यस्य च प्राप्तिश्रवणाद्भगवत्कीर्तनादिकं कर्तव्यमिति स एवाह— **आर्ता इति** ।। आर्ताः नानाविधसांसारिकदुःखयुक्ताः विषण्णाः आध्यात्मिकादितापत्रयेण विषण्णाः । शिथिलाः जरादिना देहादौ शैथिल्ययुक्ताः । भीताः राजचोरादिभ्यो भीतियुक्ताः । घोरेषु अतिभयंकरेषु । व्याधिषु क्षयपाण्ड्वादि नानाव्याधिषु वर्तमानाः स्वदेहादौ व्याधिमनुभवन्तः । ये नराः । नारायणशब्दमात्रं

संकीर्त्य भक्त्याद्यतिशयपूर्वकं संकीर्तनादिकं कृत्वा । विमुक्तदुःखाः विशेषेण नानाविधसांसारिकदुःखैः विमुक्तास्सन्तः । भगवत्प्रसादेन सुखिनो मोक्षसुखयुक्ताः भवन्तीति । तस्मात्सर्वदुःखनिवृत्तिविशिष्टमोक्षसुखवद्भगवत्कीर्तनादिकं सर्वैर्भक्तैः कार्यमिति ।। ६६ ।।

**कृष्णामृतमहार्णवः**

***सकृदुच्चरितं यैस्तु कृष्णेति न विशन्ति ते ।**
**गर्भागारगृहं मातुर्यमलोकञ्च दुःसहम् ।। ६७ ।।**

**ताम्रपर्णी**—गर्भागारगृहं गर्भाधानस्थानाख्यं गृहम् ।। ६७ ।।

**उमर्जी**—न केवलं नारायणशब्दस्यैव नानाक्लेशनिवर्तकत्वं किन्तु कृष्णादिशब्दानामपि नरकपरिहारकत्वमित्याह— **सकृदिति** ।। यैरधिकारिभिः कृष्णेति "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः" इति ज्ञानपूर्वकमुच्चरितम् । तेऽधिकारिणः । गर्भागारगृहं गर्भाख्यबन्धनगृहम् । "आगारो भूभुजामन्तःपुरं स्यादवरोधनम्" इत्यमरः । दुःसहं यमलोकं च न विशन्ति इति सम्बन्धः ।। ६७ ।।

**उपेन्द्र**—भक्त्या नामकीर्तनस्यामुष्मिकदुःखनिवर्तकत्वमाह— **सकृदिति** ।। यैः अधिकारिभिः । कृष्णेति भक्तिपूर्वकं सकृदुच्चरितम् । ते भक्ताः । गर्भागारगृहं गर्भाख्यबन्धगृहम् । "आगारो भूभुजामन्तःपुरं स्यादवरोधनम्"इत्युक्तेः । यमलोकं च न विशन्ति । सुखसाधनत्वभ्रान्तिवारणाय दुस्सहमिति विशेषणम् ।। ६७ ।।

**कोनेरी**—उक्तार्थदाढर्याय कौशिकवचनमाह— **कौशिक इति** ।। यैः कृष्णेति भक्त्या सकृदुच्चरितम् । ते मातुः गर्भागारगृहं क्लेशरूपं गृहम् । न विशन्ति । दुःसहं यमलोकं नरकं च न विशन्ति ।। ६७ ।।

**स्मृ.कृष्णाचार्य**—कृष्णेति सकृदुच्चारणमात्रेण गर्भप्रवेशयमलोकप्रवेशाद्यभावोक्तेः भगवन्नामकीर्तनादिकं भक्तैः कार्यमित्यत्र कौशिकवाक्यं पठति— **सकृदुच्चरित-**

---

* अयं श्लोकः ब्रह्मपुराणे २०-४२ । विष्णुपुराणे २-६-४२ ।

१९. नाम्नोऽस्ति यावती शक्तिः पापनिर्दहने मम ।
तावत्कर्तुं न शक्नोति पातकं पातकी जनः ।। अ. १४. स्कन्दपुराणे ।।

**मिति** ।। यैरधिकारिभिः कृष्णेति हे कृष्ण हे रामेत्यादिभगवन्नामकीर्तनम् । सकृदे-कवारं वा उच्चरितं अभिहितम् । ते मातुः स्वमातुः । **कर्मशेषेण प्राप्तं गर्भाख्यमागारं** गृहं वन्धनगृहं तथा दुःसहं अत्यन्तमसह्यं यमलोकं च यमस्य घोरं नरकादिकं न विशन्ति । तस्माद्भगवन्नामोच्चारणस्य सांसारिकदुःखनिवर्तकत्वात्तदुच्चारणं कार्यमिति ।। ६७ ।।

**कृष्णामृतमहार्णवः**

**क्क नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ।**
**क्क जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ।। ६८ ।।**

**ताम्रपर्णी**—ननु नाम कीर्तयन्तः स्वर्गप्राप्त्या बहुकालं गर्भनरकप्रवेशाभावमात्रे-णामृतो वा सोमपो वा भवतीतिवदुपचारेण किमेतत्फलमुच्यत इत्यत आह- – **क्केति** ।। ६८ ।।

**उमर्जी**—वासुदेवजपस्य मुख्यैकफलकत्वमाह— **क्केति** ।। वासुदेवेति मन्त्रा-वृत्तिलक्षणो जपः क्क । न विद्यते अकं दुःखं यस्मिन् तन्नाकं तस्य पृष्ठे उपरि-भागे गमनं क्क । तस्य फलरूपत्वं कुतो नेत्यत उक्तम् ।। **पुनरावृत्तिलक्षण-मिति** ।। निष्फलत्वशंकां वारयति— **मुक्तिबीजमिति** ।। ६८ ।।

**उपेन्द्र**—वासुदेवजपस्य स्वर्गमात्रफलकत्वभ्रान्तिं वारयति— **क्केति** ।। न विद्यते अकं दुःखं यस्मिन् तन्नाकम् । तस्य पृष्ठे उपरिभागे गमनं क्क । तस्य फलरूपत्वं नेत्याह— **पुनरिति** ।। भूभावावृत्तेर्लक्षणं ज्ञापकम् । इति वासनाद्वासुः क्रीडादि-गुणविशिष्टत्वाद्देव इति मन्त्रावृत्तिलक्षणो जपः क्क । उभयोः साध्यसाधकभावो नास्तीति ।। ६८ ।।

**कोनेरी**—एवं ज्ञात्वा हरेर्नामोच्चारणं कुर्वीत स्वेनैव स्वात्मा बोधनीय इत्याह- – **क्केति** ।। पुनरावृत्तिप्रदं नाकपृष्ठगमनं क्क । अनुत्तमं स्वापेक्षयोत्तमवस्तुरहितं मुक्तिबीजं मुक्तिसाधनं वासुदेव इति जपः क्क ।। ६८ ।।

**स्मृ.कृष्णाचार्य**—वासुदेवेति मन्त्रजपस्य स्वर्गाद्यपेक्षयोत्तममुक्तेस्साधनत्वा-भिधानात् मुक्त्यर्थिना वासुदेवजपः कार्य इत्यत्र तद्वाक्यमाह— **क्क नाकपृष्ठ-गमनमिति** ।। नाकपृष्ठस्य कर्मादिसाध्यस्वर्गस्य वासुदेवजपफलत्वमिति न

मन्तव्यम् । तज्जपस्य स्वर्गादप्युत्तमानिवृत्तिरूपमोक्षैकसाधनत्वात् । स्वर्गस्य पुनरावृत्तिमत्त्वात् । तथाच मुक्तिबीजं मुक्तेः कारणं वासुदेवेति अनुत्तमं सर्वसाधनोत्तमं जपः क्व । पुनरावृत्तिलक्षणं पुण्यकर्मक्षये पुनरावृत्तिमन्नाकपृष्ठगमनं स्वर्गे अवस्थानं क्व कुत्र । तस्माद्वासुदेवजपस्य स्वर्गाद्यपेक्षया अतिशयितमोक्षसाधनत्वात् सर्वैः कार्यमिति ।। ६८ ।।

### कृष्णामृतमहार्णवः

**बुद्ध्या [1]बुद्ध्वा [2]वदस्वैनं हरिरित्यक्षरद्वयम् ।**
**स्मरणात्कीर्तनाद्यस्य न पुनर्जायते क्वचित् ।। ६९ ।।**

**ताम्रपर्णी**—अर्थस्मरणपूर्वकमेव नाम कीर्तनीयमित्याह— **बुद्ध्येति** ।। नामार्थभूतं हरिं बुद्ध्या बुद्ध्वा विषयीकृत्य । अभ्यसेत् आवर्तयेत् । यस्य हरेः संस्मरणात् नाम्रा कीर्तनात् ।। ६९ ।।

**उमर्जी**—एवमाद्यपद्योक्तकीर्तनस्य फलसाधनत्वं प्रतिपाद्य क्रमप्राप्तकथनस्य फलसाधनत्वं प्रतिपादयन् प्रवचनप्रकारं दर्शयति— **बुद्ध्येति** ।। प्रवचने इतिकर्तव्यतां दर्शयति— **बुद्ध्वेति** ।। हरतेरिकारप्रत्यये गुणे रपरत्वे निष्पन्नो हरिशब्दः यज्ञभोक्तृत्ववाची । तदुक्तम्—

इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् ।
वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः ।।इति हरिद्वर्णवाची वा ।।
ब्रह्माणं रुद्रमिन्द्रं च यमं वरुणमेव च ।
निगृह्य हरते यस्मात्तस्माद्धरिरिहोच्यते ।। इति वचनात् ।।

बुद्ध्वा हरिरित्यक्षरद्वयं वदस्व । यस्य अर्थस्य श्रवणाच्छिष्यं प्रति कीर्तनान्न पुनर्जायते इति सम्बन्धः ।। ६९ ।।

**उपेन्द्र**—एवमाद्यपद्योक्तकीर्तनस्य कर्तव्यत्वं बहुप्रमाणैरुपपाद्य क्रमप्राप्तकथनरूपशास्त्रव्याख्यानस्य फलसाधनत्वेन कर्तव्यतां बहुप्रमाणैरुपपादयन् प्रवचनप्रकारं

---

१. 'बुद्ध्वाऽभ्यसेदेतत्' इति ताम्र. पाठः ।
२. 'बुद्ध्वा वदस्वाऽत्मा' इति कोनेरी पाठः ।

दर्शयति— **बुद्ध्येति** ।। प्रवचने इतिकर्तव्यतां दर्शयति— **बुद्ध्वेति** ।। केन कारणेनेत्यत उक्तं बुद्ध्या मनसा । कर्माकांक्षायामाह— **एनमिति** ।। हरतेरिकार-प्रत्यये गुणे रपरत्वे च निष्पन्नो हरिशब्दः यज्ञभोक्तृत्ववाची । तदुक्तं—

इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् ।
वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः ।।

—इति हरिद्वर्णवाची भक्ताघहरत्ववाची वा ।

ब्रह्माणं रुद्रमिन्द्रञ्च यमं वरुणमेव च ।
विगृह्य हरते यस्मात्तस्माद्धरिरिहोच्यते ।। इति वा ।

एवं यथार्थज्ञानसाधनेन बुद्ध्या बुद्ध्वा हरिरित्यक्षरद्वयं वदस्वेति शिष्यं प्रति वचनं कार्यमिति भावः । यस्य भगवतः स्मरणपूर्वककीर्तनात् पुनर्भूमौ न जायते । दुष्टं जन्म नाप्नोतीति ।। ६९ ।।

**कोनेरी**— ।। **बुद्ध्येति** ।। यस्य हरेः स्मरणात् कीर्तनात् पुमान् वैकुण्ठादिस्थानं प्राप्य । क्वचित्बहुकल्पावसानेऽपि । भुवि पुनर्न जायते इति स्वबुद्ध्या अपरः आत्मा त्वं हरिरिति अक्षरद्वयं वदस्व जिह्वयोच्चारय ।। ६९ ।।

**स्मृ.कृष्णाचार्य**—भगवत्स्मरणादेः जननमरणादिराहित्यरूपफलश्रवणात् तत्कर्तव्यमिति तदर्थं हरिरित्यक्षरद्वयं भक्तैः भक्त्या वाच्यमिति गुरुशिष्यसंवादेनाह— **बुद्ध्येति** ।। हे शिष्य । मया उक्तरीत्या एनं भगवन्तं बुद्ध्या माहात्म्यज्ञानेन बुद्ध्वा ज्ञात्वा । हरिरिति नाम तथा रामकृष्णादिनाम वदस्व कथय । किमर्थं भगवन्नामकीर्तनादिकं कार्यमित्यतः उक्तम् ।। **स्मरणादिति** ।। यस्य एतादृशस्य हरेः स्मरणात्कीर्तनात् माहात्म्यज्ञानपूर्वकतत्स्मरणकीर्तनात् न पुनर्जायते पुनःपुनर्न जायते मुक्तो भवति । अतो हरिरित्यक्षरद्वयं वदस्वेति गुरुवाक्यस्य सत्वात् सदा कीर्तनादिकं कार्यमिति ।। ६९ ।।

## कृष्णामृतमहार्णवः

**हे जिह्वे मम निःस्नेहे हरिं किं नानुभाषसे ।**
**हरिं वद[१]स्व कल्याणि संसारोदधिनौर्हरिः ।। ७० ।।**

---

१. 'वद सुकल्याणि' इति कोनेरी पाठः ।

**ताम्रपर्णी**—जिह्वाभिमानिदेवता प्रार्थनीयेति भावेन तत्प्रकारमाह— **हे जिह्वे इति**।। हे निःस्नेहे निर्दये । किन्नु किन्निमित्तम् ।। ७० ।।

**उमर्जी**—प्रवचनाकरणे जिह्वानिन्दावाक्यं पठति— **हे जिह्वे इति** ।। किन्नु किमर्थं न भाषसे न प्रतिपादयसि । निःस्नेहे त्वया किं प्रयोजनमिति भावः । न वृथा स्थेयमित्याह— **हरिमिति** ।। कल्याणी भवसि । निष्फलत्वशंकावारणाय आह— **संसारेति** ।। संसाराख्योदधौ नाववदुत्तारणाश्रयभूत इत्यर्थः । नाववदुत्तारक इति यावत् ।। ७० ।।

**उपेन्द्र**—प्रवचनाकरणे निन्दावाक्यं पठति— **हे जिह्व इति** ।। मम हे जिह्वे हरिं किमर्थं न भाषसे न प्रतिपादयसि । तर्हि निःस्नेहे त्वया किं प्रयोजनमिति भावः । न वृथा स्थेयमित्याह— **हरिमिति** ।। कल्याणी भवसि । संसारनिवृत्तिर्भवतीत्याह— **संसारेति** ।। संसाराख्योदधेर्नौर्नावत्तारकः ।। ७० ।।

**कोनेरी**—एवमात्मानं प्रत्युक्त्वा जिह्वां बोधयति— **हे जिह्वेति** ।। निःस्नेहे मयि स्नेहरहिते हे मम जिह्वे । किं किमर्थं हरिं नानुभाषसे नोच्चारयसि । हे सुकल्याणि । यस्मात् हरिः संसारोदधिनौः संसारसमुद्रस्य नावस्थानीयः । तारक इत्यर्थः । तस्मात् त्वं हरिं वद उच्चारय । हरेरुच्चारेणेनैव तस्याः सुकल्याणीत्वमिति । तथा सम्बुद्धिः जिह्वायाः जडत्वेऽपि अभिमानिविवक्षयेति ज्ञेयम् ।। ७० ।।

**स्मृ.कृष्णाचार्य**—संसारतारकत्वाद्धरिकीर्तनं कर्तव्यमिति स्वजिह्वां प्रति भक्तप्रार्थनारूपं वचनमाह— **हे जिह्वेति** ।। हे मम जिह्वे हरिं किं किमर्थं न भाषसे न वदसि । पुरुषार्थप्रदं हरिररिति सम्भाषणं न करोषि । तेन मयि निःस्नेहे स्नेहरहिते । तादृश्या त्वया किं प्रयोजनमिति । तर्हि मया किं कर्तव्यमिति तत्राह— **हरिं वदस्वेति** ।। हरिं सकलदुरितहरं वदस्व । तन्नामकीर्तनेन मम किमित्यत उक्तम् ।। **कल्याणीति** ।। तत्कीर्तनात् त्वं कल्याणी मङ्गलरूपा असि नान्यथा। मया हरिनामोच्चारणेन तव किं प्रयोजनमित्यत आह— **संसारेति** ।। हरिः संसारोदधिनौः अपारसंसारसागरतरणे नौः नाववत्तारकः । तस्मात्तं वदस्वेति भक्तस्य स्वजिह्वा-देवतां प्रति प्रार्थनाद्धरिनामोच्चारणं सदा कार्यमिति ।। ७० ।।

## कृष्णामृतमहार्णवः

**असारे खलु संसारे सारात्सारतरो हरिः ।**
**पुण्यहीना न विन्दन्ति सारङ्गाश्च यथा जलम् ।। ७१ ।।**

**ताम्रपर्णी**—यदि संसारसमुद्रतारको हरिस्तर्हि किमिति जनास्तथा न जानन्तीत्यतो हरेर्मोचकत्वेनोत्तमत्वमेव नास्तीत्यतस्तथा ज्ञानाभावो न तस्योत्तमत्वाभावप्रयुक्तः। किन्तु संसारे ज्ञानापादकपुण्याभावनिबन्धन इत्याह— **असार इति** ।। सारङ्गश्चातके भृङ्ग इत्यभिधानात् । यथा चातकाः जलापादकपुण्याभावात्सूक्ष्ममपि जलं न विन्दन्ति न लभन्ते । तथा यः सारात्सारतमो हरिः तं असारे संसारे पुण्यहीना न विन्दन्ति न जानन्तीति योजना । सारङ्गाः कृष्णमृगा इति केचित् । तदा हि 'ब्रह्मज्ञानं सदोदितमवतिष्ठते' इति बृहद्भाष्योक्तरीत्या मुक्तौ ज्ञानस्य सदोदितत्वात्संसारे न विन्दन्तीत्युक्तम् ।। ७१ ।।

**उमर्जी**—ननु संसारे स्थितस्य भगवतोऽसारत्वं स्यादित्यत आह— **असार इति** ।। दुःखरूपे "रसः सारो वरश्चेति शब्दा एकार्थवाचकाः" इत्युक्तेः । साराच्छ्रेष्ठात् ब्रह्मादेस्सकाशात्सारतरः अत्यन्तश्रेष्ठः । जगद्विलक्षणत्वान्नावस्थितिविरोध इति भावः । खलु इत्यनेन "असङ्गो ह्ययं पुरुष" इति श्रुतिं सूचयति । तर्हि कुतो न तरन्तीत्यत उक्तम् ।। **पुण्यहीना इति** ।। न विन्दन्ति न जानन्ति न प्राप्नुवन्ति । अव्यक्तत्वादिति भावः ।

दधिस्थघृतवत्काष्ठे वह्निवच्च जनार्दनः ।
देहेन्द्रियासुजीवेभ्यो विविच्य ज्ञायते ननु ।। इति भगवत्पादोक्तेः ।।

तत्र दृष्टान्तमाह— **सारङ्गा इति** ।। चोऽवधारणे । सारङ्गाख्यमृगा एव तटाकस्थं जलं न जानन्तीत्यर्थः । यद्वा सारङ्गाश्चातके भृङ्ग इत्यभिधानात् । चातकाः तटाकस्थं जलं न विन्दन्ति । पुण्यहीनत्वादिति भावः ।। ७१ ।।

**उपेन्द्र**—ननु दुःखरूपसंसारे कथं भगवतोऽवस्थानमित्यत आह— **असारे खलु संसार इति** ।। "रसः सारो वरश्चेति शब्दा एकार्थवाचका" इत्युक्तेः । सारः श्रेष्ठं सुखम् । तद्विरुद्धं संसारे दुःखरूपे संसारे भजनीयेषु मध्ये साराद्ब्रह्मादेस्सकाशात्सारतरः अत्यन्तसुखरूपः हरिरस्ति । खल्वित्यनेन "परमः परार्ध"

इति श्रुतिं सूचयति । असङ्गत्वाद्भगवतो नावस्थितिविरोधः । तर्हि कुतो न तरन्तीत्यत उक्तम् ।। **न विन्दन्तीति** ।। अव्यक्तत्वान्न जानन्ति न प्राप्नुवन्ति ।

दधिस्थघृतवत्काष्ठे वह्निवञ्च जनार्दनः ।
देहेन्द्रियासुजीवेभ्यो विविच्य ज्ञायते ननु ।। इत्युक्तेः ।।

ज्ञानिव्यतिरिक्ताः किन्न तरन्तीत्याह— **पुण्यहीना इति** ।। तत्र दृष्टान्तमाह— **सारङ्गा इति** ।। सारङ्गाख्यमृगाः । "चातके हरिणे पुंसि सारङ्गः शबले त्रिषु" । "सारङ्गश्चातको मृगः" इत्यभिधानाच्चातको वा । त एव पुरःस्थितं जलं तृप्तिजनकमिति यथा न जानन्ति तथेत्यर्थः ।। ७१ ।।

**कोनेरी**—कलौ हरिस्मरणं न सुलभमित्याह— **असार इति** ।। असारे साररूप हरिज्ञानाजनके संसारे । सारात् श्रेष्ठब्रह्मादिजगतः । हरिः सारतरः अत्युत्तम इति ज्ञानम् । पुण्यहीनाः अकृतज्ञाः न विन्दन्ति नाप्नुवन्ति । सारंगाश्चातकाः "सारङ्गश्चातके भृङ्गे" इत्यभिधानम् । जलाशयेषु विद्यमानेषु यथा जलं न विन्दन्ति तथेति ।। ७१ ।।

**स्मृ.कृष्णाचार्य**—अन्यकीर्तनं विना हरिकीर्तनमेव किमर्थं कर्तव्यमित्यतः तस्यैव रमाब्रह्मादिसारभूतेभ्योऽत्यन्तश्रेष्ठतमत्वात्तत्कीर्तनमेव कार्यमिति भावेन तद्वाक्यमेव पठति— **असारे खल्विति** ।। तर्हि सर्वैः किमर्थं न कीर्त्यते इत्यत उक्तम् ।। **पुण्यहीना इति** ।। पुण्यहीनाः पुण्यैः भगवद्भक्तिसाधनपुण्यैः हीनाः केवलसंसारिणः तं हरिं न विन्दन्ति न प्राप्नुवन्ति । तेषां पुण्यहीनत्वं कुत इत्यतः ।। **असारे खल्विति** ।। सदा असारे पापभूयिष्ठे संसारे विद्यमानत्वात् पुण्यहीनाः । खल्विति शास्त्रप्रसिद्धिं सूचयति । तत्र दृष्टान्तः । सारङ्गाः हरिण्यः जलपानार्थं यथा जलं न विन्दन्ति न प्राप्नुवन्ति तथेत्यर्थः ।। ७१ ।।

**कृष्णामृतमहार्णवः**

***कुरुक्षेत्रेण किं तस्य किं काश्या पुष्करेण किम् ।**
**जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम् ।। ७२ ।।**

---

*अयं श्लोकः नारदपुराणे २-७-४ ।

**ताम्रपर्णी**—ननु तर्हि तद्वेदनार्थं क्षेत्रवासादिना पुण्यं सम्पाद्यम् । किन्नाम कीर्तनेनेत्यत आह— **कुरुक्षेत्रेणेति** ।। बह्वायाससाध्येन कुरुक्षेत्रवासादिनेत्यर्थः ।। ७२ ।।

**उमर्जी**—प्रवचनस्य सर्वतीर्थनिषेवणादधिकफलत्वमाह— **कुरुक्षेत्रेणेति** ।। यस्याधिकारिणः । अक्षरद्वयं क्षरमक्षरञ्चेति द्वयं प्रति हरिः कर्तेति प्रवचनरूपेण जिह्वाग्रे वर्तते । तस्य कुरुक्षेत्रादिना किं कृत्यमिति प्रत्येकमन्वयः । "सर्वाणि तीर्थानि वसन्ति तत्र यत्राच्युतोदारकथाप्रसङ्गः" इति भागवतोक्तेः ।। ७२ ।।

**उपेन्द्र**—प्रवचनस्य तीर्थाद्यधिकफलत्वमाह— **कुरुक्षेत्रेणेति** ।। यस्याधिकारिणः। क्षरमक्षरं चेति द्वयं प्रति हरिः कर्तेति प्रवचनरूपेण जिह्वाग्रे वर्तते । तस्य कुरुक्षेत्रादिना किमिति प्रत्येकमन्वयः । "सर्वाणि तीर्थानि वसन्ति तत्र यत्राच्युतोदारकथाप्रसङ्गः" इति भागवतोक्तेः । प्रवचनेनैव सर्वतीर्थनिषेवणफलं प्राप्नोतीति भावः ।। ७२ ।।

**कोनेरी**—बहुषु तीर्थेषु सत्सु तत्र तत्र स्नानानुष्ठानादिना पापक्षयान्मोक्षसिद्धेः किं हरिनामस्मरणेनेति तत्राह— **कुरुक्षेत्रेणेति** ।। यस्य हरौ भक्तिरहितस्य । जिह्वाग्रे हरिरित्यक्षरद्वयं वर्तते चेदपि । तस्य कुरुक्षेत्रेण किम् । काश्या पुष्करेण वा किम् । तत्र स्नानादिना न किमपि फलं भवति । तदुक्तम्—"अभक्तोदाहृतं नैव फलदातृ भविष्यति" इति षष्ठतात्पर्ये । अथवा यस्य उत्तमज्ञानिनः जिह्वाग्रे हरिरिति अक्षरद्वयं वर्तते । तस्यापरोक्षज्ञानिनः कुरुक्षेत्रादिभिः किं न किमपि फलम् । तेषु स्नानादिजन्यफलस्य पूर्वमपरोक्षदशायामेव क्षीणत्वात् । किञ्च "सर्वाणि तीर्थानि वसन्ति तत्र" इत्युक्तत्वाच्च ।। ७२ ।।

**स्मृ.कृष्णाचार्य**—हरिनामोच्चारणस्य कुरुक्षेत्रादितीर्थस्नानाद्यपेक्षया अधिकफलत्वात्तत्कीर्तनं सदा कार्यमिति स एवाह— **कुरुक्षेत्रेणेति** ।। यस्य जिह्वाग्रे जिह्वायां हरिरित्यक्षरद्वयं तन्नाम वर्तते तन्नामोच्चारणं करोति । तस्य अधिकारिणः कुरुक्षेत्रेण तत्र गमनेन किम् । काश्या वराणसीगमनेन किम् । पुष्करेण तत्र गमनस्नानादिना किं फलम् । तत्र गमनादिफलापेक्षया जिह्वाग्रेण हरिरित्यक्षद्वयोच्चारणमात्रस्य तदपेक्षया अधिकफलत्वात्तत्कीर्तनं सदा कार्यमिति ।। ७२ ।।

## कृष्णामृतमहार्णवः

ब्रह्मा—

**असारे खलु संसारे सारमेकं निरूपितम् ।**
**समस्तलोकनाथस्य सारमाराधनं हरेः ।। ७३ ।।**

**ताम्रपर्णी**—नामकीर्तनमिव भगवदर्चनमपि ज्ञानान्तरङ्गसाधनमित्याह— **ब्रह्मे-त्यादिश्लोकत्रयेण**।। समस्तलोकनाथस्य हरेः सारं अङ्गवैकल्यराहित्येन श्रेष्ठं आराधनं एकमेव । असारे अनादौ संसारे कदाचिदनुष्ठितं कर्म सारं श्रेष्ठं निरूपितमित्यर्थः । ततोऽनन्तगुणा हरेः पूजेति वचनात् ।। ७३ ।।

**उमर्जी**—संसारे सारान्तरं नास्तीत्याह— **असार इति** ।। एकं मुख्यं सारं निरू-पितं शास्त्रे इति शेषः । तत्किमित्यत उक्तम् ।। **समस्तलोकनाथस्येति** ।। विशे-षणं इतराद्वैलक्षण्यं ज्ञापयति ।। ७३ ।।

**उपेन्द्र**—संसारे मुख्यसारमाह— **असार इति** ।। संसारे विद्यमानजनानां एकं मुख्यं सारं निरूपितं शास्त्रे । तत्किमित्यत उक्तम् ।। **समस्तलोकनाथस्येति** ।। आराधनस्य मुख्यसारत्वोपपादकं विशेषणम् । संसारिणां भगवदाराधनमेव मुख्यसारमिति भावः ।। ७३ ।।

**कोनेरी**—नामसंकीर्तनवत् भक्त्या हर्यर्चनमपि ज्ञानद्वारा मोक्षप्रापकमिति ब्रह्मो-क्तमाह— **ब्रह्मेति** ।। असारे सारहरिपूजालक्षणश्रेष्ठव्यापाररहितः असारः तस्मिन् संसारे । समस्तलोकनाथस्य हरेः पूजा आराधनं एकमेव सारं श्रेष्ठमिति निरू-पितम् । ज्ञानिभिरिति शेषः । खलु यथार्थम् ।। ७३ ।।

**स्मृ.कृष्णाचार्य**—दुःखभूयिष्ठे वर्तमानस्य पुरुषस्य सर्वसाधनानुष्ठानापेक्षया भगवदाराधनस्य सारत्वाभिधानात् मुक्त्यर्थं भगवदाराधनं कार्यमित्यत्र ब्रह्मणो वाक्यं पठति— **असारे इति** ।। असारे सुखरहिते संसारे । खिद्यतामधिकारिणां मुख्यं सारं श्रेष्ठं मोक्षसाधनं निरूपितमिति । तत्किमित्यत उक्तम् ।। **सारमा-राधनमिति** । हरेः समस्तदुःखहारिणः आराधनं भक्त्याद्यतिशयेनार्चनस्मरण-कीर्तनादिकं सारं श्रेष्ठफलप्रदम् । आराधनस्य तादृशफलप्रदत्वं कुत इत्यत

उक्तम् ।। **समस्तलोकनाथस्येति** ।। समस्तस्य रमाब्रह्मादिजगतः नाथत्वात् तस्य तद्युक्तमिति । तस्मात्संसारिभिर्भगवदाराधनं कार्यमिति ।। ७३ ।।

**कृष्णामृतमहार्णवः**

**[२०]सा जिह्वा या हरिं स्तौति तच्चित्तं [१]यत्तदर्पणम् ।**
**तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ।। ७४ ।।**

**ताम्रपर्णी**— अर्चनायां येषामङ्गानां यद्वैशिष्ट्येन सारत्वमित्यतः वाङ्मनःकायवृत्तीनां तदैकाग्र्यमङ्गमिति यतस्तदवश्यमनुष्ठेयमिति भावेन स्तुत्यर्थवादमाह— **सा जिह्वेति** ।। यद्यपि सर्वकर्मणां तदर्पणं तस्मिन्नर्पणं भवति तदेव चित्तम् । यद्वा तस्मिन्नर्पणं यस्य तत् तदर्पणं तस्मिन्निहितं तदेव चित्तमित्यर्थः । अथवा यत्तदर्पितं तस्मिन्नर्पितं इदं मनस्तदधीनं करणं यस्य भोग्यमित्यर्पितं तदेव चित्तमित्यर्थः ।। तथाच ऋग्भाष्ये—

तस्येत्यर्पणमात्रेण प्रीतो भवति केशवः ।
मनोऽपि भोग्यं जीवस्य प्रीतिमात्रेण केवलम् ।। इति ।। ७४ ।।

**उमर्जी**—एवमाद्यपद्योक्तार्चनादीनां फलसाधनत्वं प्रतिपाद्योक्तसाधनेन पुरुषेन्द्रियाणां साफल्यमुपपादयति— **सेति** ।। सा जिह्वा सफलेत्यर्थः । अन्यथा दर्दुरकेव । यत् येन चित्तेन तदर्पणं तस्मिन् भगवति अर्पणं आसक्तिर्भवति । स्वकृतपूजादेरर्पणं भवतीति वा, तदेव चित्तं सफलम् । यौ तत्पूजाकरौ तावेव करौ सफलौ इत्यर्थः । अन्यथा शवसम्बन्धिनौ ।। ७४ ।।

---

१. 'यत्तदर्पितम्' इति कोनेगं, स्मृ.कृ. तथा कृ. पाठः ।

२०. मनश्च नाद्ध धर्मज्ञ केशवे यत्प्रवर्तते ।
सा बुद्धिस्तद्व्रतायेव सततं प्रतितिष्ठति ।। ६ ।।
सा वाणी केशवं देवं या स्तौति भृगुनन्दन ।
श्रवणौ तौ श्रुता याभ्यां सततं तत्कथाः शुभाः ।। ७ ।।
अर्थेहि धर्मज्ञ तथा तत्पूजाकरणात्करौ ।
तदेकं सफलं कर्म केशवार्थाय यत्कृतम् ।। ८ ।।
यतो मुख्यफलप्राप्तौ करणं सप्रयोजनम् ।
मनसा तेन किं कार्यं यत्र तिष्ठति केशवे ।। ९ ।।

**उपेन्द्र**—एवमाद्यपद्योक्तार्चनादीनां फलसाधनत्वेन कर्तव्यत्वं प्रतिपाद्य उक्तसाधनकरणेन पुरुषेन्द्रियाणां साफल्यमुपपादयति— **सेति** ।। या जिह्वा हरिं स्तौति सा सफला । यत् येन चित्तेन, तदर्पणं तस्मिन्भगवति अर्पणं आसक्तिर्भवति । स्वकृतपूजादेरर्पणं समर्पणं भवतीति वा । तदेव सफलम् । करौ पूजाकरौ तावेव श्लाघ्यौ श्लाघनीयौ केवलौ मुख्यौ ।। ७४ ।।

**कोनेरी**—भगवत्सेवारहितानां अङ्गानां वैयर्थ्यमाह— **सेति** ।। या भक्त्या हरिं स्तौति सैव जिह्वा नो चेत्सा दर्दुरिकी । दर्दुरसम्बन्धिनी । "जिह्वा न सा दर्दुरिकेव सूत न चेत् प्रगायत्युरुगायगाथाम्" इति द्वितीयस्कन्धोक्तेः । यच्चितं तदर्पितं तस्मिन् हरावर्पितं तदेव चित्तं । नो चेत् "तदस्य सारं हृदयं बतेद"मिति तत्रोक्तेः । यौ तत्पूजाकरौ तस्य हरेः पूजाकरौ तावेव करौ केवलौ मुख्यौ श्लाघ्यौ । नो चेत्तौ करौ शावौ शवसम्बन्धिनौ । अस्पर्शाविति यावत् । "**शावौ करौ नो कुरुतः सपर्याम्**" इति तत्रोक्तेः ।। ७४ ।।

**स्मृ.कृष्णाचार्य**—भक्तपुरुषेन्द्रियाणां भगवद्विषयकार्चनादिनैव सार्थकत्वाभिधानात्तादृशेन्द्रियैर्भगवदर्चनादिकं कार्यमिति इन्द्रियाणि स्तौति— **सा जिह्वेति** ।। यस्य या जिह्वा जिह्वेन्द्रियं हरिं स्तौति सा जिह्वा सैव भगवद्विषयेयव सार्थका । यच्चित्तं यस्य भक्तस्य चित्तं यन्मनः तदर्पितं तस्मिन्भगवत्येव नान्यत्रार्पितं तदेव चित्तं भक्तस्य तदेव मनः सार्थकम् । तथा यौ करौ भक्तस्य करौ तत्पूजाकरौ दैवता-र्चादिपूजाया आकरौ तावेव करौ केवलौ असाधारणौ श्लाघ्यौ । तस्मादेतादृशेन्द्रियैः सदा भगवदाराधनादिकं भक्तेन कार्यमिति ।। ७४ ।।

कृष्णामृतमहार्णवः

**यस्तु विष्णुपरो नित्यं दृढभक्तिर्जितेन्द्रियः ।**
**स्वगृहेऽपि वसन् याति तद्विष्णोः परमं पदम् ।। ७५ ।।**

---

२०. बुद्ध्या वा भार्गवश्रेष्ठ तया नास्ति प्रयोजनम् ।
रोगः सा रसना वाऽपि यया न स्तूयते हरिः ।। १० ।।
गतौ ब्रह्मव्रतौ कर्णौ याभ्यां तत्कर्म न श्रुतम् ।
भारभूतैः करैः कार्यं किं तस्य नृपशार्द्दिज ।। ११ ।।

**ताम्रपर्णी**—ननु बन्धकस्वगृहत्यागेन तीर्थाटनमेव सारं साधनमित्यत आह– – **यस्त्विति** ।। यस्तु य एवोक्तरीत्या सर्वेन्द्रियसमर्पणेन विष्णुपरः तन्निष्ठावान्। दृढभक्तिर्जितेन्द्रियः। स स्वगृहेऽपि वसन् । तत् प्रसिद्धं विष्णोः परमं पदं वैकुण्ठादिस्थानं यातीत्यर्थः। विष्णुनिष्ठादियुक्तश्चेत्स्वगृहे वसन्नेव ज्ञानद्वारा विष्णुलोकं याति । तद्रहितश्चेद्वने तीर्थाटनं कुर्वन्नपि श्रममात्रभागिति भावः ।। ७५ ।।

**उमर्जी**—ननु वेदान्तविज्ञानसुनिश्चितार्था इत्यादिना यतीनामेव विष्णुलोकश्रवणात् गृहाश्रमिणां कथं विष्णुलोकप्राप्तिरित्यत आह— **यस्त्विति** ।। उक्तसाधनैर्विशेषतो विष्णुपरः सः स्वगृहे स्वयोग्यगृहस्थाश्रमे वसन्नपि तत् सन्न्यासिप्राप्यं पदं याति। "सर्वेषामाश्रमस्थानां ज्ञानान्मोक्षो न संशय" इति वचनात् ।। ७५ ।।

**उपेन्द्र**—ननु "वेदान्तविज्ञानसुनिश्चितार्था" इत्यादिना यतीनामेव विष्णुलोकप्राप्तिश्रवणात् गृहाश्रमस्थानामुक्तसाधनेन कथं विष्णुलोकप्राप्तिरित्यत आह— **यस्तु इति**।। यः अधिकारी स्वगृहे वसन्नपि विशेषतः हरौ दृढभक्तश्चेत् गृहे तिष्ठन्नपि मुक्तिमेति । विष्णुपरः पूजादिना आसक्तिमान् तत् सन्न्यासिप्राप्यं पदं याति ।

सर्वेषामाश्रमस्थानां ज्ञानान्मोक्षो न संशयः । इत्युक्तेः ।। ७५ ।।

**कोनेरी**—हरौ दृढभक्तश्चेद्गृहे तिष्ठन्नपि मुक्तिमेति सन्न्यसनाद्यायासेन न प्रयोजनमित्याह— **य इति** ।। यः नित्यं विष्णुपरः । दृढा भक्तिर्यस्य स तथा । जितेन्द्रियः सः स्वगृहे स्वभार्यया सह एकपत्नीव्रतेन गृहाश्रमे वसन्नपि परममुत्तमं तत् प्रसिद्धवैकुण्ठादिकं विष्णोः पदं स्थानं याति । तदुक्तं—

भयं प्रमत्तस्य वनेष्वपि स्याद्यतो वसन्ते सह षट्सपत्नाः ।
जितेन्द्रियस्यत्मरतेर्बुधस्य गृहाश्रमः किन्नु करोत्यवद्यम् ।।

—इति पञ्चमस्कन्धे ।। ७५ ।।

**स्मृ.कृष्णाचार्य**—ननु यत्यादीनामेव वेदान्तविज्ञानेत्यादौ विष्णुपदप्राप्त्युक्तेः संसारिणां गृहस्थानां भगवदर्चनादिना मोक्षप्राप्तिः कथमित्यतः गृहस्थानामपि भक्तिपूर्वकमर्चनादिसाधनैर्विष्णुपदप्राप्तिर्भवतीत्यत्र वचनमाह— **यस्त्विति** ।। यः अधिकारी विष्णुपरः विष्ण्वर्चनादौ रतः । विष्णुपरो विष्णुसर्वोत्तमत्वज्ञानी । यस्तु विष्णौ दृढभक्तिः सुदृढनवविधभक्तिमान् । यस्तु जितेन्द्रियः चक्षुरादीन्द्रिय-

जयवान् । एतादृशो गृहस्थाश्रमी यः स्वगृहे पुत्रमित्रकलत्रादियुक्तस्वगृहे वर्तमानोऽपि भगवद्भक्त्यादिना तदर्चनादिमान् । तत् सन्न्यासिप्राप्यं विष्णोः परमं पदं विष्णोः स्थानं वैकुण्ठादि प्राप्नोति । "सर्वेषामाश्रमस्थानां ज्ञानान्मोक्षो न संशय" इत्युक्तेः । तस्माद्गृहस्थैर्मोक्षार्थं भक्त्या भगवदर्चनादि पूर्वोक्तं सदा कार्यमिति ।। ७५ ।।

## कृष्णामृतमहार्णवः

शंकरः—

**साधु साधु महाभाग साधु [1]दानवनाशन ।**
**यन्मां पृच्छसि धर्मज्ञ केशवाराधनं प्रति ।। ७६ ।।**

**ताम्रपर्णी**—केशवाराधनं सारमित्याद्युक्तमेव वचनान्तरेण दृढयति— **शंकर इत्यादिना** ।। केशवाराधनं प्रति तद्विषयज्ञानार्थं मां यत्पृच्छसि तत्साध्विति त्रिरुक्तिरादरार्था ।। ७६ ।।

**उमर्जी**—भगवदर्चनमेव महातात्पर्यमित्यत्र शंकरवाक्यं पठति— **साध्विति** ।। अर्चने तात्पर्यातिशयाद् द्विरुक्तिः । केशवाराधनं प्रति यन्मां पृच्छसि तदेव साधु साधु इति अन्वयः । साधुदानवनाशनेत्येकं पदम् । साधुश्चासौ दानवनाशनश्चेति विग्रहः । महाभागेति स्वपुत्रं स्कन्दं प्रति सम्बोधनम् । प्रश्नस्यैव साधुत्वप्रतिपादना-दर्चनमवश्यं कार्यमिति भावः ।। ७६ ।।

**उपेन्द्र**—भगवदर्चनमेव पुरुषार्थसाधनमिति देवानां तात्पर्यमस्तीति ज्ञापकं स्तुति-रूपं शंकरवाक्यं पठति— **साध्विति** ।। महाभागेति पुत्रं स्कन्दं प्रति सम्बोधनम् । प्रश्नस्यैव साधुत्वप्रतिपादनादर्चनं कार्यमिति भावः ।। ७६ ।।

**कोनेरी**—उक्तमर्थं दृढयितुं रुद्रवचनमाह— **शंकर इति** ।। हे दानवनाशन ! हे धर्मज्ञ ! महाभाग ! यत् यस्मात् केशवाराधनं कथं कार्यमिति मां प्रति पृच्छसि । तस्मात् प्रश्नविषयकं वचनं साधु साधु साधु । केशवाराधनस्य मोक्ष-रूपमहाफलप्रदत्वद्योतनाय त्रिवारं साधुशब्दप्रयोग इति ज्ञेयः ।। ७६ ।।

---

१. 'दानवसूदन' इति स्मृ.कृ. तथा कृ. पाठः ।

**स्मृ.कृष्णाचार्य**—केशवाराधनविषयकप्रश्नस्यापि साधुफलत्वाभिधानात्केशवाराधनादिकं भक्तेन कार्यमिति शंकरवाक्यं प्रमाणयति— **साधुसाध्विति** ।। केशवाराधनं प्रति केशवस्यार्चनाराधनविषय एव यन्मां यत्साधनजातं परिपृच्छसि सम्यक्प्रश्नं करोषि तत्साधु अत्यन्तमङ्गलप्रदम् । हे महाभाग अत एव महाभाग्यवानसि। हे दानवसूदन दानवानां नाशक । साधु त्वया पृष्टं साधु साध्वित्यादरादिद्वरुक्तिः ।। **धर्मज्ञेति** ।। भगवदर्चनादिधर्मज्ञानीति स्वभक्तं प्रति शंकरस्तुतिवाक्यम् । तस्मात्तदर्चनप्रश्नस्यापि साधुत्वाभिधानात्पूर्वोक्तं तदर्चनादिकं कार्यमिति ।। ७६ ।।

**कृष्णामृतमहार्णवः**

**निमिषं निमिषार्धं वा मुहूर्तमपि भार्गव ।**
**नादग्धाशेषपापानां भक्तिर्भवति केशवे ।। ७७ ।।**

**ताम्रपर्णी**—कथमाराधनप्रश्नस्य साधुत्वमिति चेत् । भक्त्या हि तदाराधनप्रश्नः । भक्तिश्च तत्प्रतिबन्धकपापक्षयवतामेव । अतस्तत्साध्विति **भावेनाह— निमिषमिति**।। यद्वा पापक्षयद्वारा भक्तिफलकत्वादाराधनं कार्यमिति भावेनाह— **निमिष-मिति** ।। ७७ ।।

**उमर्जी**—अर्चनाकरणे भक्तेर्दौर्लभ्यमाह— **निमिषमिति** ।। अधिकारिभेदेन निमिषार्धमित्यादि । अर्चाद्यकरणेनादग्धाशेषपापानां पुरुषाणां यस्य केशवे भक्तिर्भवति । सः ना नृशब्दवाच्यः पुरुषः । अशेषपापानां दग्धा दहकः । भार्गवेति ऋषेः सम्बोधनम् ।। ७७ ।।

**उपेन्द्र**—अर्चनाद्यभावे भक्तेर्दौर्लभ्यमाह— **निमिषमिति** ।। साधनतारतम्याद्भक्तितारतम्यमिति ज्ञापनाय निमिषं निमिषार्धं वा इत्युक्तम् ।।७७।।

**कोनेरी—प्रश्नं प्रशंस्य** उत्तरमाह— **निमिषमिति** ।। हे भार्गव परशुराम। अदग्धाशेषपापानां अशेषानि च तानि पापानि च अशेषपापानि अदग्धान्यशेषपापानि येषां ते तेषां भक्तानामपि । मुहूर्तं, निमिषं, निमिषार्धं वा । दृढा अखण्डध्यानोत्पन्ना । भक्तिः केशवे न भवति । यदा गुरूपदेशेन क्रियमाणहरिस्मृत्यादिनोत्पन्न-

ज्ञानेन स्वकृताशेषपापे नष्टे तदा हरौ दृढभक्तिः भवति । प्रतिबन्धकभूतपापानां नष्टत्वादिति तात्पर्यार्थः ।। ७७ ।।

**स्मृ.कृष्णाचार्य**—पूर्वोक्तार्चनस्मरणादिना साध्यमोक्षे भक्तिरन्तरङ्गसाधनमिति ज्ञापनार्थं तस्याः दौर्लभ्यमाह— **निमिषमिति** ।। निमिषं निमिषकालम् । तदर्धं वा कालम् । मुहूर्तं द्विघटिकाकालं वा । सर्वेषां केशवे भक्तिर्माहात्म्यज्ञानपूर्वक-सुदृढस्नेहरूपा भक्तिः न भवति । केषामित्यत उक्तम् ।। **अदग्धाशेषपापाना-मिति** ।। स्नानादिप्रायश्चित्तादिना अनष्टपापानां नराणामिति यावत् । तस्माद्भक्तेरति-दुर्लभत्वात्तद्भक्तिः सदा कार्येति ।। ७७ ।।

कृष्णामृतमहार्णवः

**किं तेन मनसा कार्यं यत्र तिष्ठति केशवे ।**
**मनो [1]मुक्तिफलावाप्तिकारणं [2]सुप्रयोजितम् ।। ७८ ।।**

**ताम्रपर्णी**—आराधनं च सर्वेन्द्रियाणां तदेकाग्रतया कार्यमिति भावेन "सा जिह्वा या हरिं स्तौति"इति इन्द्रियाणां भगवदर्पणे स्तुत्यर्थं वादः उक्तः । अधुना तदकरणे निन्दार्थवादं तत्करणे स्तुत्यर्थवादं फलं चाह— **किं तेनेत्यादिश्लोक-षट्केन** ।। बन्धकस्य कथं मुक्तिकारणत्वमित्यत उक्तम् ।। **सुप्रयोजितमिति** ।। यथा मारकं वत्सनाभादि सुप्रयोजितं शुद्धिपूर्वं चिन्तामण्याद्यौषधेषु प्रयोजितं जीवनकरं भवति । एवं बन्धकमेव मनः निवृत्तकर्मणा शुद्धमीश्वरे प्रयोजितं चेन्मुक्तये भवति । 'मन एव मनुष्याणां कारणं बन्धमोक्षयो'रित्यादेरिति भावः ।।

**उमर्जी**—एवमर्चनादिना पुरुषेन्द्रियाणां साफल्यमुपपाद्याननुष्टाने वैयर्थ्यमुपपा-दयति— **किं तेनेत्यादिना** ।। यन्मनः भगवति सुप्रयोजितं मुक्तिफलावाप्तिकारणं मुक्तिलक्षणफलावाप्तौ कारणं भवति ।। ७८ ।।

**उपेन्द्र**—अदग्धाशेषपापानां पुरुषाणां अर्चनादिपापनिवर्तकसाधनाकरणेन स्मरणा-करणे वैयर्थ्यमुपपादयति— **किमिति** ।। तेन भगवदविषयकेन मनसा

---

१. 'मुक्तिफलावाप्त्यै कारणं' इति कोनेरी पाठः ।
२. 'सम्प्रयोजनं' इति कोनेरी पाठः ।

किम् । न किमपि प्रयोजनम् । अप्रयोजकत्वशंकां वारयति— **मन इति** ।। सुप्रयोजितं भवति सुष्ठु विषयीकृतमित्यर्थः ।। ७८ ।।

**कोनेरी**—भक्त्युत्पत्तिप्रकारमुक्त्वा इन्द्रियाणामपि भगवदेकनिष्ठत्वाभावे निरर्थतामाह— **किमिति** ।। यन्मनः केशवे दृढं न तिष्ठति न स्मरति । तेन मनसा किं कार्यम् । न किमपि प्रयोजनमस्ति । किन्तु भगवद्ध्यानरहितमनसा पापप्रवृत्तौ नरकाद्यनर्थप्राप्तिरेव भवति । तदेव मनः हरावेव तिष्ठति चेत् मुक्तिफलावाप्त्यै मोक्षरूपफलावाप्त्यै कारणं भवति । कीदृशं सुप्रयोजनं शोभनं प्रयोजनं मोक्षरूपं यस्मात् तत् । "मन एव मनुष्याणां कारणं वन्धमोक्षयोः" इत्युक्तेः ।। ७८ ।।

**स्मृ.कृष्णाचार्य**—भक्तेन्द्रियाणां भगवद्विषयकस्वस्वव्यापारवतां सार्थक्यम्। अन्यथा तेषामनर्थप्रदत्वाद्धेयत्वमेवेति तेषां भगवद्विषयत्वमेव सम्पाद्य भगवदाराधनादिकं कर्तव्यमिति ज्ञापनाय तानि निन्दयत्युत्तरश्लोकैः ।। **किं तेनेति** ।। तेन मनसा किं प्रयोजनम् । यन्मनः केशवे केशवविषये न तिष्ठति नाचलं भवति। तन्मनः कीदृशमित्यत उक्तम् ।। **मुक्तिफलावाप्तिकारणमिति** ।। मोक्षाख्यफलस्य साधनम् । कीदृशं साधनम् । सुप्रयोजितं सुष्ठु प्रयोजितं केशवे सुप्रयोजितं मनः मुक्तिफलप्रवाप्तिकारणं तादृशं मनः केशवे न तिष्ठति चेत् तेन मनसा किं कार्यम् । तस्मात्तन्मनो भगवद्विषयकं कृत्वा स्वमुक्तिफलावाप्तिकारणं कृत्वा भक्तो मुक्तिं सम्पादयेदिति भावः ।। ७८ ।।

कृष्णामृतमहार्णवः

**रोगो नाम न सा जिह्वा यया न स्तूयते हरिः ।**
**गर्तौ नाम न तौ कर्णौ याभ्यां तत्कर्म न श्रुतम् ।। ७९ ।।**

**उमर्जी**— ।। **नूनमिति** ।। रोगो नाम गलरोग इति प्रसिद्धः । न सा जिह्वा स्वसाध्यफलजनकत्वाभावात् । गर्तौ बिलौ इत्यर्थः ।। ७९ ।।

**उपेन्द्र**—कीर्तनाकरणे जिह्वानिन्दावाक्यं पठति— **रोग इति** ।। कण्ठरोग इति प्रसिद्धः । स्वसाध्यफलजनकत्वाभावान्न सा जिह्वा । श्रवणाकरणे निन्दावाक्यं पठति— **गर्ताविति** ।। रन्ध्राविति प्रसिद्धौ ।। ७९ ।।

**कोनेरी—**यया जिह्वया हरिर्न स्तूयते सा जिह्वा न । अपितु रोगो नाम रोग इति प्रसिद्धः । यथा जिह्वाया रोगोत्पत्तौ क्वचिन्न ब्रूते । क्वचिद्वैपरीत्येन ब्रूते तद्वदिति । याभ्यां कर्णाभ्यां तत्कर्म तस्य हरेरवतारैः कृतं लीलारूपं कर्म न श्रूयते । तौ कर्णौ न । किन्तु गर्तौ बिलसदृशाविति नाम प्रसिद्धौ । उक्तं च द्वितीयस्कन्धे "बिले बतोरुक्रमविक्रमान्ये न शृण्वतः कर्णपुटे नरस्य" इति ।। ७९ ।।

**स्मृ.कृष्णाचार्य—**भगवदविषयकेन्द्रियाणि निन्दति— **रोगेति** ।। यया जिह्वया येन पुरुषेण हरिर्न स्तूयते । सा जिह्वा तस्य जिह्वैव न भवति । किन्त्वास्यान्त-र्वर्तिरोग एव । याभ्यां कर्णाभ्यां तत्कर्म तस्य भगवतो विचित्रं कर्म न श्रुतम् । तौ कर्णौ पुरुषस्य न भवतः । किन्तु गर्तावेव गर्तप्रायौ । दुःखप्रदाविति यावत् । तस्माज्जिह्वे-न्द्रियादिकं मुक्त्यर्थं भगवद्विषयकमेव कार्यमित्यर्थः ।। ७९ ।।

### कृष्णामृतमहार्णवः

**नूनं [१]तत्कण्ठशालूकमथवाऽप्युपजिह्विका ।**
**रोगो नाम न सा जिह्वा या न वक्ति हरेर्गुणान् ।। ८० ।।**

**ताम्रपर्णी—** ।। **नूनमिति** ।। या न वक्ति हरेर्गुणान् सा जिह्वा तत्प्रसिद्धं कण्ठ-शालूकं कण्ठमध्योत्पन्नं दर्दुरम् । 'भेके मण्डूकशालूकौ' इत्यभिधानात् । अथवा उपजिह्विका नाम रोग एव प्रसिद्धोपजिह्वेत्यर्थः । एतेन रोगो नाम प्रागुक्तो रोगो विवृतो भवति । केचित्तु कण्ठतालूकमिति पठित्वा कण्ठताल्वोरन्तर्वर्ति मांस-रूपमित्यर्थमाहुः ।। ८० ।।

**उमर्जी—**तत्कण्ठशालूकम् । तस्य पुरुषस्य कण्ठे शालूकस्थानीयं मांसविशेषो वा । "शालूकमेषां कन्दः स्यात्" इत्यमरः । उपजिह्विका नाम रोगः कटुस्वर-साधनत्वात् ।। ८० ।।

**उपेन्द्र—**प्रवचनाकरणे विशेषतो जिह्वानिन्दावाक्यं उदाहरति— **नूनमिति** ।। कण्ठशालूकं कण्ठे विद्यमानमांसविशेषः । "शालूकमेषां कन्दस्स्यात्" इत्यमरः ।

---

१ 'तत्कण्ठतालूकं' इति ताम्र. पाठः ।।

शालूकशब्दापेक्षया तदिति नपुंसकनिर्देशः । उपजिह्विका नाम दोष इति प्रसिद्धः । स्वसाध्यफलजनकत्वाभावात्र संति ।। ८० ।।

**कोनेरी**—हरिस्मृतिरहितजिह्वायाः दोषान्तरमाह— **नूनमिति** ।। यस्य पुरुषस्य या जिह्वा हरेर्गुणान्न वक्ति सा जिह्वा नूनं निश्चयेन तत्कण्ठशालूकं तस्य पुरुषस्य कण्ठप्रदेशे विद्यमानमल्पमांसग्रन्थिः । भगवदुच्चारणानर्हत्वेनाप्रयोजकत्वात्तद्वदिति । कण्ठशालूकं दर्दुरजिह्वेति केचिद्वदन्ति । अथवाप्युपजिह्विकाख्यरोगो नाम रोग इति प्रसिद्धः । जिह्वायामधिकमांसोत्पत्तौ तयोच्चारणाभावो वैपरीत्येनोच्चारणं वा भवति । जिह्वोपरि आधिक्येन विद्यमानत्वात् उपजिह्विकेत्युच्यते । अपभ्रष्टभाषया वालर्मिति वदन्ति तद्वदिति ।। ८० ।।

**स्मृ.कृष्णाचार्य**—जिह्वायाः प्रकारान्तरेण वैय्यर्थ्यमुपपादयति— **नूनमिति** ।। या जिह्वा भक्तस्य जिह्वा हरेर्गुणान्न वक्ति सा जिह्वैव न । किन्तु तत्कण्ठतालूकम् । तद्भक्तस्य तस्य भक्तस्य कण्ठताल्वोर्मध्ये विद्यमानं मांसरूपम् । अथवा उप-जिह्विका गलान्तरे विद्यमानोपजिह्विका नाम रोग एव ।। ८० ।।

**कृष्णामृतमहार्णवः**

**भारभूतैः करैः कार्यं किं तस्य नृपशोर्द्विजाः ।**
**यैर्हि न क्रियते विष्णोर्गृहसम्मार्जनादिकम् ।। ८१ ।।**

**ताम्रपर्णी**—भारभूतैरेभिः करैरित्यतीतानागतकरापेक्षया बहुवचनम् ।। ८१ ।।

**उमर्जी**—भारभूतैरेभिरवयवैस्साथक्यं मन्यमानस्य नृपशोः किं कार्यम् । व्यर्थ-मित्यर्थः । द्विजेति ऋषेः सम्बोधनम् । यैः करादिभिर्हर्यर्चनादि न क्रियते । तैः किं कार्यमिति पूर्वेणान्वयः ।। ८१ ।।

**उपेन्द्र**—करादिना पूजाऽकरणे दुःखसाधनत्वमाह— **भारभूतैरिति** ।। भारभूतै-रेभिर्जिह्वादिभिः किं कार्यम् । विषयसुखसाधनत्वेन सार्थक्यं मन्वानस्य तस्य नृपशोः । **द्विजेति** ऋषेस्सम्बोधनम् ।। ८१ ।।

**कोनेरी**—हरिस्मृतिरहितजिह्वां अधिकृत्य हरिसेवाननुकूलकराद्यङ्गानि निराह-- **भारभूतैरित्यादिना** ।। हे द्विज ! यैः करैः विष्णोर्द्विविधगृहसम्मार्जनादिकं न

क्रियते । एकं चलमेकमचलं च । चलस्य गन्धलेपनसुमाल्यादिना सम्मार्जनं आराधनम् । अचलस्य गोमयरङ्गवल्ल्यादिना सम्मार्जनं एवं द्विविधम् । तस्य श्वविड्वराहसदृशस्य नृपशोः भारभूतैः एभिर्बहुजन्मोत्पन्नदेहसम्बन्धकैः करैः किम् । न किमपि प्रयोजनमस्ति । 'करौ हरेर्मन्दिरमार्जनादिषु' इति भागवतोक्तेः । बहुजन्मस्वयोग्यत्वप्रदर्शनार्थं करैरिति बहुवचनम् । अयमेव सर्वशास्त्रोक्तार्थ इति हिशब्दो वक्ति ।। ८१ ।।

**स्मृ.कृष्णाचार्य**—अत एताभिः एतादृशेन्द्रियैः प्रयोजनं नास्तीत्याह— **भारभूतैरिति** ।। यस्येत्यत उक्तम ।। **नृपशोरिति** ।। पशुतुल्यस्य नरस्य भारभूतैरेभिः किं कार्यं कर्तव्यम्। सौख्यकारकत्वाभावात् । तदेव उपपादयति— **यैरिति** ।। यैः करैः विष्णोर्गृहसम्मार्जनानुलेपनादिकं न क्रियते तादृशैः भारभूतैः किं कार्यम्। नृपशोरितीन्द्रियजयादिराहित्यमुक्तम् । अत एतादृशेन्द्रियजयो मोक्षार्थिना कार्य इति भावः ।। ८० ।।

**कृष्णामृतमहार्णवः**

**चरणौ तौ तु सफलौ केशवालयगामिनौ ।**
**ते च नेत्रे महाभागे याभ्यां सन्दृश्यते हरिः ।। ८२ ।।**

**ताम्रपर्णी**—ते च नेत्रे सफले इति योज्यम् । त एव नेत्रे नान्ये इति वा 'बर्हायिते ते नयन' इति भागवतोक्तेरिति भावः ।। ८२ ।।

**उमर्जी**—तुशब्दोऽवधारणे । तावेव चरणौ सफलौ । ते एव नेत्रे सफले ।। ८२ ।।

**उपेन्द्र**— भगवत्प्रसादोपभुक्तानामवयवानां साफल्यमन्यथा वैफल्यमुपपादयति- – **चरणाविति**।। यौ केशवालयगामिनौ । तुशब्द एवार्थे । तावेव सफलौ । चोऽवधारणे । ते नेत्रे एव सफले इति शेषः ।। ८२ ।।

**कोनेरी**—यस्य चरणौ तीर्थयात्रामुद्दिश्य केशवालयगामिनौ तावेव चरणौ सफलौ द्वौ तुशब्दौ एवार्थे । नोर्चान्नरर्थकावितं । उक्तं च द्वितीयस्कन्धे—"पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ" इति । हे महाभाग याभ्यां नेत्राभ्यां

हरिः दृश्यते त एव नेत्रे । नोचेत् इन्द्रियाणि अभिमन्यमानाधिष्ठितगोलके । अन्धे इति यावत् । उक्तं च तत्रैव—"बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये" इति ।। ८२ ।।

**स्मृ.कृष्णाचार्य**—पुनरपि भगवद्विषये स्वस्वव्यापारवन्तीन्द्रियाणि सार्थकानि अतः अन्यथा व्यर्थानीति श्लोकद्वयेनाह— **चरणाविति** ।। तावेव चरणौ भक्तस्य सफलौ यौ चरणौ केशवालयं प्रति तद्दर्शनार्थं गामिनौ । ते च नेत्रे ते एव नयने । याभ्यां नेत्राभ्यां हरिः हरेः प्रतिमादिकं सन्दृश्यते ते नेत्रे सार्थके भवत इति ।। ८२ ।।

**कृष्णामृतमहार्णवः**

**किं तस्य चरणैः कार्यं वृथासञ्चरणैर्द्विजाः ।**
**यैर्हि न व्रजते जन्तुः केशवालयदर्शने ।। ८३ ।।**

**ताम्रपर्णी**— ।। **किं तस्य चरणैरिति** ।। बहुवचनमुक्तार्थम् ।। केशवालयदर्शन इति तादर्थ्ये सप्तमी । दर्शनार्थम् ।। ८३ ।।

**उमर्जी**—जन्तुर्जीवः यैश्चरणैः केशवालयदर्शने । विषयसप्तमी। आलयस्थकेशवदर्शनार्थमित्यर्थः । न व्रजते तैश्चरणैः किं कार्यम् । व्यर्थमित्यर्थः ।। ८३ ।।

**उपेन्द्र**—जन्तुर्जीवः केशवालयदर्शने । विषयसप्तमी । केशवस्य चलाचलप्रतिमारूपालयदर्शनविषये । यैश्चरणैः न व्रजते तस्य जन्तोः वृथा सञ्चरणैः व्यर्थसञ्चरण-वद्भिश्चरणैः किम् । न किमपि प्रयोजनम् ।। ८३ ।।

**कोनेरी**—अयोग्याङ्गानामसार्थक्यमाह— **किमिति** ।। तस्य हरिभक्तिविहीनस्य । वृथासञ्चरणैश्चरणैः पादैः किं कार्यम् । तथा चरणैराचरणैश्च किम् । न किमपि । "कपूय चरणाः कपूयां योनिमापद्यन्ते" इति श्रुतेः । यैः केशवालयदर्शनार्थम् । तादर्थ्ये सप्तमी । जन्तुः नृपशुः न व्रजते याति तेन चरणेन इति पूर्वेणान्वयः ।। ८३ ।।

**स्मृ.कृष्णाचार्य**—चरणयोः भगवदालयगामिनोः सार्थक्यमुक्त्वा तद्रहितयोर्वैयर्थ्यमाह— **किं तस्येति** ।। तस्य नृपशोर्नरस्य चरणैः किं, किं प्रयोजनम् ।

कीदृशैर्वृथासञ्चरणैः केशवालयगमनरहितैर्न किमपि प्रयोजनमिति । तदेवाह— **यैरिति** ।। यैश्चरणैर्जन्तुः केशवालयस्थदेवतादर्शनं प्रति न व्रजते तैः किं प्रयोजनमिति ।। ८३ ।।

**कृष्णामृतमहार्णवः**

***वेदवेदाङ्गविदुषां मुनीनां भावितात्मनाम् ।**
**ऋषित्वमपि [1]धर्मज्ञ विज्ञेयं तत्प्रसादजम् ।। ८४ ।।**

**ताम्रपर्णी**—श्रवणमननध्यानानां कर्तव्यत्वं महाफलोक्त्या रोचयते— **वेदेति** ।। वेदवेदाङ्गविदुषां गुरूपसत्तिपूर्वकं वेदादिश्रवणेन तदर्थज्ञानिनां मुनीनां मननशीलानाम् । भावितो ध्यातः आत्मा परमात्मा यैस्तेषां भावितात्मनाम् । न केवलं ऋषित्वम् । अपिपदाद्देवत्वादिकमपि तत्प्रसादजमित्यर्थः । अतो महाफलहेतुत्वात् स्वयोग्यफलप्राप्त्यै सर्वैस्तदनुष्ठेयमिति भावः ।। ८४ ।।

**उमर्जी**—ननु ज्ञानार्थं कर्म कर्तव्यम् । ज्ञानिनस्तदपेक्षा न इत्यत आह— **वेदेति** ।। चत्वारो वेदाः वेदाङ्गैः षडङ्गैर्भगवन्तं विदुषां भावितात्मनां ध्यानविषयीभूतः आत्मा भगवान् येषां मुनीनाम् । ऋषित्वं त्रिकालदर्शितत्वं अपि तत्प्रसादजं भगवत्प्रसादजम् । धर्मज्ञेति ऋषेस्सम्बोधनम् । अतो ज्ञानिना भगवत्प्रसादार्थं अर्चनादि कार्यमिति भावः ।। ८३ ।।

**उपेन्द्र**—ननु ज्ञानार्थं कर्म कर्तव्यं, न ज्ञानिनस्तदपेक्षा इत्यत आह— **वेदवेदाङ्गविदुषामिति** ।। वेदाश्चत्वारः। वेदाङ्गानि शिक्षादीनि । तैः भगवन्तं विदुषाम् । भावितात्मनां भावितः ध्यातः आत्मा येषां मुनीनाम् । ऋषित्वं त्रिकालदर्शित्वरूपमपि फलं तत्प्रसादजं अर्चनादिसाधनप्राप्तप्रसादजम् । धर्मज्ञ इति ऋषेस्सम्बोधनम् । अनेन ज्ञानिना भगवत्प्रसादार्थं अर्चनादि कार्यमिति भावः ।। ८४ ।।

**कोनेरी**—अधमाधिकारिप्राप्यफलमेव भगवदायत्तं न । किन्तु ब्रह्मेन्द्राद्युत्तमदेवताप्राप्यपदं ऋष्यादिभिः मध्यमाधिकारिभिः प्राप्यं पदमपि हरिप्रसादलभ्यमित्याह— **वेदवेदाङ्गविदुषामिति** ।। वेदवेदाङ्गविदुषां भावितात्मनां देवानां देवत्वम्।

---

* अयं श्लोकः विष्णुधर्मोत्तरे १-५७-२३ । १. 'धर्मज्ञैः' इति कोनेरी पाठः ।

तथा वेदवेदाङ्गविदुषां भावितात्मनामृषीणामृषित्वमपि तत्प्रसादजं तस्य विष्णोः प्रसादलभ्यमिति धर्मज्ञैर्वेदान्ततत्त्वज्ञैर्निर्णीतमिति विज्ञेयम् । वेदार्थतत्त्वज्ञैर्विज्ञेयमित्यनेन वेदार्थज्ञानविधुरैरज्ञेयमित्युक्तं भवति । धर्मज्ञैरित्यत्र धर्मशब्दस्य वेदार्थपरत्वमित्युक्तम् । तत्कथमिति चेत् । "वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः" इत्युक्तेरुक्तं युक्तम् । श्लोके ऋषित्वमित्येवोक्तत्वात् कथमनुक्तं देवत्वप्राप्तिकथनमिति चेन्न । ऋषित्वमपीत्यपिपदेन देवत्वस्यापि गृहीतत्वात्तत्कथनमुपपन्नमिति ।। ८४।।

**स्मृ.कृष्णाचार्य**—भगवति प्रसन्नेन्द्रियवतामेव भगवत्प्रसादेन ऋषित्वं ज्ञानित्वमिति सर्वैः प्रसन्नेन्द्रियैः पुरुषैर्मोक्षार्थं भगवत्प्रसादेन भाव्यमित्याह— **वेदवेदाङ्गेति** ।। वेदवेदाङ्गविदुषां तज्ज्ञानतां मुनीनां मननशीलानां भावितात्मनां भगवति मनोयुक्तानां ऋषित्वमपि आर्षमपि स्वाधीनभगवन्निष्ठमानसादीन्द्रियप्रसादेन परम्परया जातेन भगवत्प्रसादेन जातं भवति । तस्मात्तन्मुक्त्यर्थं प्रसन्नेन्द्रियेण साध्यभगवत्प्रसादेन भाव्यमिति भावः । यद्वा भक्तैर्मुक्त्यर्थं उक्तसाधनैर्भगवत्प्रसादः सम्पाद्यः । तदभावे साधनवैय्यर्थ्यप्राप्तेरित्यभिप्रायेणाह— **वेदवेदाङ्गविदुषामिति** ।। ऋषित्वमपरोक्षज्ञानित्वं तत्प्रसादेन तस्य वेदादिप्रतिपाद्यविष्णोः प्रसादजं भगवत्प्रसादजातमिति मुक्त्यर्थं भक्तैर्भगवत्प्रसादः सम्पाद्य इति भावः ।। ८४ ।।

**कृष्णामृतमहार्णवः**

**[2]विचित्ररत्नपर्यंके महाभोगे च भोगिनः ।**
**रमन्ते [1]नाकिरामाभिः केशवस्मरणात्फलम् ।। ८५ ।।**

**ताम्रपर्णी**—हरिस्मरणस्याश्वमेधाद्यपेक्षयोत्तमत्वादवश्यानुष्ठेयत्वमिति ज्ञापनाय अश्वमेधादिसाध्यस्वर्गादेः एतत्साध्यत्वमेतत्फलस्याश्वमेधाद्यसाध्यत्वं च श्लोकद्वयेनाह— **विचित्रेति**।। महान् भोगः आनन्दः यस्मिन् तस्मिन् महाभोगसाधने । विचित्ररत्नपर्यंके । भोगिनः कामोपभोगिनः । स्वर्गिणः देवादयः । नाकिरामाभिः ऊर्वश्यादिभिः । यद्वा मानुषादयः नाकिरामाभिरागन्तुकसाधनेन

---

१. 'नाकरामाभिः' इति उम., उपे., स्मृ.कृ. पाठः ।

२१. रत्नपर्यंकशायिनो महाभोगाश्च भोगिनः ।
वोज्यन्ते सह रामाभिः केशवस्मरणादपि ।। विष्णुधर्मोत्तरे १-५७-२५ ।।

स्वर्गताभिः स्वयोग्यरामाभिः रमन्त इति यत् तत् केशवस्मरणाज्जायमानं फलमिति योज्यम् ।। ८५ ।।

**उमर्जी**—स्मरणविशेषपूर्वकभजनस्य फलाधिक्यमाह— **विचित्रेति** ।। विचित्र-रत्नात्मकपर्यंके भोगिनः शेषस्य महाभोगे अत्युन्नतशरीरे । अधिकरणसप्तमी । विद्यमानत्वेन इति शेषः। केशवस्मरणात् चशब्दाद्भजनाच्च । नाकरामाभिः न विद्यते अकं दुःखं यस्मिन् तत्रत्यरामाभिः रमन्ते इति एतत्फलं भवतीति शेषः । यद्वा महाभोगवति विचित्ररत्नपर्यंके भोगिनः सन्तः नाकरामाभिः रमन्त इत्येतत्फलं केशवस्मरणाद्भवति ।। ८४ ।।

**उपेन्द्र**—स्मरणपूर्वकभजनस्य फलाधिक्यं भवतीत्याह— **विचित्ररत्नपर्यंके इति**।। भोगिनः शेषस्य महाभोगे अत्युन्नतशरीरे विद्यमानत्वेन केशवस्मरणात् । चशब्द अमुक्तसमुच्चये । न विद्यते अकं दुःखं यस्मिन्नाकम् । नाके विद्यमान-रामाभिः स्त्रीभिः रमन्ते । इत्येतत्फलं भवतीत्यर्थः ।। ८५ ।।

**कोनेरी—देवत्वं ऋषित्वं प्राप्य कथं वर्तत इति तत्राह— विचित्ररत्नपर्यंक इति** ।। ते देवादयः अमुक्तावस्थायां केशवस्मरणप्राप्तं फलं फलरूपं स्वर्गादिकं प्राप्य महाभोगोपभोगिनः सन्तः । विचित्ररत्नैः निर्मिते पर्यंके मञ्चे नाकिरामाभिः नाकः स्वर्गः "स्वरव्ययं स्वर्गनाक" इत्यमरः । सोऽस्यास्तीति नाकी । तत्सम्ब-न्धिन्यो रामाः नाकिरामाः ताभिः सह रमन्ते । अमुक्त्यवस्थायां केशवस्मरणप्राप्तं फलं स्वरूपानन्दफलं प्राप्य नाकिरामाभिः, कं सुखं, "कं ब्रह्म खं ब्रह्म" इति श्रुतेः । कं न भवतीति अकं दुःखम् । अपरोक्षज्ञानिनां देवादीनामपि अमुक्तावस्थायां प्रारब्ध-रूपदुःखानुभवस्य सत्वात् । "सुखस्यानन्तरंदुःखं दुःखस्यानन्तरं सुखम्" इति सर्वत्र नियम इत्युक्तेः सुखमिश्रं दुःखमकमित्युच्यते । अकं न भवतीति नाकं दुःखा-सम्मिश्रं स्वरूपसुखं पिबन्ति । ये नराः नाकं "मुक्ताः संसारसागरात्" इत्युक्तेः । नाकं स्वरूपसुखं तदेषामस्तीति नाकिनो मुक्ताः तत्सम्बन्धिन्यो रामाः नाकि-रामाः ताभिः सह महाभोगोपभोगिनः सन्तः विचित्ररत्नपर्यंके रमन्ते । "स्त्रीभिर्वा ज्ञातिभिर्वा अज्ञातिभिर्वा" इति श्रुतेः । मुक्तामुक्तयोः केशवस्मरणजन्यं फलं ज्ञेयम् ।। ८५ ।।

**स्मृ.कृष्णाचार्य**—सिंहावलोकनन्यायेन भगवत्स्मरणस्य फलविशेषं प्रमाणेनाह- — **विचित्रेति** ।। केशवस्मरणाद्भक्ता विचित्ररत्नयुक्तपर्यंके महाभोगयुक्ते भोगिनः भोगयुक्तास्सन्तः नाकरामाभिः नाके दुःखादिरहितवैकुण्ठे स्थितरामाभिः सह वैकुण्ठे रमन्त इत्येतत्केशवस्मरणस्य फलमिति तत्स्मरणं तदर्थं सदा कार्यमिति ।। ८५ ।।

कृष्णामृतमहार्णवः

***अश्वमेधसहस्राणां [1]सहस्रं यस्समाचरेत् ।**
**नासौ तत्फलमाप्नोति [2]तद्भक्तैर्यदवाप्यते ।। ८६ ।।**

**ताम्रपर्णी**—योऽश्वमेधसहस्राणां सहस्रं समाचरेत् । असौ केशवस्मरणात्तद्भक्तैर्यत्फलमवाप्यते तत्फलं नाप्नोतीति योजना ।। ८६ ।।

**उमर्जी**—अर्चनादिना भक्तस्यैव फलं नाभक्तस्येत्याह— **अश्वमेधेति** ।। तद्भक्तैर्भगवद्भक्तैरर्चनादिना यत्फलं अवाप्यते । योऽभक्तः अश्वमेधसहस्राणां सहस्रं समाचरेद्यदि असौ तत्फलं नाप्नोतीत्यन्वयः । भगवदविषयकत्वादल्पफलमिति भावः ।। ८६ ।।

**उपेन्द्र**—भक्तस्यैवेदं फलं नाभक्तस्येत्याह— **अश्वमेधसहस्राणामिति** ।। यः भक्तः अश्वमेधसहस्राणां सहस्रं समाचरेदसौ यज्ञकर्ता भगवद्भक्तैर्यत्फलमवाप्यते तत्फलं नाप्नोति । भगवदविषयकत्वेऽपि वेदविहितत्वादल्पफलमिति भावः ।। ८६ ।।

**कोनेरी**—हरौ भक्तिज्ञानपूर्वकं कृतं कर्म सफलं अन्यदफलमित्याह— **अश्वमेधसहस्राणामिति** ।। तस्य हरेः भक्तैर्भक्तिज्ञानपूर्वकं भगवदर्पणबुद्ध्या कर्म कृत्वा यादृशं फलं अवाप्यते । तत्फलं यः भगवति भक्तिरहितः अश्वमेधसहस्राणां सहस्रं लक्षमिति यावत् । समाचरंदपि नाप्नोति । "यदि हवा अप्यनेवंविन्महत्पुण्यं

*अयं श्लोकः विष्णुस्मृतौ ९२ ।
१. 'यस्सहस्रं' इति कुत्रचित्पाठः ।
२. 'केशवस्मरणात्फलम्' इति स्मृ.कृ. पाठः ।

कर्म करोति तद्धान्ततस्तत्क्षीयते" इति श्रुतेः । ज्ञानिनस्तु "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति श्रुतिः । "न हास्य कर्म क्षीयते" इति च ।

अल्पमात्रमकृतो धर्मो भवेज्ज्ञानवतो महान् ।
महानपि कृतो धर्मो ह्यज्ञानां निष्फलो भवेत् ।।
—इति स्मृतिश्लोक्तार्थे मानम् ।। ८६ ।।

**स्मृ.कृष्णाचार्य**—भगवत्स्मरणस्य बहुफलहेतुत्वात्तत्कार्यमिति पुनरप्याह— **अश्वमेधेति** ।। यः अधिकारी अश्वमेधसहस्राणां सहस्रं अश्वमेधाख्ययागसहस्रं दशलक्षयागं समाचरेत् सम्यक्कुर्यात् । असौ एतादृशः अधिकार्यपि तत्फलं प्राप्नोति । किन्तत्फलमित्यत उक्तम्— **केशवस्मरणादिति** ।। तत्स्मरणेन परं उत्तमं फलं यदस्ति तत्फलं अश्वमेधादिकृन्नाप्नोति । तस्मात्तदपेक्षयाऽधिकफलत्वात्तत्स्मरणं सदा कार्यमिति । तद्भक्तैर्यदवाप्यत इति पाठे भक्त्याधिक्यज्ञापनार्थमिदं वचनमिति ज्ञातव्यम् ।। ८६ ।।

**कृष्णामृतमहार्णवः**

**रे रे मनुष्याः पुरुषोत्तमस्य**
**करौ न कस्मान्मुकुलीकुरुध्वम् ।**
**क्रियाजुषां को भवतां प्रयासः**
**फलं हि यत्तत्पदमच्युतस्य ।। ८७ ।।**

**ताम्रपर्णी**—अथार्चनाङ्गप्रदक्षिणनमस्कारयोः कर्तव्यत्वं फलबाहुल्यायोपपादयति — **रे रे इत्यादिभिरष्टभिः श्लोकैः** ।। रे रे इति नीचसम्बोधनम् । क्रियाजुषां कुड्यारम्भादिक्रियाजुषाम् । यदच्युतस्य पदं तद्धि तस्य करमुकुलीकरणस्य फलमिति योज्यम् ।। ८७ ।।

**उमर्जी**— अर्चनादिवद्वन्दनस्यावश्यकत्वात्तदकरणे निन्दावाक्यं पठति ।। **रे रे इति** ।। सम्बोधनम् । मनुष्याः पुरुषार्थसाधनमानुषदेहं प्राप्ता इत्यर्थः । पुरुषोत्तमस्येति कर्मणि षष्ठी । पुरुषोत्तमं प्रति करौ कस्मान्न मुकुलीकुरुध्वम् ।

असाध्यत्वात् फलाभावाद्वा इति विकल्प्य निराकरोति— **क्रियाजुषामिति** ।। लौकिकक्रियाकर्तृणां करमुकुलीकरणे कः प्रयासः । द्वितीयस्योत्तरं— **फलमिति** ।। यत् यस्य नमनस्य तत्पदं फलं हि ।। ८७ ।।

**उपेन्द्र**—फलसाधनत्वादर्चनादिवद्वन्दनादीन्यवश्यानुष्ठेयानीत्याह— **रे रे इति**।। सम्बोधनम् । पुरुषोत्तमस्येति कर्मणि षष्ठी । कस्मान्मुकलीकुरुथ मुकुलीकुरुध्वम्। असाध्यत्वात्फलाभावाद्वेति विकल्प्य निराकरोति— **क्रियाजुषामिति** ।। लौकिकक्रियाकर्तृणां करमुकुलीकरणे कः प्रयासः । द्वितीयस्योत्तरम् ।। **फलमिति** ।। यद्यस्य नमनस्य तत्प्रसिद्धं स्थानं पदम् । हिशब्देन कृष्णप्रणामो न पुनर्भवायेति प्रमाणं सूचयति ।। ८७ ।।

**कोनेरी**—अर्चनस्मरणफलमुक्त्वा नमनप्रदक्षिणफलमाह— **रे रे मनुष्या इति** ।। रे रे मनुष्याः पुरुषोत्तमस्य अग्रतः कस्मात्करौ न मुकुलीक्रियते । यत् यस्मात् अच्युतस्य यत्पदं वैकुण्ठाख्यं स्थानं तदेव मुकुलीकरणस्य फलम् । हि प्रसिद्धम् । तस्माद्भक्त्या करौ मुकुलीकुरुध्वम् । क्रियाजुषां कर्म कुर्वतां भवतां को प्रयासः न कोऽपीति । नमनाद्यकुर्वतामयोग्यत्वद्योतनाय रे रे इति नीरससम्बोधनम् ।। ८७ ।।

**स्मृ.कृष्णाचार्य**—एवं मोक्षार्थं भगवदर्चनस्मरणध्यानकीर्तनादिकं कर्तव्यमित्यत्र बहुप्रमाणान्युक्त्वा तदर्थं भगवत्प्रीतिकरं वन्दनादिकं साधनजातं कर्तव्यमित्यभिप्रेत्य तत्र तावद्भगवन्नमस्कारप्रदक्षिणादिकं कार्यमित्यत्र प्रमाणान्याह— **रे रे मनुष्या इति** ।। रे रे मनुष्याः हे यज्ञादिकर्तारः यूयं पुरुषोत्तमस्य सर्वोत्तमस्य विषये करौ कस्मात्कारणान्न मुकुलीकुरुध्वम् । मुकुलीकरणं हस्तयोः सम्पुटीकरणम् । नमस्कारं न करिष्यथ । आयाससाध्यत्वात्तन्न कुर्म इत्यत आह— **क्रियाजुषामिति** ।। अश्वमेधादिसमस्तायासकर्मकर्तृणां भवतां याज्ञिकानां भगवन्नमस्काररूपकरमुकुलीकरणे कः प्रयासः । तदपेक्षया अनायाससाध्यत्वेऽपि विशेषफलाभावात् तन्न क्रियत इति चेत्तत्राह— **फलं हीति** ।। अच्युतस्य पदं यत्स्थानं वैकुण्ठादि । तत् तेन नमस्कारेण साध्यं फलमस्ति । तस्माद्भगवन्नामकीर्तनादिकं कार्यमिति कस्यचिदृषेः स्वकीयान्प्रति उक्तं वचनमिति ज्ञातव्यम् ।। ८७ ।।

***[22]विष्णोर्विमानं यः कुर्यात्सकृद्भक्त्या प्रदक्षिणम् ।**
**अश्वमेधसहस्रस्य फलमाप्नोति मानवः ॥ ८८ ॥**

**ताम्रपर्णी**—विष्णोर्विमानं यः स्वस्य गमनेन प्रकर्षेण दक्षिणदेशस्थं कुर्यादित्यर्थः । यद्वा विमानं विमानस्य प्रदक्षिणं कुर्यादित्यर्थः ।
प्रदक्षिणलक्षणं चोक्तं वाराहे—

पदान्तरे पदं न्यस्तं करौ सम्पुटवत्कृतौ ।
स्तुतिर्वाचि हृदि ध्यानं प्रदक्षिणमितीरितम् ॥ इति ॥ ८८ ॥

**उमर्जी**—नमनस्य फलाधिक्यं प्रदिपादयन् अङ्गभूतप्रदक्षिणमाह— **विष्णोरिति** ॥ विमानम् । उद्दिश्य इति शेषः ।

पादौ पादान्तरे कृत्वा करौ चलनवर्जितौ ।
हृदि ध्यानं मुखे स्तोत्रं चतुरङ्गं प्रदक्षिणम् ॥
आसन्नप्रसवा नारी जलपूर्णं यथा घटम् ।
उद्धृत्य शनकैर्याति विष्णोः कुर्यात्प्रदक्षिणम् ॥
—इति लक्षणं ज्ञेयम् ॥ ८८ ॥

**उपेन्द्र**—विमानमुद्दिश्येति शेषः ।

पादौ पादान्तरे कृत्वा करौ चलनवर्जितौ ।
हृदि ध्यानं मुखे स्तोत्रं चतुरङ्गं प्रदक्षिणम् ॥
आसन्नप्रसवा नारी जलपूर्णं यथा घटम् ।
उद्धृत्य शनकैर्याति विष्णोः कुर्यात्प्रदक्षिणम् ॥
—इति प्रदक्षिणलक्षणं ज्ञेयम् ॥ ८८ ॥

**कोनेरी**—॥ **विष्णोर्विमानमिति** ॥ यः उत्तमाधिकारी विष्णोर्विमानं प्राप्य भक्त्या सकृत्प्रदक्षिणं कुर्यात्स मानवः हरिः सर्वोत्तम इति श्रुतिस्मृत्युक्तं मानं

---

*अयं श्लोकः लौगाक्षिस्मृतौ ।

२२. विष्णुं प्रदक्षिणं कुर्वन् यत्तत्रावर्तते पुनः ।
तदेवावर्तनं तस्य पुनर्नावर्तते भवे ॥ वीरमित्रोदयोदाहृतनारदीयवचनम्

प्रमाणं वाति जानातीति मानवः । वा गतिगन्धनयोरिति धातोर्गत्यर्थानां ज्ञानार्थत्वात् मानवः ज्ञानी उत्तमाधिकारी अल्पाधिकारिकृताश्वमेधसहस्रस्य यत्फलं तत्फलं तत्तुल्यमाप्नोति ।। ८८ ।।

**स्मृ.कृष्णाचार्य**—विष्णोः प्रीतिकरसाधनेषु मध्ये प्रदक्षिणरूपसाधनं मुमुक्षुणा कर्तव्यमित्यत्र प्रमाणान्याह— **विष्णोरिति** ।। विष्णोः विमानं प्रति गत्वा तत्रस्थविष्णोः प्रदक्षिणं योऽधिकारी कुर्यात् । भक्त्या सकृदपि । सः मानवः अश्वमेधसहस्राणां करणे यत्फलं तत्फलं प्राप्नोति । तस्माद्भक्तैस्तत्प्रदक्षिणं कार्यमिति । यद्वा विष्णुविमानमात्रं वा भक्त्या यः प्रदक्षिणं सकृद्वा कुर्यात् । स तत्फलमाप्नोति ।। ८८ ।।

कृष्णामृतमहार्णवः

**प्रदक्षिणं तु यः कुर्याद्धरिं भक्त्या समन्वितः ।**
**हंसयुक्तविमानेन विष्णुलोकं स गच्छति ।। ८९ ।।**

**ताम्रपर्णी**—किं तदश्वमेधसहस्रस्य फलमित्यतः प्रमाणान्तरं पठति— **प्रदक्षिणमिति** ।। ८९ ।।

**उमर्जी**—साक्षाद्भगवद्विषयकस्य फलाधिक्यमाह— **प्रदक्षिणमिति** ।। शालग्रामाद्यधिष्ठितहरिमुद्दिश्येत्यर्थः । तुशब्दादितरवैलक्षण्यं द्योतयति ।। ८९ ।।

**उपेन्द्र**—प्रदक्षिणचतुरङ्गत्वं ज्ञापयन्मुख्यफलमाह— **प्रदक्षिणमिति** ।। ८९ ।।

**कोनेरी**— ।। **प्रदक्षिणमिति** ।। हरिभक्तियुतो यो ज्ञानी प्रदक्षिणं कुर्यात्सः हंसयुक्तविमानेन हंसैः परमहंसैः युक्तमारूढं च तत् विमानं च तेन सह विष्णुलोकं याति ।। ८९ ।।

**स्मृ.कृष्णाचार्य**—तत्रैव प्रमाणान्तरमाह— **प्रदक्षिणं हीति** ।। सालग्रामप्रतिमास्थितहरेः प्रदक्षिणम् । तु विशेषेण । यः भक्त्या समन्वितः कुर्यात् । सः तदधिकारी विष्णुलोकं वैकुण्ठं हंसयुक्तविमानेन गच्छति ।। ८९ ।।

कृष्णामृतमहार्णवः

**तीर्थकोटिसहस्राणि व्रतकोटिशतानि च ।**
**नारायणप्रणामस्य कलां नार्हन्ति षोडशीम् ॥ ९० ॥**

**उमर्जी**—कृतनमनस्य प्रदक्षिणापेक्षया फलाधिक्यमाह— **तीर्थेति** ॥ तीर्थानां तिस्रः कोट्यः अनेकसहस्राणि च । षोडशीं कलां षोडशकलानां मध्ये एकामपि कलां सदृशत्वेन नार्हन्ति ॥ ९० ॥

**उपेन्द्र**—तुशब्दाच्चतुरङ्गलक्षणनमनस्य क्रियान्तरसाम्यभ्रान्तिं वारयति— **तीर्थकोटिसहस्राणीति** ।तीर्थानां सार्धकोटित्वात्कोटीनां सहस्राणीत्युक्तम्। षोडशीं षोडशेष्वेकांशम् ॥ ९० ॥

**कोनेरी**—**तीर्थकोटीति** ॥ यान्यज्ञैः कृतानि तीर्थकोटिसहस्राणि व्रतकोटिशतानि सर्वाण्यपि उत्तमाधिकारिकृतनारायणप्रमाणस्य षोडशीं कलां नार्हन्तीत्यन्वयः। सर्वैः क्रियमाणप्रणामफलस्य साम्याङ्गीकारे तारतम्यविरोधापत्तेरित्यर्थः ॥ ९० ॥

**स्मृ.कृष्णाचार्य**—सर्वतीर्थाद्यपेक्षया नमस्कारस्याधिकफलत्वात्तत्कर्तव्यमित्यत्र प्रमाणान्याह श्रीरुद्रः— **तीर्थकोटीति** ॥ तीर्थानां कोटिसहस्राणि । व्रतानां कृच्छ्रचान्द्रायणादीनां कोटिशतानि, पुरुषेण कृतानि सर्वाणि नारायणप्रणामस्य भक्त्याद्यतिशयकृतस्य नमस्कारस्य कलां षोडशकलामध्ये एकामपि कलां नार्हन्ति। कलासमभागमपि न प्राप्नुवन्ति । तस्मात्प्रणामः मुमुक्षुणा कार्य इति ॥ ९० ॥

कृष्णामृतमहार्णवः

*** [२३]उरसा शिरसा दृष्ट्या मनसा वचसा तथा ।**
**पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः ॥ ९१ ॥**

---

* अयं श्लोकः स्कान्दे २-५-१०-३० ।

२३. पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा तथा ।
मनसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः ॥ स्कन्दपुराणे २-५-१०-३०
प्रणामं दण्डवत्कुर्यात्तियंक्तद्दक्षिणे भुवि ।
अष्टाङ्गं वापि पञ्चाङ्गं प्रणामं पुरुषश्चरेत ॥

**ताम्रपर्णी**—प्रस्तुतप्रणामलक्षणमाह— **उरसेति** ।। प्रणामो हि प्रह्वीभावःस्तुतिश्च। 'णमु प्रह्वत्वे शब्द' इति धातोः । प्रह्वीभावश्च द्वेधा मानसिकः कायिकश्चेति । तत्र मनसेति मनोवृत्तेः तत्प्रावण्यमुक्तम् । वचसेति स्तुतिः । शिष्टः कायिकः प्रह्वीभावो ज्ञेयः ।। ९१ ।।

**उमर्जी**—चतुरङ्गप्रदक्षिणान्नमनस्याङ्गाधिक्यमाह— **उरसेति** ।। तथाशब्दः समुच्चये क्रियमाण इति शेषः । प्रणामः अष्टाङ्गः अष्टाङ्गोपेतः इति ईरितः।।९१।।

**उपेन्द्र**—चतुरङ्गयुक्तप्रदक्षिणापेक्षया नमनस्याधिक्यज्ञापनायाष्टाङ्गयुक्तत्वमाह—- **उरसेति** ।। भगवद्विषयकनमनस्य । तथाशब्दः परस्परसमुच्चये । अवयवैः क्रियमाणः प्रणामः अष्टाङ्गोपेत ईरित इत्यर्थः ।। ९१ ।।

**कोनेरी**—प्रणामलक्षणमाह— **उरसेति** ।। अष्टौ अङ्गानि यस्मिन् सोऽष्टाङ्गः स एव प्रणाम ईरितः अष्टाङ्गान्याह— **उरसेति** ।। एतैरेव सह क्रियमाणः प्रणाम इति ।। ९१ ।।

**स्मृ.कृष्णाचार्य**—साष्टाङ्गनमस्कारः कर्तव्य इति प्रमाणमाह— **उरसेति** ।। तत्कर्तुः उरसा वक्षसा भूस्पर्शनेन । तथा शिरसा । दृष्ट्या प्रतिमावलोकनेन । मनसा तद्ध्यानेन । वचसा स्तोत्रेण । पद्भ्यां पदद्वयेन भूमिं स्पृष्ट्वा । तथा कराभ्यां जानुभ्यां भूस्पृष्टाभ्यां क्रियमाणो यः प्रणामः स अष्टाङ्गप्रणाम ईरितः । शास्त्रेषु । तादृशप्रणामस्य कलां नार्हन्ति षोडशीमिति पूर्वेणान्वयः । एतादृशप्रणामो भक्तैः कार्य इति ।। ९१ ।।

---

पञ्चाङ्गमेव नारी तु नान्यथा मुनिसत्तम ।
पद्भ्यां कराभ्यां जानुभ्यां उरसा शिरसा दृशा ।
वचसा मनसा चेति प्रणामोऽष्टाङ्ग ईरितः ।।
बाहुभ्यां चैव मनसा शिरसा वचसा दृशा ।
पञ्चाङ्गोऽयं प्रणामः स्यात्पूजासु प्रवराविमौ ।। स्कन्दपुराणे २ ।।

२३.पादौ शिरस्तथा हस्तौ निकुञ्च्य मुकुलाकृतिः ।
मनो बुद्ध्यभिमानैश्च प्रणामोऽष्टाङ्गसंज्ञितः ।। शाण्डिल्यस्मृतौ २-७४ ।।
प्रदक्षिणे प्रणामे च पूजायां हसने तथा ।
न कण्ठगतवस्त्रः स्यात् दर्शने गुरुदेवयोः ।। शाण्डिल्यस्मृतौ २-८१ ।।

**कृष्णामृतमहार्णवः**

**शाठ्येनापि नमस्कारं कुर्वतः शार्ङ्गपाणये ।**
**शतजन्मार्जितं पापं नश्यत्येव न संशयः ।। ९२ ।।**

**ताम्रपर्णी**—शाठ्यं मध्यस्थत्वम् । 'शाठ्यं गूढद्वेष' इत्यन्यत्रोक्तस्यात्र गृहीतुमशक्यत्वात् ।। ९२ ।।

**उमर्जी**—उक्तलक्षणाभावेऽपि भगवद्विषयकनमनस्य फलमाह— **शाठ्येनेति**।। "निकृतिस्त्वनुजुः शठः" इत्यभिधानात् । शठस्य भावः शाठ्यं तेन ऋजुभावमन्तरेणेत्यर्थः । भगवद्विषयकत्वात्सफलमिति भावः ।। ९२ ।।

**उपेन्द्र**—उक्तलक्षणाभावेऽपि भगवद्विषयकत्वेन नमनस्य फलसाधनत्वमाह- - **शाठ्येनेति** ।। "निकृतिस्त्वनृजुः शठः" इत्यभिधानात् शठोऽनृजुस्तस्य भावः शाठ्यमृजुभावमन्तरेणेत्यर्थः । भगवद्विषयकत्वात्सफलमिति भावः।।९२।।

**कोनेरी**— ।। **शाठ्येनापीति** ।। सत्सङ्गत्यभावदशायां ज्ञानाभावेन शाठ्येनापि नमस्कारं कुर्वतो अनन्तरं सत्सङ्गोत्पन्नज्ञानोपेतभक्त्या शार्ङ्गपाणये नमस्कारं कुर्वतोऽधिकारिणः शतजन्मार्जितं पापं नश्यति । संशयो नैव । अपिशब्दो आनन्तर्यार्थकः ।। ९२ ।।

**स्मृ.कृष्णाचार्य**—शाठ्येनाप्येतादृशनमस्कारकर्तुः फलमाह— **शाठ्येनापीति** ।। शार्ङ्गपाणये शार्ङ्गं धनुः पाणौ यस्य तस्मै हरये । नमस्कारः शाठ्येनापि अहंकारादिनाऽपि कुर्वतः अधिकारिणः । शतजन्मार्जितं शतेषु जन्मसु अर्जितं ज्ञानतः अज्ञानतश्च मनोवाक्कायकृतं पापं नश्यति विनाशं प्राप्नोत्येव । किमु भक्त्याद्यतिशयेन कुर्वतः । न संशयः नात्र संशयः कार्य इति । तस्मात् नमस्कारो भक्तैः कार्य इति ।। ९२ ।।

**कृष्णामृतमहार्णवः**

**संसारार्णवमग्नानां नराणां पापकर्मणाम् ।**
**नान्योद्धर्ता जगन्नाथं मुक्त्वा नारायणं परम् ।। ९३ ।।**

**ताम्रपर्णी**—यदि नमस्कारस्यैवं प्रभावः तर्ह्यन्यनमस्कारेऽपि पापहानिः स्यात् किन्नेत्याह— **संसारेति** ।। पापकर्मणां सकाशात् । पापानि कर्माणि येषां नराणामिति वा । अन्यश्चासावुद्धर्ता चान्योद्धर्ता ।। ९३ ।।

**उमर्जी**—उक्तवक्ष्यमाणसाधनैर्भगवानेव फलदः नान्यः इत्यनुमानेनापि साधयति- — **संसारेति** ।। ईश्वरं पक्षीकृत्य जगन्नाथत्वहेतुना संसारादुद्धारकत्वं साध्यते। व्यतिरेकव्याप्तिप्रदर्शनाय नान्य इत्युक्तम् । परं सर्वोत्तमं नारायणं मुक्त्वा पूजादिकमकृत्वा परित्यागेनान्यो रुद्रादिः उद्धर्ता इत्यन्वयः । अन्योद्धर्तेत्येकं वा पदम् ।। ९३ ।।

**उपेन्द्र**—उक्तवक्ष्यमाणसाधनानि भगवद्विषकाण्येव फलसाधनानीत्यत्र मुक्तिप्रतिपादकं प्रमाणमाह— **संसारार्णवमग्नानामिति** ।। नारायणं पक्षीकृत्य जगन्नाथत्वहेतुना संसारार्णवादुद्धर्तृत्वं साध्यते । जगन्नाथत्वाभावे उद्धर्तृत्वाभाव इति व्यतिरेकव्याप्तिरिति प्रदर्शनाय नान्य इत्युक्तम् । परं सर्वोत्तमं नारायणं मुक्त्वा पूजादिकमकृत्वा परित्यागेनान्यो रुद्रादिः उद्धर्ता नेत्यर्थः । नान्यः उद्धर्ता इति विभागः तारकोभाभ्यार्मितवदुपपद्यते ।। ९३ ।।

**कोनेरी**—अन्यदेवेषु सत्सु तेषामर्चनवन्दनादिना मुक्तिर्भविष्यति । किं विष्णुपूजावन्दनेनेत्यत आह— **संसारार्णवमग्नानामिति** ।। जगन्नाथं ब्रह्मादिजगतां नाथं स्वामिनं परं सर्वोत्तमं नारायणं मुक्त्वा । पापकर्मणां संसारार्णवमग्नानां नराणां मुक्तियोग्यचेतनानां संसारदुःखादुद्धर्ता अन्यो नास्तीति एवं ज्ञात्वा प्रणामादिकं कुर्यादिति ।। ९३ ।।

**स्मृ.कृष्णाचार्य**—ननु एतावता ग्रन्थेन मोक्षार्थिना पुरुषेण नारायणस्यैव अर्चनस्मरणध्यानकीर्तनप्रदक्षिणादिकं कार्यमित्युक्तम् । तत्कुतः । अन्यस्यापि कीर्तनस्मरणादिना पापनिवर्तकत्वेनोद्धर्तुस्सम्भवादित्यतो नारायण एव संसारादिदुःखेभ्यः उद्धारकर्ता नान्य इत्यत्र प्रमाणं पूर्वश्लोकेनाह— **संसारार्णवेति** ।। संसारार्णवे मग्नानां जननमरणादिदुःखरूपसंसाराख्यार्णवे अपारे समुद्रे मग्नानां पतितानां मोक्षयोग्यानां जनानां पापकर्मणां नानाविधभगवद्विस्मरणादिपाप-

कर्मकृतामपि जगन्नाथं रमाब्रह्मादिजगतां नाथं स्वामिभूतं नारायणं परं सर्वोत्तमं मुक्त्वा विना अन्यः स्वातन्त्र्येण रमाब्रह्मादिषु उद्धर्ता उद्धारकर्ता नास्ति यतः तस्मात्स एव सर्वैस्स्मर्तव्यः ध्यातव्यो नमस्कर्तव्य इत्युक्तं युक्तमिति ।। ९३ ।।

**कृष्णामृतमहार्णवः**

**रेणुकुण्ठितगात्रस्य कणा यावन्ति भारत ।**
**तावद्वर्षसहस्राणि विष्णुलोके महीयते ।। ९४ ।।**

**ताम्रपर्णी**—साष्टाङ्गनमस्कारस्य इत्थम्भावान्तरं सूचयन्फलमाह— **रेण्विति** ।। भगवत्प्रतिमादर्शनहरिस्तवनगुणानुस्मरणपूर्वं उरःशिरकरचरणजानुलक्षणाङ्गपञ्चकस्य दृढतरं भूसंश्लेषे भूरेणुभिः कुण्ठितस्य सम्बद्धस्य गात्रस्य सम्बन्धिनो कणाः भूरेणवो यावन्तीत्यर्थः । एतेन रेणुकुण्ठनं यथा स्यात्तथा प्रणामः कार्य इति सूचितम् । ननु विष्णुलोके वैकुण्ठादावनन्तकालं वासोऽस्ति, तत्कथं **रेणुसमसंख्याकवर्षसहस्राणि विष्णुलोके महीयत इत्युच्यते**, रेणूनां मितत्वादिति चेन्न । कणपदेन रेण्ववयवानामपर्यवसितानां विवक्षितत्वात् ।। ९४ ।।

**उमर्जी**—अष्टाङ्गोपेतनमनस्य फलाधिक्यमाह— **रेणुकुण्ठितगात्रस्येति** ।। धूलिसम्बद्धशरीरस्य कणाः रेणवः यावन्ति सहस्राणि । महीयते पूज्यते । अनेना**ष्टाङ्गोपेतनमनं कार्यमित्युक्तं** भवतीति भावः ।। ९४ ।।

**उपेन्द्र**—अष्टाङ्गोपेतप्रणामस्य कर्तव्यत्वे निमित्तमाह— **रेणुकुण्ठितगात्रस्येति** ।। नमनेन रेणुभिः कुण्ठितस्य सम्बद्धस्य गात्रस्य कणा यावन्ति यावत्संख्याकास्तावत्सहस्राणि तावत्सङ्ख्याकवर्षाणां सहस्राणि महीयते पूज्यते ।। ९४ ।।

**कोनेरी**—प्रणामफलमाह— **रेणुकुण्ठितगात्रस्येति** ।। रेणुभिः कुण्ठितानि **सम्बद्धानि** गात्राणि यस्य स तथा तस्य गात्रे कणाः रेणुकाणाः यावन्तः तिष्ठन्ति । हे भारत ! युधिष्ठिर ! अमुक्तदशायां तावद्वर्षसहस्राणि विष्णुलोके विष्णुभक्तजनेषु स्थितः जात्यैकवचनम् । तेस्सह महीयते पूज्यते स्वावरैरिति शेषः । "लोकस्तु भवने जने" इत्यभिधानाल्लोकशब्दः जनवाची । मुक्तव्यवस्थाविवक्षायां तावद्वर्ष-

सहस्राणि हरिमाराध्य लिङ्गशरीरान्मुक्तस्सन् विष्णुलोके वैकुण्ठादिलोके महीयते पूज्यते । स्वावरैरिति शेषः । अन्यथा वर्षसहस्राणीति मुक्तानां नियमानुपपत्तेः । प्रारब्धकर्मणः बहुकल्पभोग्यत्वेन प्रारब्धभोगकालेऽपि हर्याराधनं तैः क्रियत इति तावद्वर्षसहस्राणीत्युक्तमिति ज्ञेयम् ।। रेणूनामानन्त्येऽपि गात्रसम्बद्धरेणूनामानन्त्याभावादिति भावः ।। ९४ ।।

**स्मृ.कृष्णाचार्य**—एवं साष्टाङ्गनमस्कारकर्तुः भूमिस्थितधूलिसम्बन्धमात्रेणापि अनेककाले वैकुण्ठलोके पूज्यत्वश्रवणात्तादृशसाष्टाङ्गप्रणामः सर्वैः कार्य इत्युत्तरश्लोकान्तरेणाह— **रेणुकुण्ठितगात्रस्येति** ।। नमस्कारकाले रेणुकुण्ठितगात्रस्य भूस्थितरेणुभिः अवकुण्ठितमास्पृष्टं गात्रं अङ्गं शरीरं यस्य तस्याधिकारिणः कणाः यावन्तः कणाः भूमिस्थिताः पांसवः तस्य देहे वर्तन्ते । तावद्वर्षसहस्राणि नमस्कारकर्तुर्देहसम्बद्धकणसङ्ख्याकवर्षसहस्राणि रेणुकुण्ठितगात्रः अधिकारी विष्णुलोके वैकुण्ठादौ महीयते स्वावरैः पूज्यते । तस्मात्साष्टाङ्गनमस्कारः रेणुकुण्ठितं यथा भवति तथा कर्तव्य इति भावः ।। ९४ ।।

**कृष्णामृतमहार्णवः**

*** [२४]पावनं विष्णुनैवेद्यं सुभोज्यमृषिभिः स्मृतम् ।**
**[25]अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ।। ९५ ।।**

**ताम्रपर्णी**— अर्चनशेषेणैव नैवेद्यपादोदकनिर्माल्यादिकं दासभावेन स्वीकार्यमित्येतत्फलार्थवादाभ्यामुपपादयति— **पावनमित्यादिभिः मुक्तिदानीत्यन्तैः पञ्चदशभिः श्लोकैः** ।। विष्णुनैवेद्यं पावनत्वात् सुष्ठु भक्तिपूर्वकं भोज्यमिति ऋषिभिः

---

* अस्य श्लोकस्य आकरः आग्नेयपुराणमिति प्रमाणसंग्रहे उदाहृतः ।

२४. वायुलक्ष्मीहरीणाञ्च त्रयाणामर्पिताशनम् ।
ग्राह्यमेव क्रमेण स्याद् ग्राह्यं नान्यार्पितं क्वचित् ।।
परशुक्लत्रयस्य स्याद्देवत्वं नामृतान्धसाम् ।
तन्निवेदितमन्नाद्यं भुञ्जीयान्मुख्यतो बुधः ।। पाद्मे ।।
देवदेवो यतः शुद्धो वायुदेवो जगद्गुरुः ।
हरिप्रियस्ततो ग्राह्यमन्नं वाय्वर्पितं बुधैः ।। नारदीये ।।

स्मृतिभिरुक्तम् । यद्वा सुभोज्यं सम्यग्भोज्यमेव । तत्रासम्यक्चिन्ता न कार्येति भावः । विष्ण्विति विशिष्य ग्रहणे को हेतुरित्यत आह— **अन्येति** ।। चान्द्रायणं चरेदिति च ऋषिभिः स्मृतमित्यपि योज्यम् । चान्द्रायणलक्षणम्—

चन्द्रवृद्ध्या समश्नीयात्कुक्कुटाण्डप्रमाणतः ।
दिने दिने हविर्ग्राह्यं हानौ हानिं प्रकल्पयेत् ।
एवं मासेन पूर्णं स्यादेतच्चान्द्रायणं स्मृतम् ।

—इति वराहपुराणे स्पष्टम् ।। ९५ ।।

---

अन्नं विष्ठा पयो मूत्रं यद्विष्णोरनिवेदितम् ।
द्विजानां कुलजातानामित्याह कमलोद्भवः ।। ब्रह्मवैवर्ते ११-३५ ।।
विष्णोर्निवेदितं पुष्पं नैवेद्यं वा फलं जलम् ।
प्राप्तिमात्रेण भोक्तव्यं त्यागेन ब्रह्महा जनः ।। २८ ।।
भ्रष्टश्रीर्भ्रष्टबुद्धिश्च भ्रष्टज्ञानो भवेन्नरः ।
यस्त्यजेद्विष्णुनैवेद्यं भाग्येनोपस्थितं शुभम् ।। २९ ।।
प्राप्तिमात्रेण यो भुङ्क्ते भक्त्या विष्णुनिवेदितम् ।
पुंसां शतं समुद्धृत्य जीवन्मुक्तः स्वयं भवेत् ।। ३० ।।
विष्णुनैवेद्यभोजी यो नित्यं तु प्रणमेद्धरिम् ।
पूजयेत्स्तौति वा भक्त्या स विष्णुसदृशो भवेत् ।। ३१ ।। ब्रह्मवैवर्ते १-३६ ।।
यो मूढो विष्णुनैवेद्ये चान्यनैवेद्यके तथा ।
करोति समतां यो हि ब्रह्महत्यां लभेतु सः ।। ब्रह्मवैवर्ते १-३०-१५३ ।।
ये भुञ्जन्त्यन्यदेवानामन्नं पत्रजलादिकम् ।
ब्रह्मेशानादिमुख्यानां गतिं गच्छन्ति नारकीम् ।। ब्रह्माण्डे अ.१६ ।।
नवं पत्रं फलं पुष्पं निवेद्य मधुसूदने ।
पश्चाद्भुङ्क्ते स्वयं यश्च तस्य तुष्यति केशवः ।। विष्णुधर्मोत्तरे १-५८-४ ।।
शुद्धं वस्तु समायातं मनसा तन्निवेद्य च ।
अश्नीयान्मिश्रितं कृत्वा साक्षात्पूर्वनिवेदितैः ।। शाण्डिल्यस्मृतौ ४-१३४ ।।
शुद्धं हविष्यं हृद्यञ्च सुरुच्यं वै निवेदयेत् ।
यच्छास्त्रेषु निषिद्धं तु तत्प्रयत्नेन वर्जयेत् ।। वृद्धहारीतस्मृतौ ४-१०५ ।।
९५ विष्णुलक्ष्मीवायुदेवान् विना देवाः शिवादयः ।
अन्यदेवा इति प्रोक्तास्ते ये विष्णुप्रिया अपि ।। प्रमाणसंग्रहोदाहृताग्रेयवचनम् ।।

**उमर्जी**—भक्तानामनुष्ठेयं साधनान्तरमाह— **पावनमिति** ।। अन्यदपावनमित्यर्थः

अनर्पयित्वा गोविन्दे यो भुङ्क्ते धर्मवर्जितः ।

श्वानविष्टासमं चान्नं नीरञ्च सुरया समम् ।। इति वचनात् ।।

अनिवेदितापेक्षयाऽन्यदेवनिवेदितस्य निन्दितत्वात्तत्प्रायश्चित्तमाह— **अन्यदेवस्येति** ।। रुद्रादिदेवस्य ।

सकृदेव तु योऽश्नाति ब्राह्मणो ज्ञानदुर्लभः ।

निर्माल्यं शंकरादीनां चण्डालो स भवेद्ध्रुवम् ।।

इति पाद्मवचनेन अन्यदेवतानिवेदितस्यैव निन्दितत्वात् ।। वायुस्त्वन्यदेवः न । तन्निवेदितं ग्राह्यम् ।

तदुक्तम्—

तेषामेकान्तिनो श्रेष्ठाः त एवानन्यदेवताः ।

अहमेव गतिस्तेषां निराशीः कर्मकारिणाम् ।। इति ।।

पवित्रं पवमानस्य भुक्तशेषं जगद्गुरोः ।

भुञ्जीत शुद्धभावेन भक्तिज्ञानविवर्धनम् ।। इति ।।

शुद्धं निवेदितं वायोर्योऽश्नाति नरपुङ्गवः ।

शुद्धो ज्ञानाद्यमाप्नोति हरेरच्छिन्नभक्तितः ।।

—इति विधायकप्रमाणाच्च ।। ९५ ।।

**उपेन्द्र**—भक्तानामवश्यानुष्ठेयं साधनान्तरमाह— **पावनमिति** ।। विष्णुनैवेद्यं निवेदितुं योग्यं सुभोज्यमिति ऋषिभिः स्मृतमित्यनुमानेन अकरणे प्रत्यवायं दर्शयति ।

अनर्पयित्वा गोविन्दे यो भुङ्क्ते धर्मवर्जितः ।

श्वानविष्टासमं चान्नं नीरं च सुरया समम् ।। इति वचनात् ।।

अनिवेदितापेक्षयान्यनिवेदितस्य पापाधिक्यात्प्रायश्चित्तमाह— **अन्यदेवस्येति** ।। रुद्रादिदेवस्य । वायुस्त्वन्यदेवः न ।

तेषामेकान्तिनः श्रेष्टास्त एवानन्यदेवताः ।। इत्युक्तेः ।।

पवित्रं पवमानस्य भुक्तशेषं जगद्गुरोः ।

भुञ्जीत शुद्धभावेन भक्तिज्ञानविवर्धनम् ।।

—इत्यादिविधायकवचनाच्च ।।

सकृदेव हि योऽश्नाति ब्राह्मणो ज्ञानदुर्लभः ।
निर्माल्यं शंकरादीनां स चण्डालो भवेद्ध्रुवम् ।।
—इति पाद्मवचनाद्रुद्रादिनिवेदितस्यैव निन्दितत्वात् ।। ९५ ।।

**कोनेरी**—विष्णुनैवेद्यमेवावश्यं भोज्यं नान्यदेवस्य नैवेद्यमित्याह—**पावनमिति** ।। पावनं पवित्रकरम् । नैवेद्यं विष्णुनिवेदितमन्नादिकम् । ऋषिभिः ऋष ज्ञान इति धातोर्ज्ञानिभिः सुभोज्यं सम्यक् अन्यदेवनिवेदितं हित्वा भोज्यमिति स्मृतं स्मति-भिरुक्तम् । तथा अन्यदेवस्य रुद्रादिदेवस्य प्रमादेन भुक्त्वा चान्द्रायणं तन्नामकव्रतं चरेत् कुर्यात् । चान्द्रायणं तल्लक्षणं वराहोक्तं ज्ञेयम् ।। ९५ ।।

**स्मृ.कृष्णाचार्य**—एवं मुमुक्षुणा भक्तेन भगवत्कीर्तनस्मरणध्याननमस्कार-प्रदक्षिणादिकं कर्तव्यमित्यत्र प्रमाणान्युक्त्वा विष्णोरत्यन्तप्रीतिकरतन्नैवेद्यभक्षण-तत्पादोदकस्नानपानतन्निर्माल्यधारणादिकं सदाचारेण भक्तेन सदा कर्तव्यमिति प्रमाणान्याह । तत्र तावद्भगवन्निवेदितमन्नपानादिभक्षणं कार्यम् । नान्यदेवस्येत्यत्र प्रमाणमाह— **पावनमिति** ।। विष्णुनैवेद्यं विष्णोः तन्त्रसाराद्युक्तपूजाप्रकारेण निवेदितमन्नपानादिकम् । सुभोज्यं सुष्ठु वैश्वदेवादिकरणानन्तरं अतिथ्यादिभिः सह सुष्ठु प्रीत्यतिशयेन भोज्यं भोजनं कार्यम् । अन्यदेवतानैवेद्यापेक्षया अस्या-धिक्यं कुत इत्यत उक्तम् ।। **पावनमिति** ।। अस्यैव परमपवित्रत्वात्तद्भक्षणमेव युक्तमिति । तस्य पावनत्वं कुत इत्यतः आह— **ऋषिभिः स्मृतमिति** ।। ऋषिभिः वसिष्ठादिभिः ज्ञानिभिः स्मृतत्वात्तस्यैव पावनत्वमिति[1] । नन्वस्य भक्तस्य अन्य-देवस्य नैवेद्यभक्षणादिना को दोष इत्यत उक्तम्— **अन्यदेवस्येति** ।। अन्यदेवस्य रुद्राद्यन्यदेवस्य नैवेद्यं भुक्त्वा भक्षणं कृत्वा चान्द्रायणं स्मृत्याद्युक्तचान्द्रायणरूप-प्रायश्चित्तं चरेत् । तत्कुत इत्यत स्मृतमिति अत्रापि सम्बद्ध्यते । ऋषिभि-स्तथाऽभिधानात्तत्र भोज्यमिति ।। ९५ ।।

---

१. "पवनसम्बन्धित्वाद्वा पावनमिति । "परशुक्लत्रयान्यस्य नैवेद्यं वर्जयेद्बुधः" इति वचनात् । परशुक्लत्रयान्यस्य रमाब्रह्मवायुसरस्वतीभारतीः विना अन्यस्येत्यर्थः ।" इति इदमधिकं व्याख्यानं एकस्मिन् हस्तलिखितपुस्तके दृश्यते ।

कृष्णामृतमहार्णवः

**कोट्यैन्दवसहस्रैस्तु मासोपोषणकोटिभिः ।**
**यत्फलं लभ्यते पुंभिर्विष्णोर्नैवेद्यभक्षणात् ।। ९६ ।।**

**ताम्रपर्णी—**विष्णुनैवेद्यस्य सम्यग्भोजनत्वमेव फलबाहुल्येन स्पष्टीक्रियते— **कोटीति** ।। ऐन्दवं चान्द्रायणं व्रतप्रसङ्गात् इन्दुग्रहणं वा । यत्फलं भवति तत्फलमिति योज्यम् ।। ९६ ।।

**उमर्जी—**भगवदर्पितस्यैव फलसाधनत्वं प्रमाणद्वयेनाह— **कोट्यैन्दवसहस्रैरिति** ।। ऐन्दवं चान्द्रायणम् । कोटिसङ्ख्यातान्येव ऐन्दवानि च तेषां सहस्रैः ।

तिथिवृद्ध्या चरेत्पिण्डान् शुक्ले शिख्यण्डसम्मितान् ।
एकैकं ह्रासयेत्पिण्डानेवं चान्द्रायणं चरेत् ।।
अष्टावष्टौ समश्नीयात्पिण्डान् मध्यन्दिने गते ।
नियतात्मा हविष्यस्य यतिचान्द्रायणं चरेत् ।। इति ।।

तत्फलं लभ्यते इत्यावृत्त्यान्वयः ।। ९६ ।।

**उपेन्द्र—**भगवदर्पितस्वीकारफलप्रतिपादकप्रमाणद्वयमाह— **कोट्यैन्दवसहस्रैरिति**।। ऐन्दवं चान्द्रायणम्—

तिथिवृद्ध्या चरेत्पिण्डान् शुक्ले शिख्यण्डसम्मितान् ।
एकैकं ह्रासयेत्पिण्डानेवं चान्द्रायणं चरेत् ।।
अष्टावष्टौ समश्नीयात्पिण्डान्मध्यन्दिने स्थिते ।
नियतात्मा हविष्यस्य यतिचान्द्रायणं चरेत् ।।

—इति तल्लक्षणम् ।। ९६ ।।

**कोनेरी—**विष्णुनैवेद्यभोजनस्य फलमाह— **कोट्यैन्दव इति** ।। ऐन्दवानि इन्दुः चन्द्रः तत्सम्बन्धीनि ऐन्दवानि चान्द्रायणव्रतानि उपरागाणि वा । ऐन्दवानां कोट्यः कोट्यैन्दवानि । तेषां सहस्राणि । मासोपोषणकोटिभिः कोटिमासोपोषणैः आचरितैरिति शेषः । पुम्भिः हरावभक्तपुरुषैः यत्फलं यादृशं फलं लभ्यते । तत्फलं तादृशं हरिनैवेद्यमत्युत्तमामत्यनुसन्धानेन हरिनैवेद्यभक्षणात् तानि लभ्यते प्राप्नोति ।। ९६ ।।

**स्मृ.कृष्णाचार्य**—भगवन्नैवेद्यभक्षणस्य बहुफलश्रवणात्तद्भक्षणं कार्यमित्यत्र बहुवचनमाह— **कोट्यैन्दवेति** ।। ऐन्दवं प्रायश्चित्तशास्त्रोक्तमैन्दवशब्दितं चान्द्रायणव्रतमुच्यते । तत्कोटिसहस्रव्रतप्रायश्चित्तैः तथा मासोपोषणकोटिभिः उपवासदिनमारभ्य मासपर्यन्तं क्रियमाणं यदुपोषणं उपवासः प्रतिदिनं निराहारव्रतं तेषां कोटिभिः कोटिसङ्ख्याकैर्व्रतैः । यत्फलं तत्साध्यं फलं पुम्भिः अधिकारिभिः तत्फलं तैर्लभ्यं फलं विष्णोर्नैवेद्यभक्षणात् विष्णुनिवेदितान्नादिभक्षणात् भवतीति तन्नैवेद्यभक्षणमेव कार्यमिति भावः। चान्द्रायणं च—

तिथिवृद्ध्या चरेत्पिण्डान् शुक्ले शिख्यण्डसम्मितान् ।
एकैकं ह्रासयेत्पिण्डानेवं चान्द्रायणं चरेत् ।।
इन्दुक्षये तु भुञ्जीत एष चान्द्रायणो विधिः ।। इति याज्ञवल्क्यः ।।
अष्टावष्टौ समश्नीयात् पिण्डान् मध्यन्दिने स्थिते ।
नियतात्मा हविष्यस्य यतिचान्द्रायणं चरेत् ।।
—इत्यादि लक्षणं द्रष्टव्यम् ।। ९६ ।।

**त्वयोपभुक्तस्रग्गन्धवासोऽलंकारचर्चिताः ।**
**उच्छिष्टभोजिनो** [२६] **दासाः तव मायां जयेमहि ।।**

**स्मृ.कृष्णाचार्य**—विष्णुनैवेद्यभक्षणस्य संसारनिवर्तकत्वश्रवणात्तन्नैवेद्यभक्षणं कार्यमित्यत्र भागवतवाक्यं पठति— **त्वयोपभुक्तेति** ।। हे कृष्ण त्वयोपभुक्तं सम्यक् सेवितं स्रग्गन्धवासोऽलंकारादिकं यदस्ति तेन चर्चिताः मण्डिताः । तथा उच्छिष्टभोजिनः त्वद्भुक्तशेषान्नभोजिनः वयं तव मायां संसारहेतुभूतप्रकृतिं जयेमहि

---

२६. नैसर्गिकं हि सर्वेषां दास्यमेव हरेः सदा ।
स्वाम्यं परस्वरूपं यद्दास्यं जीवस्य सर्वदा ।।
प्रकृत्या स्वात्मनो रूपं स्वाम्यं दास्यमिति स्थितिः ।। १७ ।।
दास्यमेव परं धर्मं दास्यमेव परं हितम् ।
दास्येनैव भवेन्मुक्तिरन्यथा निरयं भवेत् ।। १८ ।।
विष्णोर्दास्यं परा भक्तिर्येषां तु न भवेत्क्वचित् ।
तेषामेव हि संसृष्टं निरयं ब्रह्मणा नृप ।। १९ ।।

जेष्यामः । कुत इत्यत उक्तम् ।। **दासा इति** ।। स्वोच्छिष्टभोजनस्य दासानां विहितत्वात्तथा कुर्म इत्युद्धववाक्यं कृष्णं प्रति । तस्मादुच्छिष्टभोजनं कार्यमिति।।

**पुष्पमन्नं फलं तोयं शिवस्थं न स्पृशेत्क्वचित् ।**
**लङ्घयेन्नैव निर्माल्यं कूपे सर्वं विनिक्षिपेत् ।।**

**स्मृ.कृष्णाचार्य**—ननु विष्णुनैवेद्यवच्छिवनैवेद्यं भक्ष्यं किमित्यतो न कर्तव्यमित्यत्र वचनमाह— **पुष्पमिति** ।। पुष्पं अन्नं नानाविधान्नभक्ष्यादिकं फलं नानाविधफलं तोयं जलं एतत्सर्वं शिवस्थं शिवेन सेवितं न स्पृशेत् क्वचिदपि कदाचिदपि स्पर्शनमपि न कार्यम् । कुतः । स्पर्शने वहुदोषश्रवणात् । तथात्वे तन्निवेदितं किं कार्यमित्यत उक्तम् ।। **कूपे सर्वं विनिक्षिपेदिति** ।। यत्रकुत्रचिन्न विनिक्षिपेत् । लङ्घनादिना दोषश्रवणेन तत्पूजकः कूपे विनिक्षिपेदित्युक्तम् ।।

**मक्षिकापादतुल्यं तु धनधान्यादिकान्यपि ।**
**उपजीवति यो घोरं पितृभिः सह मज्जति ।।**

**स्मृ.कृष्णाचार्य**—प्रसङ्गाच्छिवालये विद्यमानद्रव्याद्युपजीवने दोषमाह— **मक्षिकेति** ।। शिवालयस्थितं धनधान्यादिकं मक्षिकापादतुल्यमपि स्वीकृत्य यः उपजीवति सः पितृभिर्घोरे अतिदारुणे रौरवाख्यनरके मज्जति । **तस्माच्छिवस्थं न स्पृशेदिति** ।।

---

नारायणस्य दासा ये न भवन्ति नराधमाः ।
जीवन्त एव चाण्डाला भविष्यन्ति न संशयः ।। २० ।।
तस्माद्दास्यं परां भक्तिमालम्ब्य नृपसत्तम ।
नित्यं नैमित्तिकं सर्वं कुर्यात्प्रीत्यै हरेः सदा ।। २१ ।। वृद्धहारीतस्मृतौ १ अ. ।।
यस्मिन् शरीरे जीवानां न दास्यं परमात्मनः ।
तदेव निरयं प्रोक्तं सर्वदुःखफलं भवेत् ।। १११ ।।
ब्रह्माद्याः सकला देवा वशिष्ठाद्या महर्षयः ।
कांक्षन्तः परमं दास्यं विष्णोरेव यजन्ति तम् ।। ११२ ।।वृद्धहारीतस्मृतौ ३ अ. ।।
२७ भुञ्जते ये मत्प्रसादं पत्रमन्नं पयोऽपि वा ।
तेषां स्यान्नियता वासः नरके चातिदारुणे ।।
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
नैवेद्यमपि तत्सर्वं भूम्यां तोयेऽथवा क्षिपेत् ।। ब्रह्माण्डे ३-१ ।।

कृष्णामृतमहार्णवः

**विष्णोर्नैवेद्यशेषेण यो भुनक्ति दिनेदिने ।**
**सिक्थेसिक्थे भवेत्पुण्यं चान्द्रायणशताधिकम् ।। ९७ ।।**

**उमर्जी**—यो भुनक्ति दिने दिने इत्यनेन कदाचिदपि न त्याज्यमित्यर्थः । सिक्थे सिक्थे एकैकान्नकवलस्वीकारे सति इत्यर्थः ।। ९७ ।।

**उपेन्द्र**—नैवेद्यशेषं भुनक्ति भुङ्क्ते । दिनेदिने इति विधित्वं सूचयति । सिक्थे सिक्थे एकैकान्नकवलस्वीकारे ।। ९७ ।।

कृष्णामृतमहार्णवः

**त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।**
**समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ।। ९८ ।।**
**षण्मासफलदा गोदा वत्सरस्य तु जाह्नवी ।**
**विष्णुपादोदकस्यैताः कलां नार्हन्ति षोडशीम् ।। ९९ ।।**

**ताम्रपर्णी**—पादोदकमाहात्म्यमाह— **त्रिरात्रमिति** ।। याः काः असमुद्रगाः नद्यस्ता अपि त्रिरात्रमनुष्ठेयस्य यज्ञस्य यत्फलं तत्प्रदा इत्यर्थः । समुद्रगाः पक्षस्य पक्षसाध्य-यज्ञस्य । एवमुत्तरत्राह । असमुद्रगा नद्यः । वापीकूपतडागादिषु त्रिरात्रस्नानेन यत्फलं तदेकवारस्नानेन प्रयच्छन्तीति त्रिरात्रफलदाः । समुद्रगा-स्त्वसमुद्रगासु नदीषु पक्षस्य पक्षस्नानस्य यत्फलं तदेकवारस्नानेन प्रयच्छन्तीति पक्षस्य फलदा इत्यादिवां योजना । ननु समुद्रस्य गङ्गाद्युत्तमवरुणाभिमतत्वाद्गङ्गादिसर्वनदीगर्भितत्वाच्च कथं गोदावर्याद्यपेक्षयाऽल्पफलप्रदत्वमिति चेत् वरप्रदानमहिम्ना स्नानफलाधिक्यसम्भवात् । ननु गङ्गापेक्षया कथं सालग्रामतीर्थस्याधिक्यम्। नच गङ्गादिजलेनैव सालग्रामादौ विष्णुपादाभिषेके केवलजलगङ्गापेक्षया पादतीर्थस्याधिक्यमिति वाच्यम्। गङ्गायाः लोकगुरुणा ब्रह्मणा कृतपादतीर्थत्वेन तस्याः केवलजलत्वाभावात् । अभिषिक्ततीर्थेन पुनरभिषेचनायोगाच्चेति चेन्न । ब्रह्माभिषिक्तगङ्गाजलापेक्षयाऽभिषिक्तेतरजलस्याधिक्यं युज्यते । सर्वेषामपि फलादीनां ब्रह्मणा विष्ण्वर्पितत्वेऽपि स्वबद्ध्या विष्ण्वर्पणेन विशेषवद्विशेषोपपत्तेः । नह्येदं

फलादि ब्रह्मणाऽर्पितं नापि विष्ण्वर्पितमित्यस्माभिः पुनर्निर्णीयते । किन्तु स्वबुद्ध्यार्पितमेवार्पितमन्यदनर्पितमिति वक्तव्यम्। तद्वत्प्रकृत इति काऽनुपपत्तिः ।। ९८ ।।

**उमर्जी**—सालग्रामतीर्थस्य सर्वतीर्थाधिक्यं वक्तुं तीर्थतारतम्यमाह— **त्रिरात्रफलदा नद्य इति** ।। त्रिरात्र्युपवासफलदाः इत्यर्थः । एताः गङ्गादिनद्यः । विष्णुपादोदकस्य द्वादशाब्दोपवासफलत्वोक्तेः । तदुक्तं स्कान्दे—

नद्यः सर्वाः स्वसेवाच्च त्रिरात्राद्युपवासतः ।
यत्फलं प्राप्यते पुंभिः दद्युस्तत्सदृशं फलम् ।।

तथा—

विष्णुपादोदकं पुण्यं प्राशयेद्यो दिनेदिने ।
द्वादशाब्दोपवासस्य फलं प्राप्नोत्यसंशयः ।।

अभिदधति मुनीन्द्रा द्वादशाब्दोपवासप्रतिफलममलं यत्सेवनं भक्तियुक्तम् ।
अधिकममरनद्याद्याप्लवाद्धन्यमन्यादपिवदलवबोधो विष्णुपादोदकं तत् ।।

इति काशीखण्डे । यद्वा वायुपुराणोक्तरीत्या त्रिरात्र्यादिकालानुगततदनुमेय तत्तत्कालपरिसमाप्ययज्ञादिफलदा इत्यर्थः ।

सर्वा नद्यः कलौ नृणां तत्फलं च स्वसेवनात् ।
त्रिरात्रनादीनां यत्फलं प्रोच्यते बुधैः ।।
तत्फलं प्रददुर्ब्रह्मन् स्वर्धुनी च स्वसेवनात् ।
द्वादशाब्दक्रतुफलं दद्यादेव सुमङ्गल ।।

इति गङ्गामाहात्म्ये उक्तत्वात् । ननु विष्णुपादोदकस्य गङ्गादिसर्वतीर्थोत्तमत्वे तन्निषेवणेनैव फलसिद्धेर्देहायासादिसाध्यगङ्गादिनिषेवणं व्यर्थम् । तत्र मन्दानामेव प्रवृत्तिरिति चेन्न । महापापनिवृत्तये ज्ञानिनां तत्प्रवृत्तिदर्शनात् । मुमुक्षवः सबहुमानमेवाद्यापि जटाजूटैरुद्वहन्तीति । "तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत्" इति भागवतोक्तेः ।। ९८ ।।

**उपेन्द्र**—सालग्रामतीर्थस्य समस्ततीर्थाधिकत्वं प्रतिपादयितुं तीर्थतारतम्यमाह- - **त्रिरात्रफलदा इति** ।। वायुपुराणोक्तरीत्या त्रिरात्रिमासानुष्ठेययज्ञफलदा इत्यर्थः।

यद्वा मध्वविजयटीकायां अस्य प्रमाणस्योपवासपरत्वेन व्याख्यानात् त्रिरात्यादि-कालोपवासफलदा इत्यर्थः । मध्वविजये विष्णुपादोदकसेवनस्य द्वादशाब्दोपवासफलत्वोक्तेः ।

अभिदधति मुनीन्द्रा द्वादशाब्दोपवासप्रतिमफलमलं यत्सेवनं भक्तियुक्तम् ।
अधिकममरनद्याद्याप्लुवाद्धन्यमान्यादपिबदलवबोधो विष्णुपादोदकं तत् ।।

विष्णुपादोदकं पुण्यं प्राशयेद्यो दिनेदिने ।
द्वादशाब्दोपवासस्य फलं प्राप्नोत्यसंशयः ।। इति स्कान्दे ।।

पृथक्समुद्रगा न भवन्तीत्यसमुद्रगाः । समुद्रगाः पृथक्समुद्रगाः कलां षोडशांशम् ।। ९८ ।।

**कोनेरी**— अथ त्रिरात्रफलदेत्यारभ्य स्नात्वा पादोदकमित्यन्तश्लोकपञ्चकस्य क्रमा-द्विशिष्टान्वयः । विष्णुनैवेद्यसेवनफलमुक्त्वा विष्णुपादोदकसेवनफलं वक्तुमुपक्रमते— **त्रिरात्रफलदा इत्यादि श्लोकपञ्चकैः** ।। यद्यपि निरुपचरित-विष्णुपादोदकं सालिग्रामतीर्थादत्युत्तमं गङ्गातीर्थमेवेति भागवतादिसर्वशास्त्रेषु निश्चितम् । तथापि प्रतिमास्वप्रबुद्धानामित्युक्तप्रकारेण मन्दाधिकारिणां प्रतिमा-स्वर्चनेनैवार्थसिद्धिः तदभावेऽनर्थप्राप्तिरिति ध्वनयन् सालिग्रामाद्यर्चायां सन्निहित-हरिपूजनं तैः कर्तव्यमित्यभिधाय तदभिषिक्तजलमवश्यं सेवनीयमिति मन्दाधिका-रिणां रुच्युत्पादनार्थं आपाततः सालिग्रामतीर्थप्रशंसामाह— **त्रिरात्रफलदा नद्य इत्यारभ्य वैष्णवीं सिद्धिमित्यन्तेन श्लोकपञ्चकेन** ।। श्लोकपञ्चकस्यायमर्थः। अत्र प्रातीतिकार्थः तात्पर्यार्थश्च द्वावपि ज्ञातव्यौ । प्रातीतिकार्थस्तु याः काश्चिद-प्रसिद्धाः असमुद्रगाः नद्यः त्रिरात्रफलदाः त्रिरात्रोपवासजन्यफलदाः । त्रिरात्रकृत-यज्ञजन्यफलदा वा । एवमुत्तरत्राप्यर्थो ज्ञेयः । समुद्रगास्तु कृष्णवेण्यादिमहानद्यः पक्षस्य फलदाः। सरितांपतिः समुद्रः मासस्य फलदः । तथा जाह्नवी वत्सरस्य फलदा एताः विष्णुपादो-दकस्य सालिग्रामाभिषेकजलस्य षोडशीं कलां नार्हन्तीति ।। ९८-९९ ।।

**स्मृ.कृष्णाचार्य**— भगवन्नैवेद्यभोजनादेरधिकफलत्वमुक्त्वा भगवत्पादोदक-धारणस्य अधिकफलत्वं वचनैराह— **त्रिरात्रफलदा इति** ।। नद्यः नदवत्यः असमुद्रगाः समुद्रसङ्गमरहिताः याः काश्चिद्वर्तन्ते ताः त्रिरात्रफलदाः स्वस्मिन्स्नातुः

**पुरुषस्य** त्रिरात्रफलदाः त्रिरात्रमात्रसाध्ययज्ञफलदा भवन्ति । समुद्रगाः समुद्र-सङ्गवत्यो नद्यः पक्षस्य पक्षसाध्ययज्ञफलप्रदाः । मासस्य सरितां पतिः समुद्रो माससाध्ययज्ञतुल्यफलप्रदः । तथा गोदा गोदावरी षण्मासफलदा षण्माससाध्य-यज्ञफलप्रदा। जाह्नवी भागीरथी तु वत्सरस्य वत्सरसाध्ययज्ञफलप्रदा भवति । एताः सर्वाः नद्यः स्नानपानादिभिर्विष्णोः पादोदकस्य विष्णोरभिषिक्तसालग्रामादि-तीर्थस्य षोडशीं कलां षोडशांशमध्ये एकांशमपि फलं दातुं नार्हन्तीति । तस्मा-त्सर्वतीर्थस्नानापेक्षया सालग्रामाद्यभिषिक्तविष्णुपादोदकरूपतीर्थस्य स्नानपान-प्रोक्षणादिना फलाधिक्यश्रवणात्तद्धारणादिकं कार्यमिति ।। ९८-९९ ।।

**कृष्णामृतमहार्णवः**

**गङ्गाप्रयागगयपुष्करनैमिषाणि**
**संसेवितानि बहुशः कुरुजाङ्गलानि ।**
**कालेन तीर्थसलिलानि पुनन्ति पापं**
**पादोदकं भगवतः प्रपुनाति सद्यः ।। १०० ।।**

**ताम्रपर्णी**—न केवलं विष्णुपादोदकस्य गङ्गाद्यपेक्षया पुण्यातिशयहेतुत्वं किन्त्वा-धिक्येन पापनिवर्तकत्वं चेत्याह— **गङ्गेति** ।। गङ्गापदेन नदीपात्रमुच्यते । प्रयागा-दिशब्देन क्षेत्राणि, तेन तत्स्थानीति लभ्यते । तथाच गङ्गापात्रप्रयागादिक्षेत्रस्थानि तीर्थसलिलानीत्यन्वयः । यद्वा गङ्गेति गङ्गासंज्ञितं तीर्थम् । प्रयागादिशब्देन क्षेत्रा-ण्येव गृह्यन्ते । तीर्थसलिलानीत्यस्य तद्गतानि तीर्थसलिलानि चेत्यर्थः । तथा चैतानि बहुशो बहुवारं संसेवितानि । परं पापिष्ठं पुरुषं बहुशः कालेन दीर्घेण कालेन पुनन्ति पवित्रीकुर्वन्तीत्यर्थः ।। १०० ।।

**उमर्जी**— अनवस्थयोः फलभेदमाह— **गङ्गेति** ।। गङ्गादितीर्थसलिलानि । कुरु-जाङ्गलानीति बहुवचनमाद्यर्थं कुरुजाङ्गलादीनीत्यर्थः । बहुशः संसेवितानि । पुरुषेणेति शेषः । पापं पापकर्तारं कालेन कालविलम्बेन जन्मान्तरे पुनन्ती-त्यर्थः । सद्यः पवित्रकरत्वात्फलाधिक्यमित्यर्थः । अयं भावः । तत्पुण्यजलकृत-पादोदकस्य तत् पुण्यजलापेक्षया फलाधिक्यं विवक्षितम् । अन्यथा तीर्थक्षेत्रादिनां महाफलप्रतिपादकशास्त्रस्य अप्रामाण्यापत्तेः । लोके शिष्टाः यथाधिष्ठानाधिक्येन

मन्त्रविशेषेण अधिकारिभेदेन पादोदकविशेषमङ्गीकुर्वन्ति । तथाऽत्रापि पुण्यतीर्थकृतपादोदकस्य फलाधिक्यात्सद्यः पुनातीत्युक्तम् । तस्मात्सर्वतीर्थाधिकत्वं युक्तम् ।। १०० ।।

**उपेन्द्र—**पादोदकस्य सर्वतीर्थोत्तमत्वं कुत इत्यत आह— **गङ्गेति** ।। क्षेत्रादपीत्याह— **प्रयागेति** ।। समित्युपसर्गाद्भक्तिपूर्वकं सेवितानि । कुरुजाङ्गलानीति बहुवचमाद्यर्थे कुरुजाङ्गलादीनीत्यर्थः । तीर्थसलिलानि तीर्थशब्दवाच्यसलिलाभिमानिदेवतानीत्यर्थः । "नह्यम्मयानि तीर्थानि" इति भागवतोक्तेः । कालेन कालव्यवधानेन गुरूपदेशं प्रापयित्वेत्यर्थः । पापं पापकर्तारं पुनन्ति । सद्यः पावित्र्यकरत्वादधिकमिति भावः ।। १०० ।।

**कोनेरी—** ।। **गङ्गाप्रयागेति** ।। गङ्गा भागीरथी । प्रयागः प्रयागक्षेत्रम् । गया गयाक्षेत्रम् । पुष्करं पुष्करक्षेत्रम् । कुरुजाङ्गलानि एतानि क्षेत्राणि अन्यतीर्थसलिलान्यपि बहुशः कालेन पापजातं पापिनां पुनन्ति । भगवतः पादोदकं **सालिग्रामाभिषेकजलं सद्यः प्रपुनातीति** ।। १०० ।।

**स्मृ.कृष्णाचार्य—**विष्णुपादोदकस्याधिक्ये वचनान्तरमाह— **गङ्गेति** ।। गङ्गा भागीरथी । प्रयागक्षेत्रं पुष्करक्षेत्रं नैमिषक्षेत्रं एतानि । तथा कुरुजाङ्गलानि कुरुक्षेत्रजाङ्गलक्षेत्राणि एतानि बहुशः संसेवितानि तीर्थसलिलानि कालेन बहुशः कालेन अनेकपापयुक्तं पुरुषं पुनन्ति पापरहितं कुर्वन्ति । भगवतः पादोदकं सालग्रामतीर्थं सद्योधारणादिमात्रेणापि महापापयुक्तमपि पुनाति पवित्रं करोति । तस्मात्तद्धारणं कार्यमिति । अत्र श्लोकेषु विष्णुपादोदकशब्देन गङ्गैवोच्यते । ननु सालग्रामतीर्थमिति न मन्तव्यम् । गङ्गाप्रयागेति श्लोके गङ्गापदेन गङ्गामुक्त्वा तदपेक्षया "पादोदकं भगवतः प्रपुनाति सद्य" इति विष्णुपादोदकस्योत्तमत्वाभिधानात् । किञ्च—

> सः स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
> यो वहेच्छिरसा नित्यं सालग्रामशिलाजलम् ।।

इति सालिग्रामतीर्थस्यैव सर्वतीर्थोत्तमत्वाभिधानाद्विष्णुपादोदकस्य सालग्रामतीर्थस्य षोडशां कलां षोडशांशमध्ये एकांशमपि नार्हन्ति । तस्मात्सर्वतीर्थापेक्षया तस्यैवाधिक्यमिति ।। १०० ।।

कृष्णामृतमहार्णवः

**यानि कानि च तीर्थानि ब्रह्माण्डान्तर्गतानि च ।**
**विष्णुपादोदकस्यैते कलां नार्हन्ति षोडशीम् ।। १०१ ।।**

**ताम्रपर्णी**—न केवलमुक्ततीर्थापेक्षया पादोदकस्य श्रैष्ठ्यं किन्तु सर्वापेक्षयेत्याह- — **यानीति**।। आद्यश्चशब्दोऽप्यर्थे । यानिकानीति व्याप्त्यर्थो बोध्यः । द्वितीयो अप्यर्थे । एतेऽपीति सम्बद्ध्यते । तथाच ब्रह्माण्डान्तर्गतानि यानिकान्यपि तीर्थानि एते तदभिमानिनो देवा अपि । स्नातानां पापपरिहारे विष्णुपादोदकस्य शालग्रामतीर्थस्य तदभिमानिदेवस्य षोडशीं कलां नार्हन्तीत्यर्थः ।। १०१ ।।

**उमर्जी**—उक्ततीर्थादन्यस्मादधिकं नेति समन्दाशंकां परिहरति— **यानीति** ।। यानि कानि प्रसिद्धानि अप्रसिद्धानि च तीर्थक्षेत्राणि तीर्थाभिमानिनो देवा एव अत्र विवक्षिता इति ज्ञापनाय एते इति पुलिङ्गेन निर्देशः ।। १०१ ।।

**उपेन्द्र**—यावत्तीर्थाधिक्यमाह— **यानीति** ।। यावन्ति चशब्दात्क्षेत्राणि । तीर्थ-शब्देन तदभिमानिनो देवा एव विवक्षिता इति ज्ञापनाय एते इति पुल्लिङ्गेन परामर्शः ।। १०१ ।।

**कोनेरी**— ।। **यानि कानीति** ।। ब्रह्माण्डान्तर्गतानि यानि कानि च तीर्थानि वै प्रसिद्धानि एते एतानि लिङ्गव्यत्ययश्छान्दसः । विष्णुपादोदकस्य सालि-ग्रामोदकस्य षोडशीं कलां नार्हन्ति ।। १०१ ।।

**स्मृ.कृष्णाचार्य**—पुनरपि विष्णुपादोदकस्योत्तमत्वमाह— **यानि कानि च तीर्था-नीति** ।। ब्रह्माण्डान्तर्गतानि यानि कानि च तीर्थानि वर्तन्ते, तदभिमानिनो देवाः स्नातानां पापपरिहारे विष्णुपाददोकस्य सालग्रामतीर्थस्य षोडशीं कलां षोडशांश-मध्ये एकांशमपि नार्हन्ति । तस्मात्सर्वतीर्थापेक्षया तस्यैवाधिक्यमिति ।। १०१ ।।

कृष्णामृतमहार्णवः

**स्नानं पादोदकं विष्णोः पिबन् शिरसि धारयेत् ।**
**सर्वपापविनिर्मुक्तो वैष्णवीं सिद्धिमाप्नुयात् ।। १०२ ।।**

**ताम्रपर्णी**—पादोदकसेवा कार्येत्युक्तं स्नानकाले तत्सेवाप्रकारमाह— **स्नात्वेति**।। स्नानं कृत्वा। विष्णोः पादोदकं प्रथमं त्रिः पिबन् पश्चात् शिरसि धारयेद्वैष्णवीं विष्णुसम्बन्धिनीं सिद्धिं ज्ञानम् । तथाच व्यासस्मृतौ—

स्नाने चाचमने चैव भोजनादौ यथाविधि ।
तथैव भोजनान्ते च शालग्रामजलं पिबेत् ।। इति ।।

अत्र केचित्स्नानकाले शालग्रामतीर्थस्य पानानन्तरं शिरसि धारणमसाधु किन्तु धारणानन्तरमेव पानम् । पिबन् शिरसि धारयेदित्यत्राऽऽनन्तर्यं न विवक्षितम्।

विष्णोः पादोदकं देवि शिरसा धारयन् पिबेत् ।
यो नरो वसुधे नित्यं स याति परमां गतिम् ।।

इत्यादि वचनादिति । तदसत् । एतद्वचनस्य स्नानकालादतिरिक्तकालेषु तीर्थसेवाविषयत्वात् ।। १०२ ।।

**उमर्जी**—स्नानकाले तीर्थप्राशनप्रकारमाह— **स्नानमिति** ।। कुर्वन्निति शेषः । प्रथमतः पिबन् अनन्तरं शिरसि धारयन् वैष्णवीं सिद्धिमाप्नोतीत्यन्वयः ।। १०२ ।।

**उपेन्द्र**—स्नानकाले प्राशनप्रकारमाह— **स्नानमिति** ।। कुर्वन्निति शेषः । वैष्णवीं विष्णुदीक्षासिद्धिम् ।। १०२ ।।

---

२८. हरेः पादोदकेष्वन्यदेवपादोदके तथा ।
करोति समतां यो हि ब्रह्महत्यां लभेत्तु सः ।। ब्रह्मवैवर्ते २-३६-१५२ ।।
विष्णुपादोद्भवं तीर्थं पीत्वा न क्षालयेत्करम् ।
क्षालयेद्यदि मोहेन पञ्चपातकमाप्नुयात् ।। ३२ ।। वाधूलस्मृतौ ।।
विष्णुपादोदकं पुण्यं पीत्वा यस्तु स्वमस्तके ।
प्रक्षेपणं प्रकुर्वीत ब्रह्महत्यां व्यपोहति ।।
विष्णोः पादोदकं पूर्वमासिच्य च शिरोमुखे ।
नेत्रे च त्रिः पिबेत्पश्चात् तापत्रयनिवारणम् ।।
विष्णोः पादोदकं देवि शिरसा धारयेत्पिबन् ।
यो धरेद्वसुधे नित्यं स याति परमां गतिम् ।।
—स्मृतिमुक्तावल्युदाहृतवराहवचनम् ।।

**कोनेरी**—विष्णोः पादोदकं शालग्रामाभिषेकजलं यः पिबन् शिरसि धारयेत् सः सर्वपापविनिर्मुक्तः सन् वैष्णवीं विष्णुसम्बन्धिनीं सिद्धिं मोक्षं आप्नुयात् । अयं प्रातीतिकार्थस्तु अल्पाधिकारिविषयको स्तुत्युत्पादनायोक्तः । तात्पर्यार्थस्तु नद्यः द्विविधाः काश्चित्समुद्रगाः काश्चिदसमुद्रगाः । तत्र याः असमुद्रगाः ताः त्रिरात्र-फलदाः । याः समुद्रगाः ता पक्षस्य फलदाः । समुद्रगास्त्वित्यत्र विद्यमानतुशब्देन तारतम्योपेताः महानद्यो ग्राह्याः । तासु ताम्रपर्णी वंजराभीमरथीपिनाकिनीमुख्याः महानदीष्ववराः मासस्य फलदाः । नर्मदासिन्धुभवनाशनीमुख्याः तदुत्तमाः द्विमास-फलदाः । तदुत्तमयमुनासरयूतुङ्गभद्राद्याः त्रिमासफलदाः । तदुत्तमा कावेरीसरस्व-त्याद्याः चतुर्मासफलदाः । सरितांपतिः समुद्रः संवत्सरस्य फलदः । हे जाह्नवि विष्णुपादोदकस्य एताः गोदाद्याः षोडशीं कलां नार्हन्ति । एता इति स्त्रीलिङ्गप्रयोगेन अपाम्पतिं व्यावर्तयति । किञ्च गोदायाः षण्मासफलदायकत्वं समुद्रस्य मासफलदायकत्वाङ्गीकारे गोदापेक्षया समुद्रस्यावरत्वं स्यात् । नच तत्सम्भवति । भर्त्रपेक्षया भार्यायाः उत्तमत्वकथनस्यान्याय्यत्वात् । गङ्गाया अपि भार्यात्वेन स्वरूपोत्तमत्वाभावेऽपि गङ्गोदकस्य हरिपादाभिषिक्तत्वेन पादरजःसम्बन्धात् समुद्रोदकादुत्तमत्वं सम्भवतीति न काचनानुपपत्तिः ।

गङ्गायां च प्रयागे च गङ्गासागरसङ्गमे ।
सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा ।। इति वचनात् ।।

गङ्गा गङ्गाद्वारक्षेत्रं नतु गङ्गातीर्थं । प्रयागं तन्नामकं क्षेत्रम् । गयः तन्नामकं क्षेत्रम् । नैमिषक्षेत्रं एतानि तीर्थानि सर्वतीर्थसलिलानि च बहुशः संसेवितान्यपि कालेन गुरूपदेशनकाले पुनन्ति । भगवतः त्रिविक्रमावतारस्य हरेः पादोदकं भागीरथी-जलं सद्यः कालव्यवधानमन्तरेण प्रपुनाति प्रकर्षेण पुनाति ।। १०२ ।।

**स्मृ.कृष्णाचार्य**—पुनस्तस्यैवाधिक्यमाह— **स्नानमिति** ।। विष्णोः पादोदकं स्नानं कुर्वन् । पिबन् प्राशनं कुर्वन् । शिरसि धारयन् भक्तः सर्वपापविनिर्मुक्तो वैष्णवीं विष्णुसम्बन्धिनीं सिद्धिं ज्ञानादिसिद्धिं आप्नुयात् । तस्मात्तीर्थस्नानं कर्तव्यमिति ।। १०१ ।।

**श्रीब्रह्मा—**

**द्वादशाक्षरमन्त्रेण ह्यभिषिच्य विधानतः ।**
**सालग्रामजलैः स्नातः सर्वतीर्थेषु सर्वदा ।।**

**स्मृ.कृष्णाचार्य—**विष्णोरेव नैवेद्यादिकं भोज्यमित्यभिधाय सालग्रांमतीर्थस्नान-पानादेः फलमस्तीति ब्रह्मवाक्यं पठति— **द्वादशेति** ।। यो भक्तः द्वादशाक्षरमन्त्रेण सालग्राममभिषिच्य विधानतः अभिषेकं कृत्वा तादृशसालग्रामाभिषिक्तैर्जलैस्तीर्थै-र्विधानतः स्नातो भवति । स सर्वतीर्थेषु गङ्गादिसर्वतीर्थेषु स्नातो भवति । तस्मात् सर्वतीर्थस्नानफलदत्वात्सालग्रामतीर्थेन स्वशिरसि स्नानकाले अभिषेचनं कार्यमिति भावः ।।

**यश्चक्रमभिषिच्याथ तत्तोयैः स्वशिरो नरः ।**
**अभिषिच्य यदि पिबेद्याति विष्णोः परं पदम् ।।**

**स्मृ.कृष्णाचार्य—**स्नानकाले स्नानानन्तरं सालग्रामतीर्थं शिरस्यभिषिच्य ततः परं तत्तीर्थप्राशनादिकं कार्यम् । महाफलवत्त्वादिति तत्र वचनमाह— **यश्चक्र-मिति** ।। यः अधिकारी चक्रं सालग्रामं नद्यादावभिषिच्य तत्तीर्थैः स्वशिरस्यभिषेकं कृत्वा शिरसि धृत्वा तदनन्तरमेव यः पिबेत्तत्तीर्थपानं कुर्यात् । नतु तत्पानानन्तरं शिरसि धारयेदित्यर्थः । नचात्र "पिबन् शिरसि धारयेत्" इति वचनविरोधः इति वाच्यम् । तत्रानन्तर्यानुक्तेः ।

विष्णोः पादोदकं देवि शिरसा धारयन् पिबेत् ।
यो नरो वसुधे नित्यं स याति परमां गतिम् ।।

इति वचने पानस्यानन्तर्योक्तेश्च । तथा सम्प्रदायस्त्वार्धुनिक इति मन्तव्यः ।।

**गङ्गा गोदावरी रेवा नद्यो मुक्तिप्रदाश्च याः ।**
**निवसन्ति सतीर्थास्ताः सालग्रामशिलाजले ।।**

**स्मृ.कृष्णाचार्य—**पुनः सालग्रामतीर्थमाहात्म्यं तद्धारणप्राशनाद्यर्थं प्रमाणेनाह- - **गङ्गागोदावरीति** ।। गङ्गागोदावरीरेवाख्या यास्तिस्रो नद्यः कर्मक्षयरूपमुक्ति-प्रदाः । तास्तिस्रः तीर्थाः सर्वतीर्थसहिताः सालग्रामशिलाजले सालग्रामाभिषिक्त-तीर्थे वसन्ति । तस्मात्सर्वतीर्थफलदत्वात्सालग्रामशिलातीर्थं सदा सेव्यमिति ।।

**सालग्रामशिलाचक्रं वज्रकीटविनिर्मितम् ।**
**अधिष्ठानं हि तद्विष्णोः सर्वपापप्रणाशनम् ।।**

**स्मृ.कृष्णाचार्य**—सालग्रामतीर्थस्यैव तादृशमाहात्म्यं कुत इत्यतः सालग्रामस्य भगवन्मुख्याधिष्ठानत्वेनास्ति श्रेष्ठत्वमित्यत्र वचनमाह स एव ब्रह्मा— **सालग्रामेति** ।। वज्रकीटेन वज्ररूपक्रिमिणा निर्मितं विशेषेण रन्ध्रादिकं कृत्वा तत्र चक्रादिकं यथा भवति तथा निर्मितम् । सालग्रामशिलाचक्रं सालग्रामाख्यचक्रयुक्तशिलारूपं यत्तद्विष्णोरधिष्ठानं यतः अतः सर्वपापप्रणाशनं सर्वैः क्रियमाणनानाविधपापप्रणाशनम् । अतस्तत्तीर्थं धार्यमिति भावः ।।

**सालग्रामशिलारूपी यत्र तिष्ठति केशवः ।**
**तत्र देवास्सुरा यज्ञाः भुवनानि चतुर्दश ।।**

**स्मृ.कृष्णाचार्य**—सालग्रामस्य भगवन्मुख्याधिष्ठानत्वात्तस्य सर्वाधिक्यमित्यत्र वचनान्तरमाह— **सालग्रामशिलारूपीति** ।। केशवः सालग्रामशिलाख्यप्रतिमायुक्तः यत्र यस्मिन्देशे तिष्ठति तत्र देवाः सुराश्च यज्ञा अश्वमेधादियज्ञाः चतुर्दशपातालादिभुवनानि तिष्ठन्ति । तस्माद्भगवन्मुख्यप्रतिमात्वात्तस्याधिक्यमिति ।।

**यथा काष्ठगतो वह्निः मथस्थाने प्रकाशते ।**
**तथा सर्वगतो विष्णुः सालग्रामे प्रकाशते ।।**

**स्मृ.कृष्णाचार्य**—भगवतः सर्वत्राधिष्ठितत्वात्सालग्रामस्य तदधिष्ठानत्वे सर्वाधिक्यं कुत इत्यतः सालग्रामे विष्णोर्विशेषेण सन्निधानात्तस्य सर्वाधिक्यमिति पुनः प्रमाणेनाह— **यथेति** ।। यथा काष्ठगतः सर्वकाष्ठगतोऽपि वह्निः मथनस्थाने सम्यङ्मथनयुक्तकाष्ठविशेषे एव प्रकाशते । तथा सर्वगतः सर्वत्र "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित" इत्युक्तरीत्या विद्यमानोऽपि । सालग्रामशिलायां विशेषेण सन्निहितः विशेषेण फलप्रदो भवतीत्यर्थः ।।

**न तथा रमते लक्ष्म्या न तथा स्वपुरे हरिः ।**
**सालग्रामशिलाचक्रे यथा स रमते सदा ।।**

**स्मृ.कृष्णाचार्य**—सालग्रामस्य लक्ष्म्याद्यपेक्षया अतिप्रियत्वात्तस्य सर्वाधिक्यमिति वचनान्तरमाह— **न तथेति** ।। यथा सालग्रामशिलाचक्रे हरिः रमते सदा

अतिप्रीतिविषयत्वेन क्रीडते सन्निहितो भवति । तथा लक्ष्म्या स्वपुरे वैकु-ण्ठादौ स्वस्थाने न रमते न सन्निहितो भवति । तस्मात्सालग्रामस्य सर्वाधिक्यमिति भावः ।।

**शिला द्वादश वै वैश्य सालग्रामसमुद्भवाः ।**
**विधिवत्पूजिता येन तस्य पुण्यं वदामि ते ।।**

**स्मृ.कृष्णाचार्य**—ननूक्तभगवदधिष्ठानस्य लिङ्गादिरूपशिलादावपि सत्वात्साल-ग्राम एव विशेषसन्निधानेन इतरलिङ्गादिपूजां विना सालग्रामपूजनमेव कार्यमित्येत-त्कुत इत्यतः द्वादशकल्पेषु सुवर्णकमलादिभिर्द्वादशकोटिभिः लिङ्गपूजनस्य सकृद्-द्वादशसालग्रामस्य विधिवत् पूजामात्रेण लाभादितरपूजां विना सालग्रामस्य मुख्या-धिष्ठानत्वेन तत्पूजा कार्येति कञ्चन वैश्यं प्रति ऋषिवाक्यं प्रमाणमाह— **शिलाया-मिति**।। द्वादशसंख्याकाः सालग्रामपर्वतसमुद्भवाः वज्रकीटनिर्मितरन्ध्रचक्रादि-युक्ताः सालग्रामाख्याः शिला येन अधिकारिणा विधिवद्विध्युक्तप्रकारेण पूजिता-स्तस्य सालग्रामपूजकस्य फलं तत्पूजनफलं तद्वदामि श्रुण्विति वैश्यं प्रति कस्य-चित्सम्बोधनम् ।।

**कोटिद्वादशकैर्लिङ्गैः पूजितैः स्वर्णपंकजैः ।**
**यत्स्यात् द्वादशकल्पेषु दिनेनैकेन लभ्यते ।।**

**स्मृ.कृष्णाचार्य**—तत्फलं किमित्यपेक्षायामाह— **कोटिद्वादशकैरिति** ।। द्वादश-दैनन्दिनकल्पेषु स्वर्णपंकजैः स्वर्णकमलैः स्वर्णकृतबिल्वपत्रादिभिर्पूजितैस्सम्यक् संपूजितैः द्वादशकोटिसंख्याकैर्लिङ्गैर्यत्फलं स्यात्तादृशं फलं सालग्रामस्यैक-दिनपूजनेन लभ्यं इत्यर्थः। तस्मादितराधिष्ठानापेक्षया सालग्रामशिलाया भगव-न्मुख्याधिष्ठानत्वात्तत्पूजनं सदा कार्यमिति भावः ।।

**सालग्रामशिलायां तु यः श्राद्धं कुरुते नरः ।**
**पितरस्तस्य तिष्ठन्ति तृप्ताः कल्पशतं दिवि ।।**
**सालग्रामशिलाग्रे यः श्राद्धं दद्याद्विचक्षणः ।**
**पितरस्तस्य तृप्यन्ति मुक्तिं यान्ति न संशयः ।।**

**स्मृ.कृष्णाचार्य**—साल्ग्रामसन्निधौ पितृनुद्दिश्य श्राद्धादिकरणे तादृशपितृणामनेककाले स्वर्गादिफलस्य मोक्षादिपुरुषार्थफलविशेषस्याभिधानात्साल्ग्रामस्य सर्वाधिक्यमित्याह वचनद्वयेन— **साल्ग्रामशिलायामिति** ।। साल्ग्रामशिलापर्वते यः श्राद्धं सांवत्सरादिकं तीर्थश्राद्धादिकं पितृनुद्दिश्य कुरुते । तस्य पितरः कल्पशतं तृप्तास्सन्तः दिवि स्वर्गादिपुण्यलोके तिष्ठन्ति । तथा साल्ग्रामशिलाग्रे स्वगृहे पूजितसाल्ग्रामशिलासमीपे विचक्षणः कुशलः यः पितृनुद्दिश्य श्राद्धं दद्यात्तस्य पितरस्तृप्यन्ति अनेककालं तृप्ता भवन्ति । न केवलं तृप्ता मुक्ताश्च भवन्ति । संसारदुःखान्मुक्ता भवन्तीत्यर्थः। तस्मात्साल्ग्रामशिलाया आधिक्यमिति ज्ञातव्यम् ।।

**आशासन्ते सदा देवाः पितरस्सर्व एव हि ।**
**यमिष्ट्वादौ महाविष्णुं पश्चात्तेन पितॄन् सुरान् ।।**
**यस्तर्पयेत्स वै पुत्रः सभार्यस्स तु जीवतु ।।**

**स्मृ.कृष्णाचार्य**—साल्ग्रामस्थितविष्णोः स्वगृहे विधिवत्पूजां कृत्वा तन्निवेदितान्नादिशेषेण पितृन्देवान् श्राद्धादितृप्तान्कुर्यात् । विष्णुनैवेद्यशेषेण श्राद्धादिकर्ता स एव पुत्रः भार्यादिसहितः सन् जीवतु इति पितरः आशासन्ते । अतः साल्ग्रामशिलार्चनं कृत्वा तन्नैवेद्यशेषेण तदर्चनं कार्यमित्यत्र वचनमाह— **आशासन्त इति** ।। सदा देवाः पितरश्च आशासन्ते अपेक्षन्ते । किमिति ।। **यश्चेति** ।। यः पुत्रः आदौ यं विष्णुं इष्ट्वा सम्यगन्नादिनैवेद्येन पूजां कृत्वा । पश्चात् तन्नैवेद्यशेषेण देवान् अस्मान् तर्पयेत् श्राद्धं कृत्वा तृप्तिं कुर्यात् । स एव पुत्रः पुन्नाम्नो नरकात् त्राता । स एव पुत्रः भार्यासहितः शतवर्षं जीवतु इति आशासन्त इति सम्बन्धः ।।

**विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।**
**पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते ।।**

**स्मृ.कृष्णाचार्य**—विष्णुनैवेद्येन देवताराधनपितृश्राद्धादिकरणे अनन्तफलश्रवणात् तदेव सर्वैः कार्यमित्यत्र प्रमाणमाह— **विष्णोरिति** ।। विष्णोर्निवेदितान्नेन ब्रह्मादिदेवतान्तरं यष्टव्यं पूजनीयम् । तदेव नैवेद्यशेषान्नमेव पितृभ्यः स्वपितृभ्यस्तृप्तये श्राद्धकाले देयं दातव्यम् । तथा दाने फलमाह— **तदिति** ।। तत् पितृभ्यो दत्तं

विष्णुनिवेदितान्नं आनन्त्याय तद्भुक्तपितृणां मोक्षाय कल्पते भवति । तस्मा-त्पितृभ्यो विष्णोर्नैवेद्यमेव दातव्यमिति ।।

**पितृशेषं तु यो दद्यात् हरये परमात्मने ।**
**रेतोपाः पितरस्तस्य भवन्ति क्लेशभागिनः ।।**

**स्मृ.कृष्णाचार्य**—उक्तविपरीतकरणे दोषमाह स एव— **पितृशेषमिति** ।। यः नरः पितृशेषं पितृभ्यो दत्तशेषं श्राद्धकाले । हरये दद्यात्तस्य तादृशपापिनः पितरो रेतोपा रेतःपानवन्तः भवन्ति । तेन क्लेशभागिनो नरकादौ दुःखभागिनो भवन्ति । यद्वा परमात्मने पितृशेषदातुः रेतोपाः रेतस्सेचकाः तस्य पितरः क्लेशभागिनो भवन्ति । तस्मात्पितृशेषं हरये न दद्यादिति भावः ।।

**यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम् ।**
**तेनैव पिण्डैः सतिलैर्विमिश्रितैराकल्पकोट्यः पितरः सुतृप्ताः ।।**

**स्मृ.कृष्णाचार्य**—विष्णुभुक्तशेषमेव पितृभ्यो दातव्यं तथा दाने महाफलश्रवणादि-त्यत्र गारुडवाक्यं प्रमाणयति— **य इति** ।। यः श्राद्धकाले पितृणां सांवत्सरिक-नित्यनैमित्तिकश्राद्धकाले हरिभुक्तशेषं विष्णोर्नैवेद्यशेषं अन्नपानादिभक्ष्यभोज्यादिकं भक्त्या पितृदेवानां पितृणां विश्वेदेवानां च तदुद्देशेन ब्राह्मणेभ्यो ददाति । तेन कर्त्रा दत्तैः सतिलैस्तिलदर्भादिविशिष्टैः पिण्डैः पार्वणादिभिः तस्य पितरः आकल्प-कोट्यः कल्पकोटिपर्यन्तं सुतृप्ताः सम्यक् तृप्ताः भवन्ति । तस्मात्पितृभ्यो नैवद्य-शेषेणैव श्राद्धं कार्यमिति ।।

**सालग्रामशिलायास्तु मौल्यमुद्धाटयेन्नरः ।**
**विक्रेता चानुमन्ता च यः परीक्ष्यानुमोदयेत् ।।**

**स्मृ.कृष्णाचार्य**—एवं पूजार्थं भगवत्सन्निहितसालग्राममाहात्म्यमनेकप्रकारेणो-क्त्वा क्रयविक्रयादिकरणे महादोषमाह स एव— **सालग्रामेत्यादिना** ।। यः पुरुषः सालग्रामशिलाया मौल्यं सालग्रामं परीक्ष्य समीचीनमिति तस्य मौल्यं एताव-त्क्रयद्रव्यमिति उद्धाटयेत् उद्धाटनं कुर्यात् । तथा तादृशसालग्रामस्य संसार-यात्रार्थं विक्रेता विक्रयकर्ता । अनुमन्ता सालग्रामक्रयद्रव्याद्यनुमन्ता । समीचीन-मिति तद्द्रव्यविषये यः सम्मतः । तथा यः सालग्रामं शास्त्रोक्तसालग्रामं सम्यक्

परीक्षां कृत्वा अनुमोदते तस्य सालग्रामस्य एतावत्क्रयद्रव्यं युक्तमिति अनुमोदयेद-ङ्गीकुर्यात् ।

**सर्वे ते नरकं यान्ति यावदाभूतसम्प्लवम् ।**
**अतश्च वर्जयेद्विद्वान् चक्रस्य क्रयविक्रयम् ।।**

**स्मृ.कृष्णाचार्य—सर्व इति** ।। ते सर्वे सालग्रामक्रयाद्यनुमन्तारः नराः नरकं यान्ति । कियत्कालमित्यत उक्तम् ।**यावदाभूतसंप्लवमिति** ।। यावदाभूतसंप्लवं पञ्चभूतात्मकब्रह्माण्डलयपर्यन्तम् । तस्मात्र कर्तव्यमित्याह— **अत इति** ।। अत-स्तत्क्रयविक्रयादौ बहुदोषसत्वात् चक्रस्य सालग्रामचक्रस्य विक्रयं विद्वान् वर्जयेत् त्यजेदित्यर्थः ।।

**किं बहूक्तेन कर्तव्यमर्चनं पापभीरुणा ।**
**चक्राभ्यां सह चक्रं च सदा पूज्यं मुमुक्षुभिः ।।**

**स्मृ.कृष्णाचार्य**—एवं सालग्राममाहात्म्यमभिधाय स्वकृतपापपरिहारार्थं मुक्त्यर्थं च सालग्रामस्यावश्यं पूजा कर्तव्येत्याह— **किं बहूक्तेनेति** ।। अर्चनं सालग्रामस्य पूजनं पापभीरुणा पूजाया अकरणे प्रत्यवायपापभीरुणा अधिकारिणा कर्तव्यम् । तत्र पूजने विशेषमाह— **चक्राभ्यामिति** ।। चक्रं सालग्रामचक्रं चक्राभ्यां द्वा-रकाचक्रद्वयेन सहितं सालग्रामं मुमुक्षुभिः मोक्षार्थिभिः सदा प्रतिदिनं पूज्यम् । तस्मात् द्वारकाचक्रद्वयसहितं सालग्रामं पूजयेत् । नतु तद्रहितसालग्रामं पूजयेदिति भावः । किं बहूक्तेनेति सालग्रामपूजायाः कर्तव्यतोक्तिं विना बहुना धर्मान्तरकरण-कथनेन किं प्रयोजनम् । अनेन सर्वधर्मफललाभ इति कस्यचिद्दृषेर्वाक्यमिति द्रष्टव्यम् ।।

**ये पिबन्ति सदा नित्यं सालग्रामशिलाजलम् ।**
**पञ्चगव्यसहस्रैस्तु प्राशितैः किं प्रयोजनम् ।।**

एवं सालग्राममाहात्म्यमभिधाय तत्तीर्थस्वीकारफलमाह— **ये पिबन्तीति** ।। साल-ग्रामशिलाजलं सालग्रामशिलातीर्थं ये भक्ताः स्नानसन्ध्यावन्दनभोजन-शयनादिषु कालेषु नित्यं प्रतिदिनं पिबन्ति प्राशनं कुर्वन्ति । पञ्चगव्यसहस्रैः सहस्रवारं कृत-पञ्चगव्यप्राशनैः किं फलम् ।

यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके ।
प्राशनात्पञ्चगव्यस्य दहत्यग्निरिवेन्धनम् ।।

इत्युक्तरीत्या सकृत्सेवितपापपरिहारकपञ्चगव्यस्य सहस्रवारं प्राशने यत्फलं तत्तत्र सालग्रामतीर्थप्राशनमात्रेण भवतीति भावः ।।

**कृष्णामृतमहार्णवः**

**[29]यथा पादोदकं पुण्यं निर्माल्यञ्चानुलेपनम् ।**
**नैवेद्यं धूपशेषं च आरार्तिश्च तथा हरेः ।। १०३ ।।**

**ताम्रपर्णी**—यथा पादोदकं पुण्यं यज्ञादिपुण्यप्रदं पापक्षयकरं च तथा निर्माल्यमित्यादियोजना । आरार्तिः मङ्गलार्तिः ।। १०३ ।।

**उमर्जी**—पादोदकवत्पवित्रकराण्यन्यानि सेवनीयानीत्याह— **यथेति** ।। पुण्यं सेवया पुण्यकरम् । तथा निर्माल्यं तुलसीदलम् । अनुलेपनं गन्धः । चशब्दः परस्परसमुच्चये ।। १०३ ।।

**उपेन्द्र**—पादोदकवत्पवित्रकराणि अन्यानि सेवनीयानीत्याह— **यथेति** ।। पुण्यं सेवया पुण्यकरं निर्माल्यम् ।। १०३ ।।

**कोनेरी**—पादोदकस्यातिपावनत्वमुक्त्वा भगवदर्पितवस्तूनां सेवनं सर्वपापपरिहारकमित्याह— **यथेति** ।। यथा पादोदकं पुण्यं अघनाशनद्वारा पुण्यप्रदं तथा निर्माल्यं अनुलेपनं आरार्तिश्च नैवेद्यं धूपशेषं च एतत्सर्वं सेवनया अघनाशनद्वारा पुण्यप्रदमिति ।। १०३ ।।

---

२९. न भयं विद्यते तस्य दिवि भौमान्तरिक्षजम् ।
विष्णोःशिरस्य शिरसि यस्याङ्गे च विलेपितम् ।।
भवन्ति सम्पदस्तस्य नापदस्तस्य दीयते ।
हरेर्दत्तावशेषेण धूपेन परिमार्जितः ।।
पिशाचतो भयं नास्ति न चाग्निभयं क्वचित् ।
धारयित्वा हरेः शीर्ष्णि निर्माल्यं पादयोर्जलम् ।।
यो [illegible] [illegible] विष्णोर्निर्माल्यवाहनः ।
नाशितं नाशमायाति ब्रह्महत्यादिपातकम् ।।    स्कन्दपुराणे ।।

**स्मृ.कृष्णाचार्य**—एवं भगवत्तीर्थमाहात्म्यमुक्त्वा तत्तौल्येन कर्तव्यान्भगवत्प्रीतिकरधर्मान् फलकथनपूर्वकमाह— **पादोदकं यथेति** ।। पादोदकं पूर्वोक्तप्रकारेण यथा पुण्यं पुण्यप्रदं तथा निर्माल्यं भगवत्समर्पिततुलस्यादिनिर्माल्यं पुण्यं पुण्यप्रदं तथा अनुलेपनं तद्गन्धाद्यनुलेपनम् । तथा नैवेद्यमन्नादिकम् । धूपशेषः आरार्तिः वर्त्यादिभिर्मङ्गलार्तिकरणं च पुण्यं तत्तुल्यपुण्यफलप्रदम् ।। १०३ ।।

**कृष्णामृतमहार्णवः**

***तुलस्यास्तु रजोजुष्टनैवेद्यस्य च भक्षणम् ।**
**निर्माल्यं शिरसा धार्यं [1]महापातकनाशनम् ।। १०४ ।।**

**ताम्रपर्णी**—नैवेद्यभक्षणे इत्थंभावमाह— **तुलस्या इति** ।। तुशब्दोऽवधारणे । तुलस्या रजोजुष्टनैवेद्यस्यैव भक्षणम् । नतु केवलस्य । चशब्दात्पादतीर्थसिक्तस्य भक्षणं महापातकनाशनमिति ग्राह्यम् ।

नैवेद्यशेषं तुलसीविमिश्रितं विशेषतः पादजलेन सिक्तम् ।
योऽश्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ।।
— इति वचनात् ।।

निर्माल्यं च शिरसा धार्यम् । तच्च महापातकनाशनमिति योज्यम् । यद्वा महापातकनाशनं निर्माल्यं शिरसा धार्यमिति योज्यम् ।। १०४ ।।

**उमर्जी**—नैवेद्यस्वीकारे विशेषमाह— **तुलस्या इति** ।। रजोजुष्टनैवेद्यग्रहणं निर्माल्यं च महापातकनाशनमिति सम्बन्धः । तुशब्देन—

नैवेद्यशेषं तुलसीविमिश्रितं विशेषतः पादजलेन सिक्तम् ।
योऽश्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ।।

---

*अयं श्लोकः स्कान्दे २२-३९-२४ ।

१. 'ब्रह्महत्यादिकं दहेत' इति स्मृ.कृ. तथा कृ. पाठः ।

३०.हरेर्नैवेद्यमन्नञ्च तुलसीदलमिश्रितम् ।
प्रतिग्रासं सोमपानं फलं तत्सममश्नुते ।।
यावज्जीवं न भुञ्जानो ध्रुवं मोक्षमवाप्नुयात ।। स्कान्दे २-२-३९-२४ ।।

इति प्रमाणप्रसिद्धं फलविशेषं सूचयति ।। १०४ ।।

**उपेन्द्र—** ।। **तुलस्या इति** ।। तुशब्देन नैवेद्यशेषं तुलसीविमिश्रितमिति प्रमाण-प्रसिद्धं फलविशेषं सूचयति । महापातकान्नाशयतीति ।। १०४ ।।

**कोनेरी—** ।। **तुलस्यास्त्विति** ।। यः अधिकारी विष्ण्वर्पिततुलस्या रजोजुष्टनैवेद्यस्य भक्षणं कृत्वा निर्माल्यं च स्वयं शिरसा धृत्वा भवद्भिर्निर्माल्यादिकं धार्यमिति अन्यानुपदिशति तस्य महापातकनाशनं भवतीति ।। १०४ ।।

**स्मृ.कृष्णाचार्य—** ।। **तुलस्या इति** ।। तथा तुलस्या रजोभिर्जुष्टनैवेद्यस्य भक्षणं कार्यम् । तथा श्रीतुलसीपुष्पादिभगवन्निर्माल्यस्य शिरःकर्णनाभ्यादौ धारणं कार्यम् । तत्फलमाह— **ब्रह्महत्यादिकं दहेदिति** ।। १०४ ।।

**कृष्णामृतमहार्णवः**

**भक्त्या वा यदि वाऽभक्त्या चक्रांकितशिलां प्रति ।**
**दर्शनं स्पर्शनं वाऽपि सर्वपापप्रणाशनम् ।। १०५ ।।**

**ताम्रपर्णी—**विष्णोः प्रत्यक्षतोऽदर्शनात्कथं तत्पादोदकलाभ इत्याशंकां परिहरन् अर्चित इत्युक्तभगवदर्चनाधिष्ठानमाह— **भक्त्येति** ।। भक्त्या विशिष्टभक्त्य तद्भिन्नभक्तिसामान्येन वा पश्चाद्भक्त्युदयेऽपि तत्काले भक्त्यभावेन वा चक्रांकित-शिलां प्रति तद्विषयकदर्शनं स्पर्शनं पूजनमपि सर्वपापप्रणाशकमित्यर्थः ।। १०५ ।।

**उमर्जी—**ननु सालग्रामतीर्थाद्विष्णुपादोदकं अन्यदेव किन्न स्यादित्यतः तत्स्वरूपं प्रतिपादयितुं चक्रांकितशिलामाहात्म्यमाह— **भक्त्येति** ।। भगवद्विषयकभक्त्या अभक्त्या मूढभक्त्येत्यर्थः ।। १०५ ।।

**उपेन्द्र—**तथा सालग्राममाहात्म्यमाह— **भक्त्येति** ।। माहात्म्यज्ञानपूर्वकं सुदृढ-स्नेहेन अवश्यकर्तव्यत्वज्ञापनाय अभक्त्येत्युक्तम् । नतु विधिः । चक्रांकितशिलां प्रति चक्रयुक्तसालग्रामशिलां प्रति ।। १०५ ।।

**कोनेरी—**यः पुरुषः भक्त्या सामान्यभक्त्या वा अ इति ब्रवीति श्रुतेः तस्मिन् सर्वोत्तम इति माहात्म्यज्ञानपूर्वकभक्त्या वा चक्रांकितशिलां पूजयति प्रतिदिन-मित्यर्थः । तथा दर्शनं वा स्पर्शनं वा करोति तस्य पापप्रणाशनं भवति ।।१०५ ।।

**स्मृ.कृष्णाचार्य**—सालग्रामस्पर्शने दर्शने महाफलवत्त्वात् तद्दर्शनं स्पर्शनं कार्यमित्याह— **भक्त्येति**।। भक्त्या नवविधभक्त्या । अभक्त्या तद्रहितैकदेशेन वा सालग्रामशिलां प्रति भगवत्सन्निहितसालग्रामशिलां प्रति दर्शनं स्पर्शनं वा यस्य भक्तस्य भवति । तस्य सर्वपापप्रणाशनं यतो भवति । अतस्तद्दर्शनं स्पर्शनं च कार्यमिति भावः ।। १०५ ।।

**क्लिन्नं पादोदकेनैव यस्य नित्यं कलेवरम् ।**
**तीर्थकोटिसहस्रैस्तु तस्य तैः किं प्रयोजनम् ।।**

**स्मृ.कृष्णाचार्य**—सालग्रामतीर्थप्राशनमुक्त्वा तत्स्नानफलमप्याह— **क्लिन्नमिति** ।। यस्य भक्तस्य कलेवरं आपादमस्तकं शरीरं पादोदकेन सालग्रामतीर्थेन क्लिन्नं अभिषिक्तं तस्य तैः तीर्थकोटिसहस्रैः गङ्गादिकोटितीर्थसहस्रैः किं प्रयोजनम् । तत्फलस्यानेनैव साध्यत्वात् । अतो विष्णुपादोदकेन शरीरं प्रतिदिनमभिषिक्तं कार्यमिति भावः ।।

**कृष्णामृतमहार्णवः**

**[1]सालग्रामोद्भवो देवो देवो द्वारवतीभवः ।**
**उभयोः स्नानतोयेन ब्रह्महत्यां व्यपोहति ।। १०६ ।।**

**ताम्रपर्णी**—केयं चक्राङ्कितशिलेत्यत आह— **शालग्रामेति** ।। शालग्रामपर्वतोद्भवो देवप्रतिमाभूतः शिलाविशेषः । शालग्रामे उद्भवो व्यक्तमत्स्यादिरूपी हरिः । द्वारवतीशिलायां व्यक्तो हरिश्चेत्याहुः ।। १०६ ।।

**उमर्जी**—तावता न पूर्वोक्तार्थसिद्धिरित्यत आह— **सालग्रामोद्भव इति** ।। देवः सालग्रामोद्भवः व्यक्तिः यस्य स तथा । द्वारावतीभवः द्वारकाशिलायां व्यक्तिः यस्य स तथोक्तः । उपलक्षणमेतत् । ब्रह्मादयो देवाः सन्निहिताः ।

तदुक्तं पञ्चरात्रे—

सालग्रामशिलाचक्रमाश्रित्य विबुधर्षभाः ।
तिष्ठन्ति चाज्ञया विष्णोः सर्वे ब्रह्मपुरःसराः ।। इति ।।

मिलितयोरुभयोरधिष्ठानयोः । अत अस्यैव विष्णुपादोदकत्वं सद्यःपवित्रकरणत्वं च सिद्धम् ।। १०६ ।।

**उपेन्द्र**—सालग्रामशिलातीर्थमाहात्म्यमाह— **सालग्रामोद्भव इति** ।। उद्भवः व्यक्तिर्यस्य । तत्र सन्निहित इत्यर्थः । उपलक्षणमेतत् । ब्रह्मादयो देवास्सन्निहिताः । तदुक्तं पञ्चरात्रे—

सालिग्रामशिलाचक्रमाश्रित्य विबुधर्षभाः ।
तिष्ठन्ति चाज्ञया विष्णोस्सर्वे ब्रह्मपुरस्सराः ।। इति ।।

द्वारावतीभवः द्वारावतीशिलायां व्यक्तिर्यस्य । उभयोरधिष्ठानयोर्देवः । ब्रह्महत्यां व्यपोहति परिहरति । अनेन सद्यःपावित्र्यकरत्वं विष्णुपादोदके सिद्धम् ।।१०६।।

**कोनेरी**—सालिग्रामशिलापूजावत् द्वारकाचक्रांकितमपि पूजनीयमित्याह— **सालग्रामोद्भव इति** ।। शालग्रामोद्भवः शालग्रामक्षेत्रोद्भवः देवः शिलासन्निहितो हरिः द्वारावतीभवो देवः चक्रांकसन्निहितो हरिः तयोः शिलाचक्रांकसन्निहितयोः स्नानतोयेन अभिषिक्तजलेनात्मदेहं संशोध्य ब्रह्महत्यां यादृच्छिकप्राप्तां नाशयति । न बुद्धिपूर्वकृताम् । तस्याः भोगेनैव नाश इति ।। १०६ ।।

**स्मृ.कृष्णाचार्य**—सालग्रामतीर्थस्य पुनर्महिमानमाह— **सालग्रामोद्भव इति** ।। सालग्रामशिलायां सन्निहितः देवो विष्णुः । तथा द्वारावतीभवः द्वारकाचक्रे सन्निहितो देवश्च तयोः उभयोः स्नानतोयेन सम्यक्पुरुषसूक्तादिभिः अभिषिक्तेन स्नानोदकेन शिर आदौ अभिषेकेन ब्रह्महत्यां व्यपोहति ।। १०६ ।।

## कृष्णामृतमहार्णवः

***म्लेच्छदेशेऽशुचौ वाऽपि चक्रांको यत्र तिष्ठति ।**
**योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे ।। १०७ ।।**

---

* अयं श्लोकः ब्रह्मपुराणे ।

पूजार्थमुत्तमं स्थानं शालग्रामं तदुच्यते ।
प्रतिमादौ षडावृत्त्या पूजिते यत्फलं लभेत् ।।
शालग्रामेऽर्चिते देवेऽप्येकावृत्त्यापि तल्लभेत ।। विष्णुधर्मोत्तरे ।।

**ताम्रपर्णी**—शालग्रामाद्याधिक्यमेवोपपादयति— **म्लेच्छेति** ।। चक्रांकः शालग्रामः द्वारकाचक्रं च । त्रीणि तथा त्रीण्यपि ।। १०७ ।।

**उमर्जी**— अतस्तयोः पावनकरत्वमाह— **म्लेच्छदेश इति** ।। वर्णधर्मव्यवस्थारहितदेशे । तदुक्तम् विष्णुना—

> चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते ।
> तं म्लेच्छदेशं जानीयान्नास्ति कृष्णमृगोऽथवा ।। इति ।।

अशुचौ प्रामायामपि वा । वसुन्धरे इति धरणीसम्बोधनम् । मम क्षेत्रमिति वराहवचनम् । वैष्णवक्षेत्रमित्यर्थः ।। १०७ ।।

**उपेन्द्र**—इतोऽपि सालिग्राममाहात्म्यमाह— **म्लेच्छदेश इति** ।। वर्णधर्मव्यवस्थारहितदेशे । तदुक्तं विष्णुना—

> चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते ।
> तं म्लेच्छदेशं जानीयान्नास्ति कृष्णमृगोऽपि वा ।। इति ।।

**अशुचौ प्रामायां वा । वसुन्धरेति धरिणीं प्रति सम्बोधनम् । मम क्षेत्रमिति वराहवचनम् ।। १०७ ।।**

**कोनेरी**—केवलं चक्रांकमत्युत्तममिति न । अपितु चक्रांकानामावासस्थानमप्युत्तममित्याह— **म्लेच्छदेश इति** ।। अशुचौ शुचिरहिते म्लेच्छदेशे म्लेच्छानामवस्थाने तत्प्रचुरग्राम इत्यर्थः । तस्मिन्ग्रामेऽपि यत्र यस्मिन्प्रदेशे चक्रांकः द्वारकाचक्रसन्निहितो हरिः । साल्ग्रामशिलासन्निहितश्च तथा जनानां मध्ये यश्चक्रांकः वैष्णव इति यावत् । यत्र यस्मिन् स्थाने तिष्ठति । एतानि त्रीणि स्थानानि मम क्षेत्रमावासस्थानमिति हे वसुन्धरे त्वं विद्धीति धरिणीं प्रति वराहोपदेशः ।। १०७ ।।

**स्मृ.कृष्णाचार्य**—साल्ग्रामस्य माहात्म्यं पूजार्थमाह— **म्लेच्छदेशेति** ।। म्लेच्छाधिष्ठितदेशे अशुचावपवित्रदेशे वा यत्र कुत्रचिद्देशे चक्रांको द्वित्रिचतुःपञ्चादिसमीचीनचक्रैः केसरिचक्रैः अंकितः युक्तः साल्ग्रामस्तिष्ठति । तथा तादृशदेशे त्रीणि योजनानि योजनत्रयपरिमितस्थलानि मे क्षेत्रमावासस्थानम् मम सन्निधानक्षेत्रमिति यावत् । वसुन्धरेति धरित्रीं प्रति वराहवचनम् ।। १०७ ।।

## कृष्णामृतमहार्णवः

**[३२]शालग्रामोद्भवो देवो [१]शैलं चक्रांकमण्डितम् ।**
**यत्रापि नीयते तत्र वाराणस्याः शताधिकम् ।। १०८ ।।**

**ताम्रपर्णी**—चक्रांको यत्र तिष्ठतीत्युक्त्या देशान्तरप्रणयने फलं नास्तीति प्रतीयतेऽत आह— **शालग्रामोद्भव इति** ।। शैलं शिलामयं यत्र नीयते तत्रापि वाराणस्याः शताधिकं फलमित्यर्थः । यद्वा तत्र तत्स्थानमपि वाराणस्याः शताधिकमित्यर्थः ।। १०८ ।।

**उमर्जी**—चक्रमण्डितम् चक्रसम्बन्धेनालंकृतम् । शैलं शिलासम्बन्धिभगवद्रूपं यत्रापि यत्र कुत्रापि शताधिकं फलं भवति ।। १०८ ।।

**उपेन्द्र**—चक्रांकमण्डितं चक्रांकेनालंकृतं शैलं शिलारूपं द्वारकाचक्रमित्यर्थः । शताधिकं फलं भवतीत्यर्थः ।। १०८ ।।

**कोनेरी**—उक्तं विशदयति— **शालग्रामोद्भव इति** ।। सालिग्रामोद्भवः सालिग्रामक्षेत्रोद्भवः देवः सालिग्रामसन्निहितो हरिः चक्रांकमण्डितं शैलं यत्र यस्मिन् गृहे वसद्भिः सद्भिः गृहं प्रति नीयते पूजार्थमिति शेषः । तत्र तस्मिन् गृहे वसतां वाराणस्याः वासादधिकं फलं भवति ।। १०८ ।।

**स्मृ.कृष्णाचार्य**—पुनरपि तस्याधिक्यमाह— **सालग्रामोद्भव इति** ।। शिलाचक्रांकमण्डितः शिलासम्बन्धिचक्रांकेन मण्डितः अलंकृतः सालग्रामोद्भवः सालग्रामसन्निहितो देवो मत्स्यादिरूपी यत्र यस्मिन्देशे देशान्तरं नीयते । स देशोऽपि वाराणस्याः काश्याः सकाशाच्छताधिकः शतगुणाधिक इति ।। १०८ ।।

---

१. 'शिलाचक्रांकमण्डितः' इति स्मृ.कृ. तथा कृ. पाठः ।

३२. शालग्रामशिला यत्र तत्तीर्थं योजनत्रयम् ।
तत्र दानञ्च होमश्च सर्वं कोटिगुणं भवेत् ।। १४४ ।।
शालग्रामसमीपे तु क्रोशमात्रं समन्ततः ।
कीटकोऽपि मृतो याति वैकुण्ठभवनं परम् ।। १४५ ।। पाद्म ३-३१ ।।

## कृष्णामृतमहार्णवः

**[33]शालग्रामोद्भवो देवो देवो द्वारावतीभवः ।**
**उभयोस्सङ्गमो यत्र तत्र मुक्तिर्न संशयः ।। १०९ ।।**

**ताम्रपर्णी**—न केवलं ब्रह्महत्यां व्यपोहति । किन्तु मुक्तिश्च भवतीति वदन् शालग्रामचक्रांकितोभयसङ्गमनियममाह— **शालग्रामेति** ।। यत्र पुरुषे सङ्गम इत्यर्थः ।। १०९ ।।

**उमर्जी**—उभयोर्मिलितयोरेव फलसाधनत्वमाह— **सालग्रामोद्भवो देव इति** ।। उभयोरधिष्ठानयोः सङ्गमः यत्र पुरुषे तत्र पापान्मुक्तिर्भवति ।। १०९ ।।

**उपेन्द्र**—मिलितफलमाह— **सालग्रामोद्भव इति** ।। यत्र यस्मिन्पुरुषे उभयोरधिष्ठानयोरसङ्गमः सम्बन्धस्तत्र तस्मिन्मुक्तिर्भवतीत्यर्थः ।। १०९ ।।

**कोनेरी**—तदेव दार्ढ्यार्थं पुनराह— **सालिग्रामोद्भव इति** ।। शालग्रामोद्भवो देवः शालग्रामशिला द्वारावतीभवो देवश्चक्रांकितम् । उभयोस्सङ्गमः मेलनं यत्र यस्मिन् सतां गेहे वर्तते । तस्मिन्गृहे वसतां मुक्तिर्भवति । संशयो नास्ति ।। १०९ ।।

**स्मृ.कृष्णाचार्य**—द्वारकाचक्रयुक्तसालग्रामपूजनस्य फलविशेषमाह— **सालग्रामोद्भव इति** ।। सालग्रामे सन्निहितो देवो हरिः द्वारकाभवो द्वारकाचक्रे सन्निहितो देवः तयोरुभयोर्मेलनं यत्र यस्मिन्देशे वा गृहे वा चक्रांकयुक्तसालग्रामस्तिष्ठति तत्पूजनेन मुक्तिरूपं फलं भवतीति भावः ।। १०९ ।।

रुद्रः—

**शङ्खोदकं च नैवेद्यं निर्माल्यं पादयोर्जलम् ।**
**आरार्तियूपशेषश्च ब्रह्महत्यापहारकाः ।।**

---

33 नामसपूजने श्रेष्ठा शालग्रामोद्भवा शिला ।
द्वारकाजातचक्रांका शिला श्रेष्ठा तथैव च ।।
तयोश्च सङ्गमं कृत्वा पूजयन् मुक्तिभाग् भवेत् ।।
—वीरमित्रोदयाहृतस्कान्दवचनम् ।।

**स्मृ.कृष्णाचार्य—**न केवलं तीर्थप्राशनमात्रस्य फलाधिक्यम् । किन्तु तद्भ्रामित-शङ्खोदकादिषण्णां प्रत्येकं ब्रह्महत्यापहारकत्वात्तत्सेवनं सदा कार्यमिति रुद्रवाक्य-माह— **शङ्खोदकमिति**।। हरेर्भ्रामितशङ्खोदकम् । नैवेद्यं निवेदितमन्नादिकम् । निर्माल्यं श्रीतुलस्यादि । पादयोर्जलं सालग्रामतीर्थम् । आरार्तिः वर्त्यादिना मङ्गलार्तिः । धूपशेषः अङ्गारादिः । प्रत्येकं ब्रह्महत्यापहारका इति तत्सेवनं कार्यमिति भावः ।।

**शङ्खमध्ये स्थितं तोयं भ्रामितं केशवोपरि ।**
**अङ्गलग्नं मनुष्याणां ब्रह्महत्यायुतं दहेत् ।।**

**स्मृ.कृष्णाचार्य—**विशिष्य शङ्खोदकफलमाह— **शङ्खमध्य इति** ।। केशवोपरि आपादमौलिपर्यन्तं भ्रामितं शङ्खोदकं मनुष्याणां पापकृतां अङ्गलग्नं शिरआद्यवयवेषु लग्नं प्रोक्षणेन सम्बद्धं चेत् ब्रह्महत्यायुतं ज्ञानतोऽज्ञानतः कृतानां ब्रह्महत्यानामयुतं दशसहस्रं दहेत् भस्मीकुर्यादिति ।।

**न ग्रहा न च कूष्माण्डाः पिशाचोरगराक्षसाः ।**
**दृष्ट्वा शङ्खोदकं मूर्ध्नि विद्रवन्ति दिशो दश ।।**

**स्मृ.कृष्णाचार्य—**पुनः शङ्खोदकफलमाह स एव ।। **न ग्रहा इति** ।। मूर्ध्नि यस्य तीर्थं प्रोक्षितमस्ति । तस्य ग्रहाः नवग्रहाः पीडका न भवन्ति । तथा कूष्माण्डाः भूतगणाः तथा पिशाचाः वेतालादिपिशाचाः उरगाः दुष्टसर्पाः राक्षसा प्रसिद्धराक्षसाः बाधका न भवन्ति । किन्तु मूर्ध्नि धृतं तद्दृष्ट्वा एते सर्वे पिशाचाद्याः दश दिशो भयाद्विद्रवन्ति। तस्माच्छङ्खोदकं धारयेदिति ।।

**षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्तितम् ।**
**विष्णोर्निवेदितान्नेन तत्फलं भुञ्जतां कलौ ।।**

**स्मृ.कृष्णाचार्य—**पूर्वोक्तषट्सु मध्ये शङ्खोदकमाहात्म्यमुक्त्वा हरिभुक्तनैवेद्य-माहात्म्यमाह— **षड्भिरिति** ।। मासोपवासैरुपक्रमतिथिमारभ्य मासपर्यन्तं प्रतिदिनं क्रियमाणमासोपवासाख्यव्रतैः । षड्भिः षण्मासैः प्रतिदिनं क्रियमाणोपवासैः यत्फलं व्रतशास्त्रेषु परिकीर्तितमभिहितम् । कलौ विष्णोर्निवेदितान्नेन भुञ्जतां पुरुषाणां तत्फलं भवति । तस्मान्नैवेद्यभक्षणं प्रशस्तमिति ।।

**विष्णोर्निर्माल्यशेषेण योऽङ्गानि परिमार्जयेत् ।**
**दुरितानि विनश्यन्ति व्याधयो यान्ति खण्डशः ।।**

**स्मृ.कृष्णाचार्य**—निर्माल्यमाहात्म्यमाह— **विष्णोरिति** ।। विष्णोर्निर्माल्यशेषेण विष्णोः समर्पिततुलस्यादिनिर्माल्यशेषेण विशेषेण यः पुरुषः स्वाङ्गानि परिमार्जयेत् स्वाङ्गेषु धारयेत् । तस्य दुरितनिवृत्त्यर्थिनो दुरितानि विनश्यन्ति । व्याधिनिवृत्त्यर्थिनः व्याधयः खण्डशः तिलशः यान्ति नश्यन्ति । तस्मान्निर्माल्यं प्रशस्तमिति ।।

**अकालमृत्युमथनं सर्वव्याधिविनाशनम् ।**
**सर्वदुरितोपशमनं विष्णुपादोदकं शुभम् ।।**

**स्मृ.कृष्णाचार्य**—एवं निर्माल्यमाहात्म्यमुक्त्वा तत्तीर्थमाहात्म्यमाह— **अकालमृत्युमथनमिति** ।। अकालमृत्युमथनं बाल्ययौवनकौमाराद्यवस्थासु प्राप्तापमृत्युमथनं सर्वव्याधिविनाशनं सर्वेषं व्याधीनां क्षयापस्मारकुष्ठादीनां व्याधीनां विनाशनं नाशकम् । किं वहुना सर्वेषां मनुष्यदेहे सम्भावितानां नानाविधदुरितानां च शमनं शान्तिकरम् । तत्किमित्यत उक्तम् ।। **विष्णुपादोदकमिति** ।। विष्णोः सालग्रामसन्निहितविष्णोः पादोदकमभिषिक्तोदकम् । तस्य तादृशत्वं कुत इत्यत उक्तम् ।। **शुभमिति** ।।

**कौतुकं शृणु मे देवि विष्णोर्निर्माल्यवह्निना ।**
**तापितं नाशमायाति ब्रह्महत्यादिपातकम् ।।**

**स्मृ.कृष्णाचार्य**—विष्णोरारार्तिमहिमानमाह— **कौतुकमिति** ।। हे देवीति उमां प्रति रुद्रवचनम् । हे देवि कौतुकमाश्चर्यं शृणु । तत्किमित्यतः उक्तम् ।। **विष्णोरिति** ।। विष्णोः परमात्मनः अर्चनसमये कृतमङ्गलार्तिवह्निज्वालातापितं पूजाकर्तुर्भक्तस्य शिरआद्यङ्गादिकं तप्तं यस्य तस्य ब्रह्महत्यादिपातकं ब्रह्महत्यासुरापानादिपातकं नाशमायाति नष्टं भवतीत्यर्थः । इत्येतत्कौतुकं तस्मात्सर्वैस्तत्कार्यमिति ।।

**विष्णोरङ्गारशेषेण योऽङ्गानि परिमार्जयेत् ।**
**दुरितानि विनश्यन्ति व्याधयो यान्ति खण्डशः ।।**

**स्मृ.कृष्णाचार्य**—विष्णोर्धूपशेषाङ्गारमाहात्म्यमाह— **विष्णोरङ्गारेति** ।। विष्णोरङ्गसमर्पितधूपयुक्ताङ्गारशेषेण शान्ताङ्गारेण यः भक्तः अङ्गानि ललाटाद्यङ्गानि परि-

मार्जयेत् लेपयेत् । तस्य पुरुषस्य दुरितानि दुःखकराणि पापानि विनश्यन्ति नाशं प्राप्नुवन्ति । तस्य व्याधयो नानाविधाः खण्डशो यान्ति गच्छन्ति । नाशं प्राप्नुवन्ति । तस्मात्तद्धारणं कार्यमिति ।।

### कृष्णामृतमहार्णवः

**हरिणा मुक्तिदानीह मुक्तिस्थानानि सर्वशः ।**
**स यस्य सर्वभावेषु तस्य तैः किं प्रयोजनम् ।। ११० ।।**

**ताम्रपर्णी**—शालग्रामचक्रांकितपूजकस्य मुक्तिरित्युक्तम् । अयं च प्रतिमाविशेषनियमः । सर्वत्र पूजाऽशक्तानामेव । सर्वत्रोपासकानां तु न तन्मात्रावश्यकत्वमित्याह— **हरिणेति** ।। इह लोके यानि मुक्तिप्रदानि श्रीरङ्गशालग्रामादिस्थानानि क्षेत्राणि तानि सर्वशो हरिणा सन्निहितेन ज्ञानेन निमित्तेन मुक्तिदानि स हरिर्यस्याधिकारिविशेषस्य सर्वभावेषु सर्वेषु पदार्थेषु ज्ञातस्तस्य तैर्मुक्तिक्षेत्रैः किं प्रयोजनमित्यर्थः ।। ११० ।।

**उमर्जी**—ननु जडभूतसालग्रामादेर्मुक्तिसाधनत्वं कथमित्यत आह— **हरिणेति** ।। इह भूमौ विद्यमानानि मुक्तिस्थानानि । स्थानशब्दो निग्रहस्थानमितिवन्निमित्तार्थः । मुक्तिनिमित्तानि सालग्रामादीनि स्वान्तस्थहरिणा मुक्तिदानि । अज्ञस्येति शेषः । नतु ज्ञानिनः । तस्य वैय्यर्थ्यमेवोपपादयति— **स इति** ।। यस्य पुरुषस्य सर्वभावेषु भावो भावना अनुभवः सर्वानुभवेषु । सर्वशः नियामकत्वादिसर्वप्रकारेण सः भगवान् विषयो भवति । तस्य सर्वत्रविदितात्मनः तैर्जडैः किं प्रयोजनं व्यर्थमित्यर्थः । "प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्" इत्युक्तेः ।। ११० ।।

**उपेन्द्र**—ननु कथं जडभूतसालिग्रामादेर्मुक्तिसाधनत्वमित्यत आह— **हरिणेति** ।। इह भूमौ विद्यमानानि मुक्तिस्थानानि । स्थानशब्दो निग्रहस्थानमित्यादाविव निमित्तार्थः । पापान्मुक्तिसाधनानि स्वान्तस्थहरिणा मुक्तिदानीत्युच्यन्ते । तदन्तस्थः भगवानेव मुक्तिद इति भावः । अतोऽज्ञानिना तद्भजनं कार्यम् । ज्ञानिनः न तदपेक्षेत्यत आह— **स इति** ।। यस्य ज्ञानिनः सर्वभावेषु भावोऽनुभवः सर्वानुभवेषु सर्वशः सर्वप्रकारेण नियामकत्वादिनेत्यर्थः । स भगवान्विषयो भवतीत्यर्थः ।

तस्य भगवद्विषयकानुभवयुक्ताधिकारिणः तैर्जडभूताधिष्ठानैः किं प्रयोजनं व्यर्थमित्यर्थः । "देवाश्च न शिलामात्राः" इत्युक्तेः ।। ११० ।।

**कोनेरी**—एतावताल्पाधिकारिणां कर्तव्यतां अभिधाय इदानीमुत्तमाधिकारिणां स्थितिमाह— **हरिणेति** ।। इह अधिकारिवर्गे । योग्यतया मुक्तिदानि मुक्तिसाधनानि श्रवणादीनि । तथा मुक्तिस्थानानि ।

आत्मेत्येव परं देवमुपास्य हरिमव्ययम् ।
केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ।।
अत्रैव तु स्थितिस्तेषामन्तरिक्षे तु केचन ।
केचित्स्वर्गे महर्लोके जने तपसि चापरे ।।
केचित्सत्ये महाज्ञानाः गच्छन्ति क्षीरसागरम् ।।

इति भाष्योक्तरीत्या सर्वशः सर्वाणि मुक्तिस्थानानि हरिणा कथितानि । सः हरिर्यस्य एकान्तभक्तस्य सर्वभावेषु सर्ववस्तुषु व्याप्तोपासनया प्रत्यक्षीभूतः । तस्यैकान्तभक्तस्य तैर्मुक्तिसाधनैश्च किम् किं प्रयोजनम् तेषां किमपि नापेक्षितम् । उक्तमेतत्सप्तमस्कन्धे—"मुक्तिस्तेषां बहुमता नारसिंहापरैः किमिति ।। चतुर्थेऽपि— "एकान्तभक्तः को वाञ्छेत्पादमूलं विना हरिः" इति ।। "एकान्तानां न कस्यचित् अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम्" इति च । अतो—

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।

इत्युक्तनवविधभक्तिलक्षणान्तर्गतप्रतिमाशालग्रामपूजनादिकं अल्पाधिकारिभिरवश्यं कर्तव्यमित्युक्तं भवति ।। ११० ।।

**स्मृ.कृष्णाचार्य**—सालग्रामतीर्थगङ्गातीर्थानां मुक्तिफलत्वमुक्तम् । तेषां जडत्वात्तदभिमानिनामस्वतन्त्रत्वात्तद्गतहरेरेव फलप्रदातृत्वमिति भावयतां भक्तानां सर्वतीर्थफललाभात्तत्तीर्थैः किं प्रयोजनमित्याह— **हरिणेति** ।। सर्वशो मुक्तिस्थानानि सर्वत्र विद्यमानानि काश्यादिमुक्तिस्थानानि । तीर्थस्नानानि मुक्तिदानि न भवन्ति । किन्तु तद्गतहरिणा मुक्तिदानि हरिसन्निधानप्रेरणादिनैव मुक्तिदानि नतु केवलतीर्थानि । "यस्तीर्थबुद्धिः सलिले न कर्हिचित्" इति भागवतोक्तेः । तस्मात्सर्वभावेषु सर्ववस्तुषु तन्नियामकतया सदा हरिरस्ति इति यस्य भावना

तस्याधिकारिणस्तैस्तीर्थैः किं प्रयोजनम् । तादृशतीर्थस्नानैः किं प्रयोजनम् । सर्वत्र भगवद्भावनाया आधिक्यात्सर्वतीर्थेषु तदनुसन्धानं कर्तव्यमिति भावः ।। ११० ।।

कृष्णामृतमहार्णवः

**हरिर्याति हरिर्याति दस्युव्याजेन यो वदेत् ।**
**सोऽपि [1]सद्गतिमाप्नोति गतिं सुकृतिनो यथा ।। १११ ।।**

**ताम्रपर्णी**—आदरनैरन्तर्याभ्यां नामकीर्तनस्य महाफलप्रदत्वं कैमुत्येनाह– **हरिरिति** ।। यातीत्यतः परं इतिशब्दोऽध्याहार्यः । दस्युव्याजेनेत्यादेः । हरिशब्दोच्चारणे दस्युः प्रसञ्जकमात्रम् । उच्चारिते च हरिशब्दे योग्यानां नामस्वामितया भगवत्स्मरणोदयादुक्तां सद्गतिमाप्नोतीत्यर्थः ।। **सुकृतिन इति** ।। भक्तिपूर्वं नामस्मरणकारिण इवेत्यर्थः । यद्वा सुकृतिनः पुण्यकर्मिणो यथा । क्रमेण यान्ति तथेत्यर्थः ।। १११ ।।

**उमर्जी**—वैरादिनिमित्तेनापि भगवद्भक्त्या कीर्तनं फलसाधनमित्याह— **हरिरिति** ।। हरतीति हरिः । दस्युव्याजेन निमित्तानुबन्धेनेत्यर्थः । भक्तियुक्तत्वज्ञापनाय हरिरिति द्विवारोक्तिः । सुकृतिनः भक्ताः गतिं यथा यान्ति । तथा सोऽपि द्वेषोपसर्जनभक्त्या नामोच्चारणं कुर्वन्नपि यातीत्यर्थः ।। १११ ।।

**उपेन्द्र**—वैरादिनिमित्तकस्नेहेनापि भगवद्भजनं फलसाधनमित्याह— **हरिरिति** ।। भक्तिलक्षणादराद् द्विरुक्तिः । दस्युव्याजेन वैरनिमित्तानुबन्धेनेत्यर्थः । सोऽपि वैरानुबन्धपूर्वकभक्त्या नामोच्चारणं कुर्वन्नपि न केवलभक्ताः ।। १११ ।।

**कोनेरी**—हरेर्नामैव प्रसिद्धचोर इत्युक्तं दृढयति– **हरिर्यातीति** ।। नामोच्चारणमात्रेण पापौघः नाशं याति । हरिनामैव दस्युः पापसंघाततस्कर इति दार्ढ्येन युक्तो योऽधिकारी व्याजेन वदेत् नामोच्चारणं कुर्यात्सोऽधिकारी यथा सुकृतिनः उत्तमज्ञानिनः गतिं गम्यते प्राप्यत इति गतिः मुक्तिः तां प्राप्नोति । तथा सद्गतिं सतां गतिप्रदं हरिं याति ।। १११ ।।

**स्मृ.कृष्णाचार्य**—सर्वत्र विद्यमानं हरिं चोरादिगमनागमनादिव्याजेन यः कीर्तयति । तस्य सुकृतिनो लोकप्राप्त्युक्तेः येन केनापि प्रकारेण तत्कीर्तनं कर्तव्यमित्यत्र प्रमाणमाह— **हरिरिति**।। यः चोरादिगमनागमनादि दृष्ट्वा तद्व्याजेन हरिर्याति हरिर्यातीति चोराद्युक्तिव्याजेन हरिरिति हरेर्नाम यो वदेत् कीर्तयेत् । उपलक्षणमेतत् । "सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव च" इत्युक्तरीत्या परिहासादिना वा हरिरिति नाम वदेत् । यथा सुकृतिनः अनेकपुण्यकृतः गतिं पुण्यगतिं यान्ति सोऽपि तद्गतिं पुण्यकृतां गतिं याति प्राप्नोति । तस्मात्केनचिद्व्याजेन वा तत्कीर्तनं महाफलमिति तत्कीर्तनं कार्यमिति ।। १११ ।।

**कृष्णामृतमहार्णवः**

**[३४]वासुदेवं परित्यज्य योऽन्यं देवमुपासते ।**
**त्यक्त्वाऽमृतं स मूढात्मा भुङ्क्ते हालाहलं विषम् ।। ११२ ।।**

**ताम्रपर्णी**—आद्यश्लोके उपक्षिप्तं ध्यानं स्वातन्त्र्येणान्यदेवतोपासनत्यागपूर्वं कार्यमिति सप्तभिः श्लोकैस्सदृष्टान्तमाह— **वासुदेवमित्यादिना** ।। परित्यज्य अनुपास्य योऽन्यं देवमुपासते । यथामृतं परित्यज्य यो हालाहलनामकं कालकूटं विषं भुङ्क्ते तथेति योज्यम् ।। ११२ ।।

**उमर्जी**—एवमर्चनादिसाधनैर्भगवद्भजनमेव पुरुषार्थसाधनं नान्यदेवताभजनम् । अनर्थसाधनत्वात्तस्य हेयत्वं अनेकलौकिकवैदिकदृष्टान्तेन उपपादयति— **वासुदेवमित्यादिना** ।। परित्यज्य नास्तीत्यादिवादेन ।

मुख्यत्यागो हरेरेषः यन्नास्तीति वदेदमुम् ।
समं वा ह्यधिकं वापि ब्रूयादैक्यमथापि वा ।। इत्युक्तेः ।।

मूढात्मा मूढबुद्धिः । स्वसुखसाधनभगवद्भजनशून्य इत्यर्थः । मोक्षलक्षणममृतं त्यक्त्वा तमोलक्षणं हालाहलाख्यं विषं भुङ्क्ते ।। ११२ ।।

---

३४. नारायणं परित्यज्य योऽन्यं देवमुपासते ।
स्वपतिं नृपतिं हित्वा यथा स्त्री पुरुषाधमम् ।। वृद्धहारीतस्मृतौ ८-२७४
तदावरणरूपेण यजेद्देवान् समन्ततः ।
अन्यथा नरकं याति यावदाभूतसम्प्लवम् ।। वृद्धहारीतस्मृतौ ८-२७७ ।।

**उपेन्द्र**—एवमर्चनादिसाधनैर्भगवद्भजनमन्तरेणान्यदेवताभजनस्यानर्थसाधनत्वाद्धेयत्वमनेकलौकिकहेयदृष्टान्तेनोपपादयति— **वासुदेवमित्यादिना** ।। वासुदेवपरित्यागस्तु—

मुख्यत्यागो हरेरेषः यन्नास्तीति वदेदमुम् ।
समं वा ह्यधिकं वापि ब्रूयादैक्यमथापि वा ।।

इत्यादिप्रमाणान्तरैरेवावगन्तव्यः । मूढात्मा स्वसुखसाधनभगवज्ज्ञानशून्यः । मोक्षलक्षणममृतं त्यक्त्वा तमोलक्षणं हालाहलाख्यं विषं भुङ्क्ते ।। ११२ ।।

**कोनेरी**—एवं हर्युपासकानामपुनरावर्तिलक्षणमोक्षफलमुक्त्वा सर्वोत्तमत्वेनान्यदेवोपासकानामयोग्यानामन्धन्तमोरूपानर्थफलमाह— **वासुदेवमित्यारभ्य कूपं खनति दुर्मतिरित्यन्तेन** ।। यः वासुदेवं परित्यज्य । न विद्यते मृतिर्यस्मात्सोऽमृतो वायुः । "अतिरोहितविज्ञानाद्वायुरप्यमृत" इत्युक्तेः । तं च त्यक्त्वा । अन्यदेवं सर्वोत्तमत्वेनोपासते । सः मूढात्मा मूढं मिथ्याभूतं आत्मा स्वरूपं यस्य स तथा। हालाहलं विषं तन्नाम विषपानजन्यदुःखसदृशं दुःखं नित्यनरकं भुङ्क्ते अनुभवति ।।

**स्मृ.कृष्णाचार्य**—अर्चितः संस्मृत इत्यादिना भगवतः यस्यार्चनं कर्तव्यमित्युक्तं तत्परित्यागेनान्यभजने दोषमाह उत्तरश्लोकैः ।। **वासुदेवमिति** ।। वासुदेवं पूर्वोक्तरीत्या अर्चनस्मरणध्यानतत्कीर्तनतीर्थस्नाननैवेद्यभक्षणनिर्माल्यधारणादिना मोक्षप्रदं श्रीनारायणं परित्यज्य अनेन किं प्रयोजनमित्युक्त्वा यः पुरुषः अन्यदेवं ब्रह्मरुद्रादिकं मोक्षार्थं स्वातन्त्र्येणोपासते सेवते । स मूढात्मा मूढं मनो यस्य सः अज्ञानी मिथ्याज्ञानी च । अमृतं वासुदेवप्रसादसाध्यमोक्षरूपामृतं त्यक्त्वा तद्रहितस्सन् हालाहलं कालकूटविषं भुङ्क्ते नरकं अनुभवति । वासुदेवं परित्यज्य योऽन्यं देवमित्यत्र वासुदेवस्य त्यागो नाम "यस्तित्याज सचिविदम"त्येतरेयभाष्ये

मुख्यत्यागो हरेरेष यन्नास्तीति वदेदमुम् ।
तत्समं वाधिकं वापि ब्रूयादैक्यमथापि वा ।।
स एव मुख्यतस्त्यागो वासुदेवस्य कीर्तितः ।। इति ।।

तथा—

रमाब्रह्मादिकानां च तारतम्यानभिज्ञता ।
संशयश्चोक्ततत्त्वेषु जगन्मिथ्यात्वदर्शनम् ।।

अस्मृतिर्वासुदेवस्य तद्भक्तानां च निन्दनम् ।
द्वितीय एष त्यागस्तु विष्णावेव प्रकीर्तितः ।।
निषिद्धकर्मकरणं विहितस्य च वर्जनम् ।
त्यागस्तृतीयोऽथ हरेश्चतुर्थोऽयोग्यपूरुषे ।।
उपदेशः केशवस्य यथाशब्दोदितः क्रमात् ।।
—इत्युक्तो द्रष्टव्यः ।। ११२ ।।

कृष्णामृतमहार्णवः

**त्यक्त्वाऽमृतं यथा कश्चिदन्यपानं[1] पिबेन्नरः ।**
**तथा हरिं परित्यज्य योऽन्यं देवमुपासते ।। ११३ ।।**

**ताम्रपर्णी**—नन्वमृतं परित्यज्य विषपाता मूर्ख एव स्वमरणाज्ञानात् देवतापूजकस्तु तत्काले सुखभोक्ता न तथेत्याह— **त्यक्त्वेति** ।। अन्यपानं निषिद्धं सुरादिलक्षणं पेयम् । तत्काले सुरायाः सुखहेतुत्वेऽपि बुद्धिव्यामोहनद्वारा ततः शिरश्छेदकार्यकरत्ववत् । अन्यदेवतोपासनस्यापि ततो नरकादिहेतुत्वमिति भावः ।। ११३ ।।

**उमर्जी**—अन्येषां पानं पेयं मद्यं यथा निन्द्यम् ।। ११३ ।।

**उपेन्द्र**— अन्यपानमन्येषां चण्डालादीनां पानं पेयं मद्यं यथा निन्द्यम् ।। ११३।।

**कोनेरी**— अल्पाधिकारिणां वैषयिकं मनो निवर्तयितुं सर्वानुभवसिद्धहेयदृष्टान्तमाह— **त्यक्त्वेति** ।। कश्चित् नीचोत्तमोऽयोग्यो नरः मनुष्यः । कशब्दः कुत्सने । अमृतं गोक्षीरं हित्वा अन्यपानं अन्यैः श्वपचादिभिः क्रियमाणं पानं मद्यं यथा पिबेत् पिबति । यो वासुदेवं परित्यज्यान्यदेवमुपासते । सोऽपि मद्यपानिवदयोग्य इति । क्षीरशब्दस्यामृतवाचकत्वं तु अमृताब्धिमथन इत्याचार्यैरुक्तम् ।। ११३ ।।

**स्मृ.कृष्णाचार्य**—नीचदृष्टान्तमाह— **त्यक्त्वामृतमिति** ।। यथा अज्ञानी पानार्थे स्थितं अमृतं प्रसिद्धामृतं परित्यज्य अन्यपानं अन्यैर्नीचैर्पानं पेयं मद्यादि पिबेत् । तथा तद्वद्धरिं परित्यज्य अन्यं देवमुपासते सः तत्तुल्य इति । स्तन्यपानमिति पाठे अयमेवार्थः ।। ११३ ।।

---

१. 'स्तन्यपानं' इति स्मृ.कृ. तथा कृ. पाठ. ।

**कृष्णामृतमहार्णवः**

**स्वधर्मं तु परित्यज्य परधर्मं यथा चरेत् ।**
**तथा हरिं परित्यज्य योऽन्यं देवमुपासते ।। ११४ ।।**

**ताम्रपर्णी—**ननु देवतोपासनस्यापि विहितत्वादनुष्ठेयमित्यत आह— **स्वधर्ममिति**।। स्ववर्णाश्रमविहितं धर्मं परित्यज्य परधर्मं यथा चरेत् । तथाऽत्ममोक्षसाधनं स्वतन्त्रं परित्यज्यान्यदेवतोपासकोऽपि स्वयोग्याननुष्ठातृत्वाद्भयभागेव। 'परधर्मो भयावह' इत्युक्तेः । अन्यदेवतोपासनविधिस्तु तत्परिवारत्वेनोपासनापर एवेति भावः ।। ११४ ।।

**उमर्जी—**परधर्मं परेषां चण्डालानां धर्मं आचरेद्यथानर्थो भवति । "परधर्मो भयावहः" इत्युक्तेर्गीतायाम् । चोऽवधारणे । अन्यं देवमेवोपासते ।। ११४।।

**उपेन्द्र—**परधर्मं परेषां वर्णबाह्यानां धर्मम् । यथानर्थप्राप्तिः "परधर्मो भयावहः" इति गीतोक्तेः ।। ११४ ।।

**कोनेरी—**यः ब्राह्मणः स्वधर्मं स्नानसन्ध्याहर्यर्चनादिरूपं धर्मं परित्यज्य । परधर्मं यवनादिधर्मं यथा आचरेत् । यः हरिं परित्यज्यान्यदेवमुपासते स तथेति । "न श्ववृत्त्या कदाचन" इत्युक्तेः । "श्ववृत्तिर्नीचसेवनम्" । "न नीचो यवनात्पर" इति ज्ञेयम् ।। ११४ ।।

**स्मृ.कृष्णाचार्य—**यः ब्राह्मणादिवर्णाश्रमवान्पुरुषः स्वस्वविहितं ब्राह्मणादिधर्मजातं परित्यज्य त्यक्त्वा परधर्मं वर्णाश्रमादिबाह्यानां मद्यपानादिश्वपचधर्मं समाचरेत् । यथा कश्चिज्जनः हरिं परित्यज्यान्यदेवमुपासते स तत्तुल्य इति ।। ११४ ।।

**कृष्णामृतमहार्णवः**

**यथा गङ्गोदकं त्यक्त्वा पिबेत्कूपोदकं नरः ।**
**तथा हरिं परित्यज्य योऽन्यं देवमुपासते ।। ११५ ।।**

**ताम्रपर्णी—**हर्युपासनस्य गङ्गाजलपानवदन्तःकरणशुद्धिपरत्वात्तदेवानुष्ठेयं नान्यदिति सदृष्टान्तमाह— **यथा गङ्गेति** ।। कूपोदकपाने पिपासा पुनरस्तीति नात्यन्तिकी तृप्तिः। तथाऽन्यदेवतोपासनयेति भावः ।। ११५ ।।

**कोनेरी**—यः विवेकशून्यः गङ्गोदकं भागीरथीजलं हित्वा धिक्कारेण परित्यज्य कूपोदकं कुत्सितजलं यथा पिबेत् पानं करोति । यः हरिं परित्यज्यान्यं देवमुपासते स तथेति । चशब्द एवार्थे ।। ११५ ।।

**स्मृ.कृष्णाचार्य**—यथा लोके मूढो नरः गङ्गोदकं पानार्थं स्थितं भागीरथीजलं त्यक्त्वा कूपोदकं कुत्सितदेशे विद्यमानं निषिद्धोदकं पिबेत् पानं कुर्यात् । तद्वद्वासुदेवं परित्यज्य अन्यदेवमुपासते स तत्तुल्य इति ।। ११५ ।।

**कृष्णामृतमहार्णवः**

**गां च त्यक्त्वा विमूढात्मा गार्दभीं वन्दते यथा ।**
**तथा हरिं परित्यज्य योऽन्यं देवमुपासते ।। ११६ ।।**

**ताम्रपर्णी**—कामधेनुवत्सर्वकामदोग्धुस्तद्वन्दनमेव कार्यमिति ध्वनयन्नाह— **गां चेति** ।। ११६ ।।

**उमर्जी**—गां त्यक्त्वा वन्दनमकृत्वैव विमूढात्मा वन्द्यावन्द्यज्ञानशून्यः यथा हेयाम् ।। ११६ ।।

**उपेन्द्र**—योऽवधारणे । अन्यं देवमेवेत्यर्थः । गां च त्यक्त्वा वन्दनमकृत्वैव यथा हेयाम् ।। ११६ ।।

**कोनेरी**—यः विमूढात्मा वन्द्यां गां परित्यज्य गार्दभीं यथा वन्दते नमस्करोति। हरिं परित्यज्यान्यं देवमुपासते स तथेति ।। ११६ ।।

**स्मृ.कृष्णाचार्य**—यः विमूढात्मा कर्तव्याकर्तव्यबुद्धिरहितः । गां सर्वपूज्याम् । पूजार्थं नमस्कारादिकं परित्यज्य । गार्दभीं खरां वन्दते यथा । तथा वासुदेवं परित्यज्य अन्यं देवमुपासते सः पुमान् तत्तुल्य इति ।। ११६ ।।

**कृष्णामृतमहार्णवः**

**स्वमातरं परित्यज्य श्वपाकीं वन्दते यथा ।**
**तथा हरिं परित्यज्य योऽन्यं देवमुपासते ।। ११७ ।।**

**ताम्रपर्णी**—'योनिश्च हि गीयते' इत्युक्तन्यायेन मातृत्वाद्भगवद्वन्दनमेव कार्यमित्याह— **स्वमातरमिति** ।। ११७ ।।

**उमर्जी**—श्वपाकीं श्वमांसपाकिनीं स्त्रियम् । यथाऽनिष्टं भवति ।। ११७ ।।

**उपेन्द्र**—श्वपाकीं श्वमांसपाकिनीं चण्डालादिस्त्रियमित्यर्थः । यथाऽपुरुषार्थो भवति ।। ११७ ।।

**कोनेरी**—यः अतिनीचः स्वमातरं परित्यज्य धिक्कारेणावमान्य श्वपचीं तत्सदृशीं भार्यां वन्दते मानयति । यः वासुदेवं परित्यज्यान्यं दैवमुपासते स तथेति । मातापितृद्रोहिणां पुरुषाणां श्वपचसाम्यं तत्स्त्रियां श्वपचित्वमुक्तमिति ज्ञातव्यम् । अन्यथोत्तमजातिभिः प्रत्यक्षश्वपचिवन्दनस्य निषेधत्वेनोक्तार्थस्यानुपपत्तिः स्यादिति ।। ११७ ।।

**स्मृ.कृष्णाचार्य**—यथा कश्चित्पुरुषः स्वमातरं स्वजननीं परित्यज्य अन्नपानादिना पोषणार्थं श्वपाकीं श्वमांसादिपाककर्त्रीं चण्डालादिस्त्रियं वन्दते नमस्करोति वा । तथा हरिं परित्यज्येति ।। ११७ ।।

**कृष्णामृतमहार्णवः**

**[35]वासुदेवं परित्यज्य योऽन्यं देवमुपासते ।**
**तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ।। ११८ ।।**

**ताम्रपर्णी**—मुमुक्षोरन्यदेवतोपासनं तृषितस्य गीर्वाणतरङ्गिणीनिकटे कूपखनन-मिवापहसनीयमित्युपसंहरति— **वासुदेवमिति** ।। 'द्वासुपर्णे'त्युक्तरीत्या स्वनिकट-वर्तिनं स्वोपकारकं वासुदेवं परित्यज्येत्यर्थः । अत्र गङ्गामित्यादि तु देवविवक्षया। कूपोदकमित्यादि तु देवताविवक्षयेति विवेकः ।। ११८ ।।

**उमर्जी**—कूपं खनति । तद्वत् दुःखसाधनव्यापारवान् भवतीत्यर्थः ।। ११८।।

**उपेन्द्र**—कूपं खनति । तद्वत् अरिष्टसाधनव्यापारवान्भवतीत्यर्थः ।। ११८ ।।

**कोनेरी**—यो दुर्मतिः दुर्बुद्धिः । तृषितः तृषार्तः । जाह्नवीतीरे विद्यमानं जाह्नवीजल-मुल्लङ्घ्य यथा जलार्थं कूपं खनति । यः वासुदेवं परित्यज्यान्यं देवमुपासते स

---

१. 'स्वात्महितं' इति स्मृ.कृ. तथा कृ. पाठः ।

35. यो हि विष्णुं परित्यज्य चान्यदेवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ।।गारुडे ब्रह्मकाण्डे ३८-८१ ।।

तर्थति । अनेन तृषितस्य मुहूर्तमात्रमुदकालाभे मृतिर्भवति । कूपखननं तु बहुकालेन भाव्यम् । तावत्स्वमृतिरेव भवति । तद्धरेरनुपासकानामात्मघातित्वमेव सूचितं भवति । "एके चात्महनो जनाः" इत्युक्तेः ।। ११८ ।।

**स्मृ.कृष्णाचार्य**—वासुदेवं परित्यज्य अन्यं देवमुपासते यः पुमान् तृषितः सन् जलपानार्थं कूपं खनति यः दुर्मतिः सः तत्तुल्य इति । तस्माद्वासुदेवपरित्यागेनान्यदेवताभजनस्यानेकनिषिद्धदृष्टान्ताभिधानेन निषिद्धत्वश्रवणात्तस्यैव भजनं मोक्षार्थं कार्यमिति ।। ११८ ।।

कृष्णामृतमहार्णवः

**[38]यावत्स्वस्थमिदं पिण्डं निरुजं करणान्वितम् ।**
**तावत्कुरुष्वात्महितं पश्चात्तापेन तप्यसे ।। ११९ ।।**

**ताम्रपर्णी**—किमधुना विषयभोगविरोधिना भगवदाराधनेन पश्चात्करिष्य इति माऽशंकीति भावेनाह— **यावत्स्वस्थमित्यादिपञ्चभिः श्लोकैः** ।। यावत् यावत्कालपर्यन्तमिदं पिण्डं शरीरम् । स्वस्थं स्वाधीनम् । निरुजं रोगरहितम् । करणान्वितं इन्द्रियपाटवयुक्तम् । तावत्तावत्कालपर्यन्तं आत्महितमात्मनः परमात्मनो हितं प्रियम्। आत्मनः स्वात्मनो वा हितं इष्टसाधनं अर्चनादि कुरुष्व । यावत्तावच्छब्दौ यदा तदेत्यर्थं वा । एवमकरणे पश्चाच्छरीरपातानन्तरं तापेन नरके तप्यस इत्यर्थः । यद्वा एवमकरणे पश्चात्तापेन मया दृढगात्रेण साधनं नानुष्ठितं इदानीमकल्प इति पश्चाज्जातेन चित्तक्षोभेण तप्यस इत्यर्थः ।। ११९ ।।

**उमर्जी**—एवमर्चनादीनां कर्तव्यतामुपपाद्य अकरणे शिक्षाप्रकारमुपपादयति— **यावदित्यादिना** ।। पिण्डं शरीरं यावत् यावत्कालं स्वस्थं स्वाधीनं निरुजमित्यकारान्तनपुंसकम् । करणान्वितं पटुकरणैरिन्द्रियैरुपेतम् । तावत्तदानीम् । आत्महितं परमात्मप्रियम् । स्वस्य हितकरं वा । पश्चान्मरणानन्तरं तापेन

---

३८ यावच्छरीरं सबलं चैव पटु रोगविहीनं मरणाख्यां विपत्तिम ।

तापकरेणाग्निना पश्चादपटुकरणानन्तरं जायमानानुतापेन वा तप्यसे इत्यात्मानं शिष्यं वा शिक्षणं कार्यमिति भावः ।। ११९ ।।

**उपेन्द्र**—एवमर्चनादीनां फलसाधनत्वेन कर्तव्यत्वमुक्त्वा अकरणेऽनर्थप्राप्तिरिति शिक्षाप्रकारमुपपादयति— **यावदित्यादिना** ।। यावत्कालं स्वस्थं स्वाधीनमिदं पिण्डं मानुषं शरीरम् । निरुजं रोगरहितम् । करणान्वितं षट्करणैरिन्द्रियैरन्वितम्। तावत्कालमात्महितं पूजादिस्वात्महितं कुरुष्वेति । पश्चान्मरणानन्तरं तापेन तापकरेण नरकाग्निना तप्यसे । पश्चाज्जायमानेनानुतापेन तप्यस इति वा । इति आत्मानं वा शिष्यं वा शिक्षणं कार्यमिति भावः ।। ११९ ।।

**कोनेरी**—एवमधिकारिणामितिकर्तव्यतामुक्त्वा साधनदेहप्राप्तौ सत्यामेव शीघ्रं यत तत इत्यधिकारिणामुपदिशति— **यावत्स्वस्थमिति** ।। इदं शरीरं स्वस्थं मनःसमाधानयुक्तम् । निरुजं अन्तर्बाह्यरोगरहितम् । करणान्वितं इन्द्रियपाटवोपेतम् । यावत् यावत्पर्यन्तं वर्तते । तावत्कालमेवात्महितं मोक्षप्राप्तिसाधनरूपहितं कुरुष्व । नोचेत्पश्चात्साधनदेहपतनानन्तरं तापेन नरकादिष्वनुभूयमानतापेन तप्यसे तप्तो भविष्यसि ।

यदा नृदेहोऽस्ति यदा द्विजत्वं यदा च पट्वी करणप्रवृत्तिः ।
तदैव नैजं पदमीक्षितव्यं कदा मृतिस्त्वेति जनो न वेद ।।

—इति भागवतोक्तेः ।। ११९ ।।

**स्मृ.कृष्णाचार्य**—अधिकारिणां मोक्षार्थं पूर्वोक्तभगवदर्चनादिसाधनजातं दृढाङ्गेन पुरुषेण शीघ्रं कर्तव्यं न विलम्बेनेति ऋषिवाक्यं प्रमाणयति— **यावत्स्वस्थमिति** ।। इदं पिण्डं शुक्लशोणितसम्बन्धेन जातं शरीरम् । यावद्यदा स्वस्थं स्वविहितभगवदाराधनादिकरणे स्वाधीनम् । तथा निरुजं क्षयादिनानाविधरोगरहितम् । तथा करणान्वितं करणैश्चक्षुरादिज्ञानेन्द्रियैः हस्तादिकर्मेन्द्रियैः दृढभूतैरन्वितं युक्तं भवति यदा । तदैव तावन्मध्य एव आत्महितमात्मनः स्वस्य हितं परलोकसाधनं कर्मानुष्ठानादिकं तथा आत्मनः परमात्मनः हितं प्रियकरं तदर्चनादिमोक्षसाधनादिकं कुरु स्वाविहितं सम्पादय । अन्यथा पश्चात्तापेन मया दृढगात्रेण साधनजातं न सम्पादितमहो इति पश्चाज्जायमानतापेन तप्यसे तप्तो भविष्यसि ।

तस्माद्भगवदाराधनादिकं स्वस्य परलोकहितं शीघ्रमेव सम्पादयेति शिष्यं प्रति कस्यचिद्दषेर्वाक्यम् ।। ११९ ।।

**कृष्णामृतमहार्णवः**

**यावत्स्वास्थ्यं शरीरेषु करणेषु च पाटवम् ।**
**तावदर्चय गोविन्दमायुष्यं सार्थकं कुरु ।। १२० ।।**

**ताम्रपर्णी**—किं तदात्महितमित्यत अर्चनं स्मरणं ध्यानं व्याख्यानं नामकीर्तनम्। श्रवणं चेति भावेनोक्तमेव विवृणोति— **यावत्स्वास्थ्यमित्यादिभिः** ।। शरीरेषु शरीरावयवेषु स्वास्थ्यं स्वाधीनत्वं आरोग्यम् ।। १२० ।।

**उमर्जी**—शीर्यमाणेषु शरीरेषु यावत्स्वास्थ्यं स्वस्थता । पाटवं पटुता ।।१२०।।

**उपेन्द्र**—शीर्यमाणेषु शरीरेषु यावत्कालं स्वास्थ्यं स्वस्थता । पाटवं पटुता ।।१२०।।

**कोनेरी**—उक्तमेव दाढ्यार्थं स्पष्टयति— **यावदिति** ।। शरीरेषु करचरणाद्य-ङ्गशरीरेषु इन्द्रियेषु स्वास्थ्यं स्वस्थता पाटवं यावद्वर्तते तावत्पर्यन्तं गोविन्दमर्चय । अर्चनादिना आयुष्यं सार्थकं कुर्विति ।। १२० ।।

**स्मृ.कृष्णाचार्य**—उक्तार्थे वचनान्तरमाह— **यावत्स्वास्थ्यमिति** ।। शरीरेष्वनेक-तिर्यगादिशरीरेषु मध्ये कर्मार्जितमानुषशरीरेषु यावत्स्वास्थ्यं यावत्कालपर्यन्तं कर्मकरणे सामर्थ्यमस्ति । तथा करणेषु ज्ञानकर्मेन्द्रियरूपकरणेषु पाटवं स्वस्व-व्यापारादिकरणेषु च पाटवं दाढर्यमस्ति । तावत्तावत्कालमध्ये गोविन्दं स्वस्य मोक्षादिपुरुषार्थप्रदं अर्चय पूजासाधनद्रव्याद्यैस्सम्यक्पूजां कुरु । तेनैव भगवद-र्चनादिनैव आयुष्यं शतायुर्मध्ये यावज्जीवनं तत्सार्थकं कुरु । स्वविहितसाधनमध्ये सार्थकं कुर्विति ।। १२० ।।

**कृष्णामृतमहार्णवः**

**स्मर्यतां तु हृषीकेशो हृषीकेषु दृढेषु च ।**
**अदृढेषु हृषीकेषु हृषीकेशं स्मरन्ति के ।। १२१ ।।**

**ताम्रपर्णी**—हृषीकेषु इन्द्रियेषु स्मर्यतामिति स्मरणध्यानयोरुक्तिः 'खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते' इति वचनात् ।। १२१ ।।

**उमर्जी**—हृषीकेषु इन्द्रियेषु दृढेषु सत्स्वेव । हृषीकेशः इन्द्रियस्वामी स्मर्यताम् ।। १२१ ।।

**उपेन्द्र**—हृषीकेशः हृषीकाणामिन्द्रियाणामीशः स्वामी स्मर्यताम्। हृषीकेषु इन्द्रियेषु दृढेषु सत्स्वेव ।। १२१ ।।

**कोनेरी**—सामान्येनोपदिश्य विशेषेणोपदिशति— **स्मर्यतामिति** ।। हे अधिकारिणः दृढेषु हरिस्मृत्यादिकर्मणि करणपाटवोपेतेषु इन्द्रियेषु हृषीकेषु नियन्तृतया विद्यामानो हृषीकेशो इन्द्रियाणां स्वामीति भक्त्या भवद्भिःस्मर्यताम् । हृषीकेषु इन्द्रियेषु अदृढेषु स्वाधीनरहितेषु हृषीकेशं के स्मरन्ति न कोऽपीति ।। १२१ ।।

**स्मृ.कृष्णाचार्य**—इन्द्रियदार्ढ्यकाल एव भगवदर्चनध्यानादिकं मोक्षार्थिना कर्तव्यमनन्तरं भगवद्ध्यानादिकं कर्तुमशक्यमित्याह— **स्मर्यतामिति** ।। **हृषीकेषु** विषयेन्द्रियेषु दृढेषु सत्स्वेव तैरिन्द्रियैर्हरिः स्मर्यतां पुरुषैः । कुत इत्यत उक्तम् ।। **अदृढेष्विति** ।। हृषीकेषु तादृशेन्द्रियेषु अदृढेषु शिथिलीभूतेषु सत्सु भगवद्विषयकस्वस्वव्यापारेषु अशक्तेषु सत्सु हृषीकेशं तादृशेन्द्रियाणामीशं नियामकं हरिं के पुरुषाः स्मरन्ति स्मरणादिसाधनं कर्तुं समर्था भवन्ति केऽपि न समर्था इति ।। १२१ ।।

**कृष्णामृतमहार्णवः**

**यावच्चिन्तयते जन्तुर्विषयान् विषसन्निभान् ।**
**तावच्चेत्स्मरते विष्णुं को न मुच्येत बन्धनात् ।। १२२ ।।**

**ताम्रपर्णी**—ननु शरीरयात्रार्थं अर्थार्जनवतो मम भगवदाराधने तत्स्मरणे नावकाश इत्यत आह— **यावदिति** ।। सर्वदा भगवत्स्मरणं कर्तव्यमतो दुर्विषयमनोरथचिन्तनस्य यः कालः स एव कालः तत्परित्यागेन भगवत्स्मरणे नियोज्य इति भावः ।। १२२ ।।

**उमर्जी**—जन्तुः जीवः विषसन्निभान् भोगे सति विषदुःखकरान् इन्द्रियविषयान् । चिन्तयतो तावत् तावत्कालं विष्णुं स्मरते स्मरणं करोति चेत् ।। १२२ ।।

**उपेन्द्र**—जन्तुः विषसन्निभान् भोगे सति विषसदृशान् इन्द्रियविषयान् ।। १२२ ।।

**कोनेरी**—अयोग्यानां जीवनमसार्थकमित्याह— **यावदित्यादिश्लोकद्वयेन** ।। जन्तुः स्वक्षेमानभिज्ञो जनः विषसन्निभान् विषयान् अनुभूयेति यावत् । आमरणं ध्यायति तावत् तद्वत् विष्णुं स्मरते चेत् । बन्धनात् संसारबन्धनात्को न मुच्येत मुच्येदेव ।। १२२ ।।

**स्मृ.कृष्णाचार्य**—पुत्रमित्रकलत्रादिव्यर्थविषयरूपचिन्तनापेक्षया भगवच्चिन्तन-कीर्तनादीनां मोक्षफलदत्वश्रवणात्तच्चिन्तनादिकमेव कार्यमिति वचनद्वयेनाह— - **यावदित्यादिना**।। जन्तुः संसारी पुरुषः विषसन्निभान् अनिष्टप्रदत्वेन विष-तुल्यान् मनआर्द्रविषयान् पुत्रमित्रकलत्रादिरूपान् वा । यावत् यावत्कालं देहपात-पर्यन्तं चिन्तयते चिन्तां करोति तद्ध्यानाद्येव करोति । तावत्कालं विष्णुं स्मरते चेत् बन्धनात्संसारबन्धनात् को न मुच्येत मुच्यत एवेति ।। १२२ ।।

**कृष्णामृतमहार्णवः**

**यावत्प्रलपते जन्तुर्लोकवार्तादिभिस्सदा ।**
**[1]तावच्चेद्वदते विष्णुं को न मुच्येत बन्धनात् ।। १२३ ।।**

**ताम्रपर्णी**—विष्णुं वन्दते इति शिष्येभ्यो व्याख्याति तन्नाम च कीर्तयतीत्यर्थः ।। १२३ ।।

**उमर्जी**—लोकवार्तादिभिः आदिशब्दाद्दुशास्त्रवार्तादयः ।। नैयांवत्प्रलपते तावत्कालं विष्णुं वन्दते सर्वोत्तमत्वादिना प्रतिपादयति । कः पुरुषः न मुच्येत मुच्यत एव । अतोऽर्चनस्मरणकीर्तनादिना आयुषः सार्थक्यं सम्पादनीयमिति भावः ।। १२३ ।।

**उपेन्द्र**—लोकवार्तां लौकिकवार्तां आदिशब्दाद्दुःशास्त्रवार्तां तैः सदा निरन्तरं याव-त्प्रलपते यावत्संख्यया प्रलपनं करोति । तावत् तावत्संख्याकं वदते चेद-

---

१. 'तावच्चेद्वन्दते' इति ताम्र., उम. तथा कोनेरी पाठः ।

त्यर्थः। अतो अर्चनस्मरणकीर्तनादिना आयुषः सार्थक्यं सम्पादनीयमिति भावः ।। १२३ ।।

**कोनेरी**—जन्तुः पामरजनः सदा जन्मारभ्य मरणपर्यन्तं लोकवार्तादिभिरसदालापेन उन्मत्तवत्प्रलपते प्रलापयति । तावत्तद्वद्विष्णुं वन्दते चेत् वदि अभिवादनस्तुत्योरिति धातोः भक्त्या अभिवादनस्तुत्यादिकं कुर्यांच्चेत् लिङ्गशरीररूपसंसारबन्धनात्को न मुच्येत मुच्येदेव । एवं सत्यपि अयोग्यानां ज्ञानं न भवतीति ।। १२३ ।।

**स्मृ.कृष्णाचार्य**—जन्तुः पुरुषो लोकवार्तादिभिः असद्विषयकथनादिभिर्यावत्कालं प्रलपते विषयप्रलापं करोति । सदा विष्णुं तावत्कालं लोकवार्तादिकथनकालं वदते चेत्तत्कीर्तनादिकं करोति चेत् बन्धनात्संसारबन्धनात्को न मुच्येत सर्वोऽपि मुच्यत एव । तस्मात् मुमुक्षुणा भगवत्स्मरणकीर्तनादिकं कार्यमिति ।। १२३ ।।

**कृष्णामृतमहार्णवः**

**श्रीसूतः**—

***ज्ञात्वा विप्रा'स्तिथिं सम्यग् दैवज्ञैस्समुदीरिताम् ।**
**कर्तव्य उपवासस्तु ह्यन्यथा नरकं व्रजेत् ।। १२४ ।।**

**ताम्रपर्णी**—

कोट्यैन्दवसहस्रैस्तु मासोपोषणकोटिभिः ।
यत्फलं लभ्यते पुंभिर्विष्णोर्नैवेद्यभक्षणात् ।।

इत्युक्त्या एकादश्युपवासोऽपि नैवेद्यभक्षणादल्पफलत्वान्नावश्यमनुष्टेय इति प्राप्तम् । अत एकादश्युपवासस्यावश्यकर्तव्यत्वं साधयति— **सूत इत्यारभ्य न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासर इत्यन्तेन प्रकरणेन** ।। हे विप्राः शौनकादयः दैवज्ञैः सूर्यादिदेवताग्रहगतिज्ञैः ज्योतिषैः समुदीरितां तिथिमेकादशीम् । स्थितिमिति पाठे कालस्थितिमित्यर्थः । सम्यक् ज्ञात्वैवोपवासः कर्तव्यः । अन्यथा निरयं व्रजेदित्यर्थः ।। १२४ ।।

**उमर्जी**—एवं अर्चनादिवत् ज्ञानसाधनमेकादशीव्रतमवश्यानुष्ठेयमिति तदनुष्ठान-प्रकारप्रतिपादकं सूतवाक्यं पठति— **ज्ञात्वेति** ।। हे विप्राः विशिष्टेषु प्रकृष्टा इति शौनकादिसम्बोधनम् । दैवज्ञैः ज्योतिःशास्त्रज्ञैः समुदीरितां समित्युपसर्गादधिक-सिद्धान्तेनेति ज्ञेयम् । उदीरितां तिथिमुपवासयोग्यां एकादशीं इति यावत् । सम्यक् ज्ञात्वाऽधिकसिद्धान्तेन वेधरहितां इति यावत् । उपवासः कर्तव्य इत्यन्वयः । अन्यथा पण्डितपामरादिसाधारण्येन ज्ञातस्य सम्यग् ज्ञात्वेति विशेष्यविधानं न स्यात् । अत्रार्थे शिष्टपठितनिर्णयवचनानि—

वृद्धौ प्रवृद्धसिद्धान्तमधिगम्य मुनीश्वराः ।<br>
दैवज्ञैर्निर्णयः कार्यः दशम्यादिदिनत्रये ।।<br>
वृद्धावार्यभटी ग्राह्या क्षये चान्द्रेण उच्यते ।<br>
समे तु सूर्यसिद्धान्तः विष्णुधर्मेषु योऽधिकः ।। इति ।।<br>
ब्राह्मेण पैतृकादीनि दैवकार्याणि सौरतः ।<br>
द्वादश्यादिव्रतादीनि आर्येणैव तु कारयेत् ।। इति ।।<br>
विष्णुव्रतानि चार्येण निश्चितानि मनीषिभिः ।। इति ।।<br>
सर्वेषामुपवासानां सौरेणैव तु निर्णयः ।<br>
दशम्यादित्रयाणां चार्येणैव तु निर्णयः ।।<br>
दशम्यादित्रयाणां च स्तम्भेनैव तु निर्णयः ।। इति ।।

स्तम्भः आर्यभटः इत्यर्थः ।

स्तम्भेन निर्णयः कार्यः दशम्यादिदिनत्रये ।। इति ।।<br>
साम्ये सौरः क्षये ब्राह्मं तिथिवृद्धौ पराशरः ।। इति ।।

पराशरः आर्यभट इत्यर्थः । इत्यादिनिर्णयवचनैरेकादशीमधिकसिद्धान्तेन दशम्या-दिवेधरहितत्वेन ज्ञात्वेत्यर्थः । अन्यथा शास्त्रतत्वापरिज्ञानेन व्रतोपवासाकरणे वा विद्धैकादश्युपवासे वा ।। १२४ ।।

**उपेन्द्र**—एवमाद्यपद्योक्तार्चनादीनां फलसाधनत्वे कर्तव्यत्वं प्रतिपाद्य तद्वदेका-दशीव्रतमवश्यं वैष्णवैरनुष्ठेयमिति तत्प्रतिपादकं सूतवाक्यं पठति— **ज्ञात्वे-ति** ।। हे विप्राः विशिष्टेषु प्रकृष्टा इति शौनकादीनां सम्बोधनम् । तिथिमेकादशीं

दैवज्ञैर्ज्योतिःशास्त्रज्ञैः सम्यक् वेधरहितत्वेन शुद्धां ज्ञात्वा । अन्यथा उपवासाकरणे विद्धैकादश्युपवासे वा ।। १२४ ।।

**कोनेरी**—मासोपोषणकोटिभिरिति प्रसक्तोपवासेषु सङ्गतैकादश्युपवासः सर्ववर्णाश्रमजनैः कार्य इति वक्ष्यमाणो भगवानाचार्यवर्यः उपवासतिथीनां वेधाधीनत्वेन एकादश्याः दशमीवेधस्वरूपं निर्दिशन् ज्ञात्वेति सूतोक्तवचन-मुदाहरति— **सूत इति** ।। हे विप्राः शौनकादयः । दैवज्ञैरार्यसिद्धान्तगणितज्ञैः सम्यक् यथार्थेन समुदीरितामुक्तां दशमीवेधरहितां तिथिमेकादशीतिथिं ज्ञात्वा उपवासं उपवासः कर्तव्यं कर्तव्य एव । विभक्तिव्यत्ययः । एकादश्युपवासस्यातिवैलक्षण्यद्योतकः । तुशब्दः एवार्थे । अन्यथैकादश्युपवासाकरणे नरकं व्रजेत् । पुमानिति शेषः । गणनाऽऽर्यभटरीत्या कार्या । "दशम्यादित्रयाणां तु स्तम्भेनैव विनिर्णयः" इति । स्तम्भः आर्यभटः । गणकाभावे सौरपञ्चाङ्गानुसारेण तिथिं ज्ञात्वा आर्यमानेन संयोज्य दशमीवेधरहितामेकादशीं उपवसेत् ।। १२४ ।।

**स्मृ.कृष्णाचार्य**—एवमेतावद्ग्रन्थसन्दर्भेण मोक्षार्थिना भक्तेन भगवदर्चनस्मरणकीर्तनध्यानसालग्रामतीर्थस्नाननैवेद्यभक्षणतन्निर्माल्यधारणादिकं कर्तव्यमित्यत्र श्रीमदानन्दतीर्थमुनिः तत्तद्विषये बहूनि प्रमाणान्यभिधाय वैष्णवधर्मेषु मध्ये अत्युत्तमैकादशीव्रतं मुमुक्षुभिर्भक्तैः सर्वथा कार्यमित्यत्र बहुप्रमाणान्याह । तत्र तावद्दैवज्ञैर्ज्योतिषैः दशमीवेधरहितैकादशीतिथिं अधिकसिद्धान्तेनार्यभट्टादिना निर्णीय एकादशीव्रतं कर्तव्यम् । अन्यथाऽकरणे दोषः स्यादित्यत्र सूतपौराणिक-वाक्यमाह- — **ज्ञात्वा विप्रा इति** ।। हे विप्राः विशिष्टेषु प्रकृष्टा जना इति सूत-सम्बोधनम् । तिथिं दशमीवेधरहितैकादशीतिथिम् । दैवज्ञैस्तिथ्यादिकरणे कुशलैः । समुदीरितां अधिकसिद्धान्तेन सम्यक् निर्णीताम् । सम्यक् ज्ञात्वा वेधावेधविचारेण सम्यग्ज्ञात्वा अधिकसिद्धान्तेन निश्चित्य उपवासः हरिप्रीतिकरैकादशीव्रतोपवासः कर्तव्यः । तथा तदकरणे दोष इत्याह— **अन्यथा नरकं व्रजेदिति** ।। अन्यथा उक्तरीत्या सम्यग्विचार्य तदकरणे दशमीवेधयुतैकादशीकरणे नरकं व्रजेत् । विद्धैकादशीकर्ता नानाविधनरकं व्रजेदित्यर्थः ।

तत्राधिकसिद्धान्तेनैव गणनं कृत्वा एकादशीव्रतं कार्यमित्यत्र तदभिप्रेतवचनान्तराण्युच्यन्ते—

वृद्धौ प्रवृद्धसिद्धान्तमधिगम्य मुनीश्वराः ।
दैवज्ञैर्निर्णयः कार्यः दशम्यादिदिनत्रये ।। इति ।।

तथा अधिकसिद्धान्तेनार्यभट्टेन गणनमित्यत्र निर्णयामृते—

व्रतानामेव सर्वेषां सौरेणैव विनिर्णयः ।
दशम्यादित्रयाणां तु आर्येणैव तु निर्णयः ।।

"वृद्धावार्यभटो ग्राह्यः" इति "तथा विष्णुधर्मेषु योऽधिकः" इति च । तथाच "दशम्यादित्रयाणां तु स्तम्भेनैव तु कारयेत्" इति । स्तम्भः आर्यभटः इति व्याख्यानादिति ।। १२४ ।।

**कृष्णामृतमहार्णवः**

***क्षये वाऽप्यथवा वृद्धौ सम्प्राप्ते वा दिनक्षये ।**
**उपोष्या द्वादशी पुण्या पूर्वविद्धां परित्यजेत् ।। १२५ ।।**

**ताम्रपर्णी**—एकादश्याः सम्यक्परिज्ञानं कथमित्यत आह— **क्षय इति** ।। नवमी ह्यष्टपञ्चाशद्घटिका, दशमी षट्पञ्चाशद्घटिका, एकादशी पञ्चाशदित्यादिरूपेण क्षये वा । नवमी चतुःपञ्चाशत्, दशमी षट्पञ्चाशत्, एकादश्यष्टपञ्चाशदिति वृद्धौ वा । नवम्यां दशम्यामेकादश्यां वा उपरिविलेखनेन दिनत्रयसंस्पर्शेन द्वितिथ्यन्तदिनक्षये प्राप्ते वा दशमीवेधवशेन एकादशीं परित्यज्य पुण्या द्वादश्यैवोपोष्येत्यर्थः । दिनक्षयलक्षणं चोक्तं पाद्मे—

द्वौ तिथ्यन्तावेकरात्रे यस्मिन्स्स स्याद्दिनक्षयः ।
एकस्मिन्वासरे स्याश्चेत्तिथीनां त्रितयं यदा ।।

तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् । इति एकरात्र इत्येकस्मिन् दिन इत्यर्थः । वक्ष्यते चैतत् ।। १२५ ।।

**उमर्जी**—दशम्यां वेधः कदेत्यत आह— **क्षय इति** ।। क्षये तिथिक्षये । वृद्धौ तिथिवृद्धौ वा । दशम्यादिवेधे प्राप्ते सतीत्यर्थः । यद्वा क्षये दशम्या अल्पशेषे वा । वृद्धौ दशम्यां पूर्णतायां वा । एकादश्याः दिनक्षये सम्प्राप्ते । एकादश्याः पूर्वोत्तरतिथियोगे सम्प्राप्ते सतीत्यर्थः । तदुक्तम्—

---

* अयं श्लोकः नारदपुराण २-२-३८ ।

द्वौ तिथ्यन्तावेकरात्रे यस्मिन्स स्याद्दिनक्षयः ।
एकस्मिन्वासरे त्वह्नि तिथीनां त्रितयं यदा ।।
तदा दिनक्षयः प्रोक्तः....................... । इति स्कान्दे ।।

द्वादशी उपोष्या ।। १२५ ।।

**उपेन्द्र—** कथं ज्ञात्वा कर्तव्य इत्यत आह— **क्षय इति** ।। दशम्याः तिथिक्षये वा तिथिवृद्धौ वा सम्प्राप्ते दशम्या योगे सम्प्राप्ते द्वादशी उपोष्या । दिनक्षये वा ।

द्वौ तिथ्यन्तौ एकरात्रौ यस्मिन्सः स्याद्दिनक्षयः ।
एकस्मिन्वासरे त्वह्नि तिथीनां त्रितयं यदा ।।
तदा दिनक्षयः प्रोक्तः क्रतुसाहस्रिकं फलम् ।।
—इति पाद्मवचनात् ।। १२५ ।।

**कोनेरी—**अविद्धैकादश्या उपवासप्रकारमभिधाय विद्धैकादश्युपवासस्य निषेध-माह— **क्षय इति** ।। क्षये अतिसमहीनक्षये प्राप्ते । अथवा वृद्धौ अतिसमहीनवृद्धौ प्राप्तायाम् । तथा त्रिदिनस्पृष्टदिनक्षये प्राप्तेऽप्येतेषु विचारितेषु दशमीवेधे प्राप्ते दशमीविद्धामेकादशीं परित्यज्य पुण्यां द्वादशीमुपोष्य पूर्वविद्धामेकादशीं परित्यजेत् । नोपोष्येदित्यर्थः ।। १२५ ।।

**स्मृ.कृष्णाचार्य—**एवमधिकसिद्धान्तेन गणनं कृत्वा दशमीवेधरहितैकादशी कार्येत्युक्तम् । तत्र वचनान्याह— **क्षये वाप्यथा वा वृद्धाविति** ।। क्षये एकादश्याः पूर्वतिथीनां उत्तरतिथीनां क्षये वा वृद्धौ वा । अरुणोदयकाले दशमीवेधे सति तथा दिनक्षये तिथित्रययोगेन अरुणोदये दशमी, अनन्तरं एकादशी, तत्प्रभातसमये द्वादशी यदा, तदा दिनक्षयतिथिरिति । एकादश्याः दशमीवेधे सति तादृशैकादश्यामुपवासं त्यक्त्वा पुण्या द्वादशी उपोष्या । पूर्वविद्धां दशम्या सम्बद्धां एकादशीं परित्यजेत् तत्रोपवासं न कुर्यादिति । अत्र दिनक्षयशब्दार्थः पाद्मे अभिहितः ।

---

*अयं श्लोकः नारदपुराणे २-२-३७ ।

द्वौ तिथ्यन्तावेकरात्रे यस्मिन्स स्याद्दिनक्षयः ।
एकस्मिन्वासरे त्वह्नि तिथीनां त्रितयं यदा ।।
तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ।। इति ।। १२५ ।।

**कृष्णामृतमहार्णवः**

**पूर्वविद्धां प्रकुर्वाणो नरो धर्मान्निकृन्तति ।**
**सन्ततेस्तु विनाशाय सम्पदो हरणाय च ।। १२६ ।।**

**ताम्रपर्णी**—पूर्वविद्धैकादशीपरित्यागेऽनर्थमाह— **पूर्वेति** ।। न केवलं पूर्वार्जित-धर्मच्छेदः । किन्तु दृष्टहानिरप्यस्तीत्याह— **सन्ततेरिति** ।। पूर्वविद्धां प्रकुर्वाणः स्वसन्ततेर्विनाशाय सम्पदो हरणाय च । भवतीत्यध्याहार्यम् ।। १२६ ।।

**उमर्जी**—ननु एकादशीदिने कुतो नोपवासः कार्य इत्यत उक्तम् ।। **पूर्वविद्धा-मिति**।। पूर्वातिथ्या दशम्या विद्धां तिथिं परित्यजेत् । तत्रोपवासं न कुर्यादित्यर्थः। अथवा दशम्यादिदिनक्षये प्राप्ते पुण्या द्वादशी उपोष्या । तदुक्तं स्कान्दे—

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिमिश्रा सा तिथिः प्रोक्ता सर्वपापप्रणाशनी ।।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ।। इति ।।

पूर्वविद्धा कुतः परित्याज्या इत्यत आह— **पूर्वविद्धामिति** ।। तत्र व्रतं कुर्वाणः । निकृन्तति नाशयति ।। १२६ ।।

**उपेन्द्र**—एकादश्यां कुतो नोपवासः कार्य इत्यत उक्तम्— **पूर्वविद्धामिति** ।। पूर्वतिथ्या दशम्या विद्धां एकादशीम् । अथवा द्वादश्यां दिनक्षये सम्प्राप्ते पुण्या द्वादशी उपोष्या । तदुक्तं स्कान्दे—

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिमिश्रा सा तिथिः प्रोक्ता सर्वपापप्रणाशनी ।।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ।। इति ।।

पूर्वविद्धा कुतः परित्याज्येत्यत आह— **पूर्वविद्धामिति** ।। तत्र व्रतं प्रकुर्वाणः इत्यर्थः । हरणाय भवतीति शेषः ।। १२६ ।।

**कोनेरी**—विद्धैकादश्युपवासनिषेधमुक्त्वा निषिद्धोपवासकारिणां दृष्टादृष्टप्रत्य-वायमाह— **पूर्वविद्धामिति** ।। दशमीविद्धामेकादशीं कुर्वाणो नरः धर्मात् स्वार्जित-धर्मात् निकृन्तति च्युतो भवति । धर्मान् सर्वधर्मान् निकृन्तति नाशयति वा । अयमदृष्टप्रत्यवायः । दृष्टप्रत्यवायस्तु स्वयं सन्ततेर्विनाशाय सम्पदो हरणाय च भवति । चशब्दः समुच्चायकः । तुशब्दः दृष्टादृष्टप्रत्यवायसूचकः ।। १२६ ।।

**स्मृ.कृष्णाचार्य**—दशम्या विद्धैकादशीकरणे प्रत्यवायस्याभिधानात् । तन्न कर्तव्य-मित्याह— **पूर्वविद्धामिति** ।। पूर्वविद्धां पूर्वोक्तरीत्या दशम्या विद्धामेकादशीं प्रकुर्वाणः उपवासं कुर्वन्नरः धर्मान् अनेककाले स्वकृतविहितधर्मान् निकृन्तति नाशयति । धर्मभ्रष्टो भवति । किञ्च सन्ततेः स्वसन्ततेर्नाशाय सम्पदो हरणाय नाशाय भवति । तस्मात्पूर्वविद्धां परित्यजेदिति भावः ।। १२६ ।।

**कृष्णामृतमहार्णवः**

***[38]कलावेधे तु विप्रेन्द्र दशम्यैकादशीं त्यजेत् ।**
**सुराया बिन्दुना स्पृष्टं गङ्गाम्भ इव सन्त्यजेत् ।। १२७ ।।**

**ताम्रपर्णी**—इदानीं वेधश्चात्यल्पोऽप्येकादशीदूषक इत्याह— **कलेति** ।। अवेध-प्रयोजको यावान् कालो दशम्येकादश्योः शास्त्रविहितः तदतिक्रमे दशम्यां दशमीदिने कलावेधेऽपि विघटिकावेधेऽपि एकादशीं त्यजेदित्यर्थः । किमु बहुवेधे इत्यपेरर्थः । अल्पवेधेऽपि वहोस्त्याज्यत्वं किमु बहुवेध इत्युभयत्र दृष्टान्तद्वयमाह— **सुराया इति** ।। इवशब्दो यथेत्यर्थे । चशब्दस्तथेत्यर्थे । यथा सुराया बिन्दुना स्पृष्टं गङ्गाम्भो महदपि त्यज्यते । तथा कलावेधेऽपि एकादशी समग्रां त्यजेदित्यर्थः ।। १२७ ।।

**उमर्जी**—नन्वत्यल्पदशमीसम्बन्धमात्रेण कथं व्रतहानिरित्यत आह— **कलावेध इति** ।। कलामात्रदशम्या वेधेऽपि । सुरयेति तृतीया षष्ठ्यर्थे सुरायाः ।। १२७ ।।

---

*अयं श्लोकः नारदपुराणे २-२-३९ ।

[38] स्वल्पाञ्च [illegible]मींविद्धां त्यजेदेकादशीं बुधः ।
सुराबिन्दोस्तु सम्पर्काद् घृतकुम्भं त्यजेद्यथा ।। पाद्मे ४-१५-३४ ।।

**उपेन्द्र**—नन्वत्यल्पदशमीसम्बन्धे कुतो परित्याग इत्यत आह— **कलेति** ।। कलया लेशेनापि दशम्या वेधे सति । सुरयेति तृतीया षष्ठ्यर्थे ।। १२७ ।।

**कोनेरी**—दशम्याः कलावेधे घटिकाचतुष्टयात्मकारुणोदयकालस्य पूर्वतनघटिकान्त्यभागगतविघटिकावेधेऽप्येकादश्युपवासो न कार्यः । किमु अरुणोदयकालान्तर्गतघटिकादिवेध इति कैमुत्यमाह— **कलावेध इति** ।। तुशब्दोऽप्यर्थे । हे विप्रेन्द्र दशम्याः कलावेधेऽपि एकादशीं त्यजेन्नोपवसेत् । तत्रातिहेयदृष्टान्तमाह- — **सुरयेति** ।। ज्ञानिनो सुराबिन्दुसंसिक्तं गङ्गोदकमपि यथा त्यजन्ति तथा विद्धैकादश्युपवासं त्यजेत् । कलावेध इत्यत्र कलाशब्देन पलान्युच्यन्ते । तथा चतुष्टयघटिकात्मकारुणोदयकालात्पूर्वं विद्यमानो पञ्चदशविघटिकारूपद्रववेधो ग्राह्यः । सोऽपि तिथीनां वृद्धिक्षयसाम्यभेदेन त्रिविधः इति । तदुक्तं कौर्मे—

वेधस्तु द्विविधः प्रोक्तो स्वरूपाच्च द्रवांशतः ।<br>
तत्राद्ये नतु सन्देहो द्वितीयस्त्रिविधः स्मृतः ।।<br>
वेधस्तु पञ्चदशभिर्दशभिः पञ्चभिः क्रमात् ।<br>
पलैर्न्यूनः समाख्यातः वृद्धिसाम्यक्षयेषु च ।<br>
स भवेत्त्रिविधो वेधो हरिवासरदूषकः ।। इति ।।

त्यागविषये संशयो न कार्य इति । अतिहेयत्वद्योतनाय त्यजेदिति द्विवारोक्तिः ।। १२७ ।।

**स्मृ.कृष्णाचार्य**—दशम्याः कलयापि एकादश्या वेधे सति एकादशी न कार्येति सदृष्टान्तमाह— **कलावेधे त्विति** ।। हे विप्रेन्द्र दशम्या कलया लेशेनापि वेधे सति तादृशीमेकादशीं परित्यजेत्तत्र नोपवासं कुर्यात् । तत्र दृष्टान्तः । सुरया गौडादिमद्यबिन्दुना स्पृष्टं गङ्गाम्भ इव भागीरथीजलमिव मन्त्यजेत् ।। १२७।।

## कृष्णामृतमहार्णवः

* [1]श्वदृतौ पञ्चगव्यं च दशम्या दूषितां त्यजेत् ।<br>
एकादशीं द्विजश्रेष्ठाः पक्षयोरुभयोरपि ।। १२८ ।।

---

* अयं श्लोकः नारदपुराणे • २.४० ।

१. 'श्वपलौ' इति कोनेरी. स्मृ.कृ. तथा क. पाठः ।

**ताम्रपर्णी**—तथाच श्वदृतौ श्वानत्वचा सन्नद्धे जलपात्रे विद्यमानं पञ्चगव्यं दूषितं तथा दशम्याः एकद्वित्र्यादिघटिकाभिर्दूषितां विद्धामेकादशीं पक्षयोरुभयोरपि त्यजेदित्यर्थः ।। १२८ ।।

**उमर्जी**—श्वदृतौ श्वानचर्मकृतपात्रे । चशब्द उपमायाम् पञ्चगव्यमिव ।। १२८ ।।

**उपेन्द्र**—श्वदृतौ श्वानचर्मकृतभस्त्रे। चशब्द उपमायाम् पञ्चगव्यमिव ।। १२८ ।।

**कोनेरी**—विद्धैकादश्युपवासस्य पापातिशयत्वद्योतनायातिनिन्द्यदृष्टान्तान्तरमाह- – **श्वघृताविति** ।। श्वधृतौ शुना धृतौ स्पृष्टे इति यावत् । पञ्चगव्यमपि यथा त्यज्यते तथोभयोः पक्षयोः शुक्लकृष्णपक्षयोः विद्यमानां दशमीविद्धामेकादशीं त्यजेत् । उक्तञ्च स्मृतिकौस्तुभे—

श्वलीढं पञ्चगव्यञ्च दशमीदूषितां त्यजेत् ।
एकादशीं नरश्रेष्ठ पक्षयोरुभयोरपि ।। इति ।।

श्वधृताविति पाठे श्वचर्मनिर्मितपात्रे स्थितमित्यर्थः ।। १२८ ।।

**स्मृ.कृष्णाचार्य**—पुनरपि सदृष्टान्तवचनान्तरमाह— **श्वघृताविति** ।। हे द्विज-श्रेष्ठाः उभयोः पक्षयोश्शुक्लकृष्णपक्षयोः दशम्या दूषितामेकादशीं त्यजेत् । तत्रोप-वासं न कुर्यात् । किमिव श्वधृतौ पञ्चगव्यमिव शुनश्चर्मणि स्थितपञ्चगव्य-मिव त्यजेदित्यर्थः ।। १२८ ।।

**कृष्णामृतमहार्णवः**

***तस्माद्विप्रा न विद्धा हि कर्तव्यैकादशी क्वचित् ।**
**विद्धा हन्ति पुरापुण्यं श्राद्धं च वृषलीपतिः ।। १२९ ।।**

**ताम्रपर्णी**—धर्मान्निकृन्ततीत्येतद्विशदयति— **तस्मादिति** ।। यस्माच्छ्राद्धं वृषली-पतिरिव विद्धैकादश्यनुष्ठाता पुराकृतं पुण्यं हन्ति तस्मादित्यन्वयः ।। १२९ ।।

**उमर्जी**—उक्तार्थमुपपादयन्नुपसंहरति— **तस्मादिति** ।। सर्वकाले देशे वा । हिशब्दसूचितप्रत्यवायमाह— **हन्तीति** ।। पुरापुण्यं पुराकृतं पुण्यम् । वृषलीपतिः शूद्रस्त्रीपतिः ।

---

*अयं श्लोकः नारदपुराणे २-२-४५ ।

अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी ।
दशवर्षा भवेद्गौरी अत ऊर्ध्वं रजस्वला ।।

"तत्पतिर्वृषलीपतिः इत्याहुः वेदवादिन" इति वचनात् । रजोयुक्तकन्यापतिर्वा। चशब्द उपमायाम् । श्राद्धमिव ।। १२९ ।।

**उपेन्द्र**—उक्तार्थमुपसंहरति— **तस्मादिति** ।। विप्रा इति सम्बोधनम् । हिशब्द-सूचितमर्थमाह— **विद्धेति**।। पुरापुण्यं पुराकृतपुण्यम् । वृषली शूद्री रजस्वला कन्या वा । श्राद्धं श्राद्धमिव ।। १२९ ।।

**कोनेरी**—फलितमाह— **तस्मादिति** ।। तस्मात्पातकसद्भावात् हे विप्राः विद्धैकादशी क्वचित् कदापि न कर्तव्या नोपोष्येति हि स्मृतिसिद्धा । यदि कृता चेत् पुरा पूर्वकृतपुण्यं हन्ति नाशयति । वृषळीपतिः वृषलीपतिना । तृतीयार्थे प्रथमा सप्तसु प्रथमेत्युक्तेः । व्येतु ते वृषलाद्भयमिति प्रथमभागवतोक्तेः । वृषळः शूद्रः तत्सम्बन्धिनी तज्जातीया वृषली तां यो ब्राह्मणजातीयः भार्यात्वेन स्वीकृतवान् स वृषळीपतिः तत्कृतश्राद्धं यथा दूषयति पितृनधः पातयति तथेति । यद्वा अविवाहिता पितृगेहे ऋतुमती "अत ऊर्ध्वं रजस्वला" इत्युक्तेः तत्पतिर्वा । चशब्दो अर्थेत्यर्थसूचकः ।। १२९ ।।

**स्मृ.कृष्णाचार्य**—पुनरप्युपसंहारव्याजेन तदेवाह— **तस्मादिति** ।। हे विप्राः हि यस्माद्बहवो दोषाः सन्ति तस्माद्दशमीविद्धैकादशी क्वचिदपि शुक्लकृष्णपक्षयोरपि न कर्तव्या । तत्र को दोष इत्यत उक्तम् ।। **विद्धा हन्तीति** ।। विद्धा दशम्या विद्धा एकादशी एकादश्युपवासः पुराकृतं पुण्यं हन्ति । तत्र दृष्टान्तः ।। **श्राद्धं चेति** ।। वृषलीपतिः शूद्रस्त्रीगामी विप्रः रजस्वलकन्यापतिर्वा । श्राद्धं च श्राद्धमिव । तस्माद्विद्धा न ग्राह्येत्यर्थः ।। १२९ ।।

कृष्णामृतमहार्णवः

**जप्तं दत्तं हुतं स्नातं तथा पूजा कृता हरेः ।**
**तत्सर्वं [1]विलयं याति तमस्सूर्योदये यथा ।। १३० ।।**

---

१ 'विफलं' इति उम. तथा उपं. पाठ ।

**ताम्रपर्णी—**पुण्यविवरणम्— **जप्तमिति** ।। जप्तं जपः । दत्तं दानम् । हुतं हवनम् । स्नानम् । कृता हरेः पूजा चेति यत्तत्सर्वमित्यर्थः ।। १३० ।।

**उमर्जी—**पुण्यस्वरूपं निरूपयति— **जप्तमिति** ।। विद्धोपवासेन विफलं यातीत्यन्वयः।। १३० ।।

**उपेन्द्र—**विद्धोपवासे यज्जप्तं विफलं यातीत्यादिनान्वयः।। १३० ।।

**कोनेरी—**पुरापुण्यमित्युक्तं निर्दिशति— **जप्तमिति** ।। जप्तं गायत्रीमन्त्रादिभिर्जप्तं । दत्तं तुलापुरुषदानादि । हुतं वैश्वदेवादिकं । स्नानं गङ्गादिनदीषु । तथा पञ्चरात्रोक्तरीत्या कृता हरेः पूजा । तत्सर्वं विलयं याति नाशं प्राप्नोति । यथा सूर्योदये सति तमो नाशं प्राप्नोति तथेति ।। १३० ।।

**स्मृ.कृष्णाचार्य—**स्वकृतधर्मस्य सर्वस्य नाशकत्वाच्च विद्धा न कर्तव्येत्याह— **जप्तमिति** ।। जप्तं गायत्रीमन्त्रादिकं, दत्तं दानादिकं, हुतं होमादिकं, स्नातं तीर्थस्नानादिकम् । तथा हरेः कृता पूजा च तत्सर्वं उक्तं सर्वं विद्धैकादश्युपोषणेन विलयं याति । तत्र दृष्टान्तः ।। **तम इति** ।। सूर्योदये सति तमः अन्धकारः यथा विलयं याति नश्यति । तथा विद्धोपोषणेन सर्वं पुण्यं नश्यतीत्यर्थः ।। १३० ।।

**कृष्णामृतमहार्णवः**

**[1]एकादश्यां यदा ब्रह्मन्दिनक्षयतिथिर्भवेत् ।**
**उपोष्या द्वादशी [2]तत्र त्रयोदश्यां तु पारणम् ।। १३१ ।।**



**ताम्रपर्णी—**"सम्प्राप्ते वा दिनक्षय" इत्युक्तं विशदयति— **एकादश्यामिति**।। एकादश्यां ह्यप्रसक्तायां पूर्वे वासरे नवमीप्रातस्तदुपरि दशमीतिथिः दिनक्षयतिथिर्भवेत्तदा ह्योभाविनी एकादशी नोपोष्या । यद्वा तस्मिन्नेव दिने एकादश्यां तिथित्वेन प्रसक्तायां प्रातर्दशमी तदुपर्येकादशीति यदा दिनक्षयतिथिर्भवेत्तदा सैकादशी नोपोष्या । यद्वा प्रातरेकादशी द्वित्रिघटिकेति प्रसक्तायां तदुपरि द्वादशीदिनक्षयतिथिर्भवेत्तदा पूर्वदिनसंयुतैकादशी नोपोष्या । किन्तु पक्षत्रयेऽपि द्वादश्येवोपोष्या ।

---

१. 'एकादशी' इति कोनेरी पाठः ।

२. 'पुण्या' इति स्मृ.कृ. तथा कृ. पाठ. ।

त्रयोदश्यामेव पारणं कार्यमित्यर्थः । कदाचित् द्वादश्याः कलामात्रपरिशेषेण "पारणे मरणे चैव तिथिस्तात्कालिकी मता"इति वचनानुसारेण द्वादश्यामेव पारणेऽप्यल्पत्वात्तदविवक्षया त्रयोदश्यामित्युक्तम् ।। १३१ ।।

**उमर्जी**—नन्वेकादश्या दिनक्षये प्राप्ते परेद्युरेकादश्यभावात् कथमुपवासः कार्यः इत्यत आह— **एकादश्यामिति** ।। दिनक्षयतिथिः दशम्येकादशीद्वादशीत्रितय-योगः । तदा नोपोषणं कार्यम् । "एकादशी न संग्राह्या न कदाचिद्दिनक्षय" इति वचनात् । तर्हि कदोपवास इत्यत आह— **उपोष्येति** ।। तत्र तदा पारणकाले द्वादश्यभावात्कथं पारणमित्यत उक्तम् ।। **त्रयोदश्यामिति** ।। पारणं कार्यमिति शेषः । तुशब्देन—

दिनक्षयात्परा या तु द्वादशी समुपोषिता ।
इतरैकादशीभ्योऽस्याः सहस्रगुणितं फलम् ।।

इति प्रमाणसिद्धं फलविशेषं सूचयति ।। १३१ ।।

**उपेन्द्र**—नन्वेकादश्यां दिनक्षये कथं कार्यमित्यत आह— **एकादश्यामिति**।। "एकादशी न संग्राह्या न कदाचिद्दिनक्षय" इति वचनात् तदा नोपोष्या । **तर्हि** कदोपवास इत्यत आह— **उपोष्येति** ।। पारणकाले द्वादश्यभावात्कथं पारणमि-त्यत उक्तम् ।। **त्रयोदश्यामिति** ।। पारणं कार्यमित्यर्थः । तुशब्देन—

दिनक्षयात्परा या तु द्वादशी समुपोषिता ।
इतरैकादशीभ्योऽस्याः सहस्रगुणितं फलम् ।।

—इति प्रमाणप्रसिद्धफलविशेषं सूचयति ।। १३१ ।।

**कोनेरी**—क्षये वेत्युक्तानेकक्षयेष्वेकं दर्शयति— **एकादशीति** ।। हे ब्रह्मन् **शौनक** । एकादशी यदा दिनक्षयतिथिः भवेत् भवति । तत्र तदा एकादशी नोपोष्या । किन्तु द्वादशीमुपोष्य त्रयोदश्यां पारणं कार्यमिति शेषः । दिनक्षयलक्षण-मुक्तं **पद्मपुराणे** "द्वौ तिथ्यन्तावेकवारे यस्मिन्सः स्याद्दिनक्षयः" इति ।। १३१ ।।

**स्मृ.कृष्णाचार्य**—एकादश्यां दिनक्षये प्राप्ते तद्दिनं परित्यज्य केवलद्वादश्या-मेवोपवासं कृत्वा त्रयोदश्यां पारणं कर्तव्यमिति तत्र वचनान्तरमाह— **एका-**

**दश्यामिति** ।। हे ब्रह्मन्निति कस्यचिदृषेः सम्बोधनम् । हे ब्रह्मन्नेकादश्यां यदि दिनक्षयतिथिः पूर्वोक्तरीत्या त्रिदिनस्पृग्रूपक्षयतिथिर्भवेत् तदा पुण्या द्वादशी उपोष्या । ततस्त्रयोदश्यां तु पारणं कार्यमिति । अत्र समाख्यावचनम्—

दिनक्षयात्परा या तु द्वादशी समुपोषिता ।
इतरैकादशीभ्योऽस्याः सहस्रगुणितं फलम् ।। इति ।। १३१ ।।

### कृष्णामृतमहार्णवः

**प्रतिपत्प्रभृतयः सर्वा उदयादुदयाद्रवेः ।**
**सम्पूर्णा इति विज्ञेया हरिवासरवर्जिताः ।। १३२ ।।**

**ताम्रपर्णी**—नन्वेकादशी षष्टिघटिका चेत्सम्पूर्णत्वादुपोष्यत्वमेव । न तूदयकाले दशमीवेधवशेन त्याज्यत्वं नहि पूर्णतिथित्यागो युक्त इत्यत आह— **प्रतिपदिति**।। उदयात् उदयमारभ्य उदयादुदयपर्यन्तं हरिवासरवर्जिताः एकादशीव्यतिरिक्ताः। एकादश्यास्त्वरुणोदयवेलामारभ्यैव सम्पूर्णत्वमिति भावः ।। १३२ ।।

**उमर्जी**—नन्‌ द्वादश्यामेकादशीव्रतमयुक्तम् ।

यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानव्रतादिषु ।।

इति वचनविरोधादित्यत आह— **प्रतिपदिति** ।। उदयादुदयं उदयमारभ्य परेद्युः सूर्योदयपर्यन्तं सम्पूर्णाः व्रतयोग्याः इत्यर्थः ।

आदित्योदयवेलायां या तिथिर्भवति प्रभो ।
पूर्णा सेत्येव मन्तव्या...................... ।इति नारदीयोक्तेः ।।

एकादश्याः उदयात्पूर्वं मुहूर्तद्वयसंयुतत्वमेव पूर्णत्वमिति भावः ।। १३२ ।।

**उपेन्द्र**—

ननु द्वादश्यामेकादशीव्रतकरणमयुक्तम् ।
यां तिथिं समवष्टभ्य उदयं याति भास्करः ।
सा तिथिः सकला ग्राह्या............. ।।

इति वचनादित्यत आह— **प्रतिपदिति** ।। उदयादुदयं उदयमारभ्य परेद्युरुदयपर्यन्तं सम्पूर्णा सम्पूर्णफलप्रदा इत्युच्यते । तदुक्तं नारदीये—

आदित्योदयवेलायां या तिथिर्भवति प्रभो ।
पूर्णा सेत्यवगन्तव्या.................. ।।

इति एकादश्या उदयात्पूर्वमुहूर्तद्वयसंयुतत्वमेव पूर्णत्वमिति भावः ।। १३२ ।।

**कोनेरी**—दशम्यादितिथीनामरुणोदयवेध एव ग्राह्य इति वक्तुं सामान्यतो सर्वतिथीनां वेधलक्षणमाह— **प्रतिपदिति** ।। प्रतिपत्प्रभृतयस्सर्वास्तिथयः रवेरुदयमारभ्य यदा उदयात्प्रागुदितास्तिथयस्सम्पूर्णा इति विज्ञेयाः ।

यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया हरिवासरवर्जिता ।।

हरिवासरैर्हरिदेवताकदिवसैर्वर्जिता रहिता । अनेन हरिनक्षत्रयुक्तदिवसस्यापि हरिवासरत्वं ज्ञेयम् । कालात्पूर्वतनघटिकान्त्यभागसम्बन्धे सत्येव सम्पूर्णतिथित्वं ज्ञातव्यमिति भावः । हरिवासराणां तु रवेरुदयात्प्राग्विद्यमानघटिकाचतुष्टयात्मकारुणोदये सत्येव ।। १३२ ।।

**स्मृ.कृष्णाचार्य**—दशमीविद्धैकादशी त्याज्येत्युक्तम् । तत्र कदा विद्धा त्याज्येत्यतः अरुणोदयविद्धा त्याज्या । ननु प्रतिपदादितिथिवत्सूर्योदयविद्धा इति वक्तुमाह- – **प्रतिपत्प्रभृतय इति** ।। प्रतिपत्प्रभृतयः सर्वास्तिथयः उदयाद्रवेः प्रतिपदाद्युदयमारभ्य उदयात् द्वितीयाद्युदयपर्यन्तं सम्पूर्णाः षष्टिघटिकायुक्तत्वात्सम्पूर्णा इति ज्ञेयाः । हरिवासरस्य न तथात्वमित्याह— **हरिवासरवर्जिता इति** ।। एकादशीतिथिव्यतिरिक्ता इत्यर्थः । एकादश्यास्तु अरुणोदयकालमारभ्य सम्पूर्णत्वमिति ज्ञेयम् ।। १३२ ।।

**कृष्णामृतमहार्णवः**

*** [३१]अरुणोदयवेलायां दशमी यदि दृश्यते ।**
**न तत्रैकादशी कार्या धर्मकामार्थनाशिनी ।। १३३ ।।**

**ताम्रपर्णी—**पूर्वविद्धां परित्यजेदित्युक्तं कियद्धटिकावस्थदशम्या एकादशी-दूषकत्वमित्यत आह— **अरुणोदयेति** ।। अरुणोदयवेलायामिति सामीपिकाधिकरणे सप्तमी । अरुणोदयात्पूर्वकाले दशमी यदि दृश्यते इत्यर्थः । यद्वाऽरुणोदयस्य कालः अरुणोदयकालः । पूर्वापरभावश्च सम्बन्धः । अरुणोदयात्पूर्वकाल इति यावत् । तदुक्तं वादिराजतीर्थैस्तिथिनिर्णयव्याख्याने 'अतो वेलापदं ह्येतत्पूर्वकालस्य वाचकम् । पूर्वापरत्वं षष्ठ्यर्थः सम्बन्ध' इति । यद्वा अरुणोदयवेलायां दशमीदर्शनं नाम वृद्धौ दशमीवेधदर्शनं क्षये तु द्रवदर्शनं विवक्षितम् । तदुक्तं भविष्यत्पुराणे—

> अरुणोदयवेलायां दिशागन्धो भवेद्यदि ।
> दुष्टं तत्र प्रयत्नेन वर्जनीयं नराधिप ।। इति ।।

स्कान्दे च—

> पञ्चपञ्चाशतादूर्ध्वं वासना नाडिकाः स्मृताः ।
> तादृशी वासना युक्ता सुरायुक्तामृतोपमा ।। इति ।।

इति । वासनाकराः नाडिकाः वासनानाडिकाः । पञ्चपञ्चाशतः परं दशमीविघटिकानां कियतामवस्थाने अरुणोदयवेलायां दशमीगन्धः द्रववेध इति चेत् । अत्रोक्तं पण्डिताचार्यैस्तिथिनिर्णये—

> अतिवृद्धावष्टयुगं वृद्धावष्टौ चतुःसमे ।
> द्व्येकलिप्ती समे ह्रासे चतुष्कादुत्तरं त्विदम् ।। इति ।।

**अस्यार्थः**—अरुणोदयसंज्ञितघटिकाचतुष्काद्युत्क्रमेणोत्तरं पुरस्ताद्दशम्याः पञ्चपञ्चाशतः पश्चादतिवृद्धौ पादोनपञ्चघटिकामारभ्य सार्धषड्घटिकालक्षणातिवृद्धिकालेषु दशमीविघटिकानामष्टयुगमारभ्य षोडशविघटिकादर्शने वेधः । तत्रापि घटिकाषट्कादधिकवृद्धिदर्शने पञ्चपञ्चाशतः परं षोडशविघटिकामात्रसत्त्वेऽपि वेधोऽनुसरणीयः । पादोनपञ्चघटिकापर्यन्तं षट्कादौ एवं वृद्धिक्रमं पर्यालोच्य चतुर्विंशतिविघटिकापर्यन्तं दशम्यनुवृत्तौ वेध इति भावः । एवं वृद्धौ च पञ्चपञ्चाशतः परं द्वाविंशद्विघटिकावस्थाने वेध इत्याचार्यसम्प्रदायोऽपि तिथिनिर्णयानुग इति बोध्यम् । सार्धचतुष्टयसार्धत्रयघटिकावृद्धिलक्षणवृद्धिकालेषु विघटिकानामष्टयुगं युग्ममष्टौ चारभ्यावस्थाने वेधः । "एकद्वित्र्यात्मना वृद्धिः समवृद्धिरितो

रिता" इत्युक्तसमवृद्धिकालेषु तिथिसाम्ये च विघटिकानामष्टयुगं अष्टौ चतुः चतुरारभ्याष्टाविंशतिविघटिकामारभ्य दर्शने वेधः । समे ह्रासेऽल्पक्षये उक्तविघटिका पुनः द्विलिप्तिः पञ्चविघटिकात्मकलिप्तिद्वयं चारभ्याष्टत्रिंशद्विघटिकामारभ्य वर्तते चेद्वेधः। ह्रासे तिथिक्षय उक्तविघटिकाः पुनरेकां लिप्तिं पञ्चविघटिकाश्चारभ्य त्रिचत्वारिंश-द्विघटिका आरभ्य दशम्या दर्शने वेध इत्यर्थः । लिप्तिशब्दस्य पञ्चविघटिकार्थत्वं च—

लिप्तिर्विघटिकाः पञ्च लिप्तयो द्वादशैव तु ।
घटिकैका समुद्दिष्टा ज्योतिःशास्त्रप्रसिद्धितः ।।

इत्यभियुक्तवचनाद् ज्ञेयम् । दशमीवेधादिनिर्णयश्चार्यभट्टशास्त्रानुसारेण कार्यः । तथाच निर्णयामृते—

आर्यभट्टेन गणनं दशम्यादिदिनत्रये ।
कार्यमन्यत्र सौरेण निश्चितं ब्रह्मवित्तमैः ।। इति ।।

तथा—

व्रतानामेव सर्वेषां सौरेणैव विनिर्णयः ।

तथा—

दशम्यादित्रयाणां तु आर्येणैव विनिर्णयः ।। इति ।।

ननु—

पञ्चपञ्चाशतादूर्ध्वं दशमी यदि दृश्यते ।
सन्दिग्धैकादशी नाम परित्याज्या महात्मभिः ।
पञ्चपञ्चाशतादूर्ध्वं दृश्यते यदि भास्करी ।(यमवासरः)
द्रष्टव्या सा प्रयत्नेन वर्जनीया नराधिप ।।

अत्र भास्करी दशमी ।

पञ्चपञ्चाशतादूर्ध्वं दृश्यते यमवासरः ।
तिथिवृद्धौ क्षये वापि वर्जयेद्वैष्णवोत्तमः ।।

यमवासरः दशमी ।

पञ्चपञ्चाशतादूर्ध्वं दशमी चेन्न विद्यते ।
शुद्धा सैकादशी ग्राह्या त्वन्यथा न कथञ्चन ।। इत्यादेः ।।

पञ्चपञ्चाशतादूर्ध्वं दशम्या संस्पर्श एव शुद्धैकादशीत्वोक्तेर्विरोध इति चेन्न । पञ्च-पञ्चाशतादूर्ध्वं तदुपरितनघटिकायां कतिपयविघटिकानन्तरं दशमी चेन्न विद्यत इत्यर्थस्य तिथिनिर्णयवचनानुसारेण कार्यत्वात् ।

अन्यथा—

अर्धरात्रात्परा विद्धा विद्धा वा ह्यरुणोदये ।
अपि षड्घटिभिर्विद्धा सदा तां परिवर्जयेत् ।।

इत्यादिस्मृतिरप्यनुसरणीया स्यात् । अत्र व्यासतीर्थश्रीमच्चरणानां मठीयसम्प्रदायस्तु पञ्चपञ्चाशतः परं आर्यभट्टेन नवनाडीमात्रदर्शनेऽपि वृद्धिक्षयसाधारण्येन वेधो अनुष्ठेयः ।

पञ्चपञ्चाशदधिका नवनाडी यदा भवेत् ।
न ग्राह्या दशमीविद्धा विष्णुव्रतपरायणैः ।।

इति साम्प्रदायिकवचनात् । सूर्यसिद्धान्तेन तु त्रिपञ्चाशद्घटिकाया उपरि ह्यणुमात्र-दर्शने वृद्धिक्षयसाधारण्येन वेधः ।

यत्र पञ्चाशतादूर्ध्वमणुमात्रं च दृश्यते ।
दशम्येकादशी विद्धा............. ।। इति वचनात् इति ।।

विजयीन्द्रश्रीपादानां पक्षोऽप्येवमेव । विशेषस्तु वृद्धिक्षयसाधारण्येन । सूर्य-सिद्धान्ते तु त्रिपञ्चाशद्घटिकानन्तरं किञ्चिदाधिक्ये वेध इत्यस्यानाश्रयणमिति । उक्तं च विजयीन्द्रश्रीपादमठीयैस्तत्सम्प्रदायज्ञैः षट्पञ्चाशद्घटिकायां वृद्धिक्षय-साधारण्येनादिभागे नवनाडिका यदा चार्यभट्टेन दृश्यते तदा वेध इत्यस्मन्मठसम्प्र-दाय इति। अस्मन्मठसम्प्रदायस्तु पञ्चपञ्चाशतः परं वृद्धिक्षयसाधारण्येनार्यभट्टेन पञ्चचत्वारिंशद्विघटिकादर्शने वेधः । एवं सत्यरुणोदयवेलायां दशमी यदि विद्यत इति वाक्यमतिसामीप्यात्स्वरसतरं भवतीति तेषां भावः ।। १३३ ।।

**उमर्जी**—दशम्या वेधः कदा इत्यत आह— **अरुणोदयवेलायामिति** ।। एकादश्याः अरुणोदयकाले । तत्र दिवसं एकादशी उपवासलक्षणा ।। १३३।।

**उपेन्द्र**—दशम्या वेधः कदेत्यत आह— **अरुणोदयवेलायामिति श्लोकद्वयेन** ।। एकादश्याः अरुणोदयकाले । तत्र तदा उपवासलक्षणा एकादशी ।। १३३ ।।

**कोनेरी**—उक्तार्थदार्ढ्यार्थं वचनान्तरमाह— **अरुणोदयवेलायामिति** ।। उक्त-रीत्या अरुणोदयवेलायां दशमी यदि दृश्यते । तत्र तस्मिन्दिने । एकादशी दशमीविद्धैकादशी न कार्या । एकादशीनिमित्तोपवासः न कार्यः । सा विद्धैकादशी उपोषिता चेत् धर्मार्थकामानां नाशनी भवतीति योज्यम् ।। १३३ ।।

कृष्णामृतमहार्णवः

**[1]अरुणोदयकाले तु दशमी यदि दृश्यते ।**
**पापमूलं तदा ज्ञेयमेकादश्युपवासनम् ।।**
**न तत्रैकादशी कार्या धर्मकामार्थनाशिनी ।। १३४ ।।**

**ताम्रपर्णी**—विद्धोपोषणस्योक्तं धर्मनाशाख्यं फलमनूद्य फलान्तरमाह— **अरुणो-दयेति** ।। १३४ ।।

**कोनेरी**—हरिवासराणां सूर्योदयवेधं निषिद्ध्य तद्वेधात् कार्त्स्न्यनियममाह— **अरुणो-दयकाले इति** ।। अरुणोदयकाले अरुणोदयागमनकाले अरुणोदयात्पूर्वं कतिपय-घटिकाविशिष्टकाल इत्यर्थः । यदि दशमी दृश्यते तदा तस्यां एकादश्यां कृतमुपवासं पापमूलं पातकसम्पादकमिति ज्ञेयम् । ज्ञानिभिरिति शेषः ।। १३४ ।।

**स्मृ.कृष्णाचार्य**—दशमीविद्धैकादशी त्याज्येत्युक्तम् । कदा दशमीविद्धा त्याज्ये-त्यतः अरुणोदयवेलायां दशमीसम्बन्धे सति त्याज्या इत्याह— **अरुणोदय-वेलायामिति** ।। एकादश्यां अरुणोदयवेलायां यदि दृश्यते तदा एकादशीव्रतं निषिद्धमित्याह— **पापमूलमिति** ।। तदा अरुणोदये दशमीसम्बद्धे सति तादृशै-कादश्युपवासनं पापमूलं पापनां मूलकारणम् । तस्मादरुणोदयकाले दशम्या सम्बद्धैकादश्यामुपवासनं न कार्यमिति । तत्र समाख्यावचनानि ।।

गोभिलः—

अरुणोदयवेलायां दशम्या यदि संयुता ।
सम्पृक्तैकादशी तां तु मोहिन्यै दत्तवान्हरिः ।। इति ।।

---

१ 'अरुणोदयवेलायां' इति स्म.क. पाठः ।

भविष्यत्पुराणे च—

अरुणोदयकाले तु दशमी यदि दृश्यते ।
सा विद्धैकादशी तत्र पापमूलमुपोषणम् ।। इति ।।

तथा—

अरुणोदयवेलायां दशागन्धो भवेद्यदि ।
प्रदुष्टं तत्र यत्नेन वर्जनीयं नराधिप ।। इति ।।

दशा दशमी । तथा—

अरुणोदयवेलायां दशमी कलयापि वा ।
विद्धां परित्यजेन्नित्यं शुद्धां चोपवसेद्गृही ।।

—इत्यादीनि द्रष्टव्यानि ।। १३४ ।।

**कृष्णामृतमहार्णवः**

**चतस्रो घटिकाः प्रातररुणोदय उच्यते ।**
**यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः ।। १३५ ।।**

**ताम्रपर्णी**—अरुणोदयशब्दार्थमाह— **चतस्र इति** ।। प्रातःकालमवधीकृत्य तत्पूर्वं चतस्रो घटिकाः पूर्वभागे प्राप्तारुणोदयोपलक्षितत्वादरुणोदय उच्यत इत्यर्थः। प्रसङ्गादाह— **यतीनामिति** ।। अयमरुणोदयः कालः यतीनां स्नानकालः कुतः यतोऽयं कालः यत्रकुत्रचिज्जले स्नानं कुर्वतामपि यतीनां गङ्गाजलस्नानफलप्रदतया तत्सदृशः स्मृतः । तस्माद्यतीनां स्नानकाल इत्यर्थः ।। १३५ ।।

**उमर्जी**—अरुणोदयः कदा इत्यत आह— **चतस्र इति** ।। प्रातः उदयात्पूर्वं यं कालं अवष्टभ्य चतस्रः घटिकाः उर्वरिताः इति शेषः । स कालो अरुणोदय उच्यते । "यत्पञ्चघटिकादूर्ध्वमरुणोदय उच्यते" इति वचनात् । घटिकाचतुष्टयात्पूर्वकाले दशम्या सम्बन्धे सति कथं परेद्युरुपवासदूषकत्वं इत्यत उक्तम् ।। **यतीनामिति** ।। अयमरुणोदयकालः यतीनां स्नानकालः । यतीनां व्रतारम्भकालत्वाद्व्रतदूषकत्वं सम्भवतीति भावः । यतीनां स्नानकालयोग्यत्वे फलाधिक्यं दर्शयति— **गङ्गाम्भःसदृश इति** ।। गङ्गाम्भसः पावनकरत्वेन सदृशः । गङ्गाम्भःस्नानेन यत्फलं तत्फलं भवतीत्यर्थः ।। यतीनां स्नानकालः ब्रह्मवैवर्ते अभिहितः

चतस्रो घटिकात्पूर्वं रवेः स्यादरुणोदयः ।
यतीनां स्नानकालोऽयं न कालो गृहधर्मिणाम् ।। इति ।।
पञ्चपञ्चाशद्घटिकानन्तरमेव वेध इत्यत्र विष्णुधर्मोत्तरे ।
पञ्चपञ्चाशद्घटिका दशमी यदि दृश्यते ।
उपोष्या द्वादशी पुण्या त्रयोदश्यां तु पारणम् ।।
अरुणोदयतः पूर्वं व्यवधानमितीरितम् ।
महाक्षये क्षये चैव सम्प्राप्ते च दिनक्षये ।।
महावृद्धौ च वृद्धौ च द्वादश्यामुपवासनम् ।
वेधा वै विविधाः प्रोक्ताः पुण्यमूलनिकृन्तनीः ।।
व्यवधानान्तरे प्राहुरन्यथा किं वदाम्यहम् ।।
अरुणोदये यथा पूर्वं महावृद्धौ तु नाडिका ।
तथा वृद्धौ यथासङ्ख्यं वेधास्तत्र विदो विदुः ।।
महारूपेऽपि वेधा वै या च नाडी तथैव च ।
तथा क्षये दशोना वै नाडीनां सम्प्रकीर्तिता ।।
समे विंशतिसङ्ख्याता विनाडीवेधका भवेत् ।
चतुःपञ्चाधिकस्पर्शः सप्तपञ्चदशास्तथा ।
पञ्चपञ्च भवेच्छल्यः स वेधः षट्कपञ्चकः ।।
स्पर्शनी धर्महानिः स्यात्सङ्गिनी धर्महानिदा ।
सशल्यो निष्फलो धर्मः सवेधे नरकं व्रजेत् ।।

पञ्चपञ्चाशद्घटिकानन्तरं षट्पञ्चाशद्घटिकायां चतुःपञ्चाशद्घटिकाः पञ्चदशविघटिकाः सङ्गः । पञ्चाशद्विघटिकाः शल्यः । षट्पञ्चविघटिकाः वेधः ।
अत्रार्थे त्रिविक्रमपण्डिताचार्यः—

एकातिद्वादशीवृद्धौ नो चेद्वृद्धौ तु षोडश ।
द्व्येकलिप्ती समे ह्रासे चतुष्कादुत्तरं त्विदम् ।।

एका घटिका अतिवृद्धौ इति सम्बन्धः । दशम्या इति शेषः । षट्पञ्चघटिकावृद्धिः । अतिवृद्धौ द्वादशी उपोष्येति सम्बन्धः । अतिवृद्धौ नो चेत् । वृद्धौ तु वृद्धिमात्रे

षोडशविनाडिका । द्व्येकलिप्ती द्वित्वैकत्वलिप्ती । लिप्तिर्नाम पञ्चविघटिका । चतुष्कात्सूर्योदयात्प्राक् घटिकाचतुष्कादुत्तरं अवरोहणक्रमेण पूर्वकाल इत्यर्थः ।

अयमर्थः । दशम्या अतिवृद्धौ चतुष्कादुत्तरं एका । सूर्योदयात्पूर्वं पञ्चपञ्चघटिकावेधायां दशमी परिदृश्यते । तदा द्वादशी उपोष्या । वृद्धौ चतुष्कादुत्तरं षोडश। उदयात्पूर्वं षोडशविघटिकाधिकघटिकाचतुष्कवेधायां चतुश्चत्वारिंशद्विघटिकाधिकपञ्चपञ्चाशदधिकघटिका चेति यावत् । समे चतुष्कादुत्तरं द्विलिप्तिः । दशविघटिकाधिकचतुष्कवेधायां पञ्चाशद्विघटिकाधिकवञ्च । पञ्चाशद्विघटिकेति यावत् । ह्रासे चतुष्कादुत्तरं एका लिप्तिः । पञ्चविघटिकाधिकघटिकाचतुष्कवेधायां पञ्चपञ्चाशद्विघटिकाधिकपञ्चपञ्चाशद्धटिकेति यावत् ।

अत्रैवार्थे सम्प्रदायशिष्टवचनम्—

पञ्चपञ्चाशदधिका नवनाडी यदा भवेत् ।
उपोष्या द्वादशी शुद्धा त्रयोदश्यां तु पारणम् ।।इति औत्तरीयाः।।
अतिवृद्धावष्टयुगं वृद्धावष्ट समे चतुः ।
द्व्येकलिप्ती समे ह्रासे चतुष्कादुत्तरं त्विदम् ।।

इति पण्डिताचार्यवचनान्तरम् । अतिवृद्ध्यादीनां स्वरूपमुक्तं ग्रन्थान्तरे ।।

षट्पञ्च त्वतिवृद्धिः स्यात्समवृद्धिश्चतुस्त्रयः ।
एकद्विहीनवृद्धिस्तु समत्वं त्रिदिनेषु च।।
द्व्येकहीनं क्षयं प्रोक्तं द्विचतुश्च समक्षयम् ।
अतिक्षये पञ्चषट्कं इति वेधास्तु सप्तधा ।।

इति सिद्धान्तात्करणप्रकाशिकावृद्धिः।

हीनातिसमवृद्धौ तु त्रिदिनेषु समेषु च ।
हीनरूपे विघटिका एकैकातिसमक्षये ।।

वृद्धिशब्दः हीनेत्यादिना सम्बद्ध्यते । हीनवृद्धिरिति वृद्धिसमवृद्धिषु तिथिसाम्ये हीनरूपे तेषु पञ्चसु विघटिकावृद्धिर्भवति । अतिक्षये समक्षये चैकैका घटिका आर्यमानविघटिकाः । अतिसमक्षयवृद्धौ चातिसाम्ये ह्रस्वक्षयसमक्षये चातिक्षीणकाले क्रमात्ताः ।

हरिदिनकतिसंख्या चार्यमाने विनाड्यः परशरखरसर्पः धृनघोटः खरोनः ।

पर २१ शर २५ खर २२ सर्प १७ धून ९ घोट ४६ खर २२ ।।

एकविंशत्पञ्चविंशद्द्वाविंशत्सप्तयुग्दश ।

नवैव षट्चत्वारिंशद्द्वाविंशश्च विनाडिकेति ।

परशरेत्यादिसंख्यार्थः ।

सार्धद्विघटिकावृद्धौ साम्ये द्विघटिका भवेत् ।

क्षये सार्धैकघटिका सौरार्यभटयोर्भवेत् ।। इति वचनान्तरम् ।।

वृद्धौ तु घटिकास्तिस्रः समे सार्धद्विनाडिका ।

क्षये विघटिका प्रोक्ता दशम्यादिदिनत्रये ।।

—इति विद्याधीशश्रीपादानां निर्णयवचनम्।

अतिवृद्धावष्टयुगमित्यस्यायमर्थः । चतुष्कादुत्तरं त्विदमिति सप्तविधवेधासु सम्बध्यते । इदमष्टयुगादिकं चतुष्कान्मूलवाक्योक्तघटिकानां चतुष्टयादुत्तरमिवोत्तरं पूर्वकालं विज्ञेयम् । अतिवृद्धौ प्राप्तायां अष्टयुगम् । अष्टानां युग्मम् । षोडशसंस्कारलिप्तयो ग्राह्याः । वृद्धौ समे समानाधिकरणे सप्तम्यौ । समवृद्धौ इत्यर्थः । अष्टचतुरिति द्वादशलिप्तयो ग्राह्याः । हीनवृद्धौ चतुर्द्वे च चतुरो द्विगुणं कुर्यात् । एक इत्येक एव । तथाच नवलिप्तयो ग्राह्याः । समे ह्रासे समह्रासपक्षे चतुर्द्वेति चत्वारश्च द्वौ च षड् लिप्तयो ग्राह्याः । ह्रासे अतिक्षये चतुरेक इति चत्वारश्च एकश्च पञ्चसंस्कारलिप्ताः । नच चतस्र इति वक्तव्ये चतुरिति अपप्रयोगः । नारायणार्थे यतीन् भोजयेच्चतुरष्टौ द्वादश वेति विष्णुतीर्थीये ज्योतिःशास्त्रे च प्रयोगदर्शनात् । उक्तार्थे प्रमाणवचनम्—

संस्कारलिप्ता षोडशातिवृद्धौ वृद्धौ समं द्वादशलिप्तकाश्च ।

हीने च वृद्धौ नवलिप्तकाश्च समे च संस्कारविलिप्तका षट् ।।

हीनक्षये सत्यविलिप्तसाकं समक्षये चैव विलिप्तयश्च ।

अतिक्षये पञ्चविलिप्तसार्धं द्विनाडिका पञ्चविलिप्त एकः ।। इति ।।

पूर्वोक्तश्लोकद्वयस्यापि वादिराजतीर्थानां श्लोकपरव्याख्या—

अस्यार्थः कथ्यते पूर्वविद्वच्छिक्षानुसारतः ।

एकान्तिद्वादशीवृद्धौ नोचेदित्येकवाक्यता ।।

वृद्धौ तु षोडशेत्यंतदपरं तत्परं परम् ।

आदिपादस्यादिवाक्यं द्वितीयस्य द्वितीयकम ।।

वाक्ये द्वितीयपद्येऽस्मिन् तृतीयस्य तृतीयकम् ।
षट्पञ्चघटिकावृद्धिरतिवृद्धिरिहोच्यते ।।
एकद्वित्र्यात्मका वृद्धिः समवृद्ध्यादिका स्मृता ।
चतुष्कान्मूलवाक्योक्तघटिकानां चतुष्टयात् ।
उत्तरं पूर्वकाले च तज्ज्ञेया दशमी तिथिः ।
अतिवृद्धौ नचेत्साम्यवृद्धौ तद्वेधवर्जिता ।।
घटिकैका यदि भवेच्छुद्धा सा सकला तिथिः ।
वृद्धावत्यन्तवृद्धौ तु लिप्तयः षोडशैव तु ।।
तद्वेधहीना यर्हि स्युः शुद्धा सा सकला तिथिः ।
लिप्तिर्विघटिकाः पञ्चलिप्तयो द्वादशैव तु ।।
घटिकैका तु विज्ञेया ज्योतिःशास्त्रोक्तमार्गतः ।
पञ्चाशदुत्तरा षष्टिः घटिकैकार्धलिप्तयः ।।
चतस्रः पञ्चमीप्रान्तभागात्मकतया स्मृताः ।
एवं षोडश सर्वोक्ता दशमी वेधवर्जिताः ।।
यदि स्युस्तिथयस्तर्हि शुद्धा सा सकला तिथिः ।
समे द्विलिप्तिकामात्रं ह्रासे त्वेकैव सा मता ।।
चतुष्कादुत्तरं चैतद्दशमी वेधवर्जितम् ।।
अतिवृद्धावष्टयुगमष्टद्वन्द्वे हि षोडश ।
लिप्तयो वेधहीनाः स्युः वृद्धौ सत्यां समे दिने ।।
सति साम्येन वृद्धिश्चेदिति यावत्तदष्टकम् ।
चतुष्टयं तु लिप्तीनामेवं द्वादशलिप्तयः ।।
घटिकैका भवेत्सर्वा दशमी वेधवर्जिता ।
अन्यत्स्पृष्टं लिप्तमात्राश्रयाच्छ्लोकोऽयमुत्तरः ।।
इति श्रीमध्वकृपया हयग्रीवस्य किंकरः ।
एकादशीनिर्णयोऽयं वादिराजो यतिः स्फुटम् ।। इति ।।

स्मृतिकौस्तुभे कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यकृतश्लोकद्वयस्य सम्प्रदायानुसारेणार्थः कथ्यते—"एकादिद्वादशीवृद्धौ" इत्यकं वाक्यम् । वृद्धौ

षोडशेति द्वितीयं वाक्यम् । द्वेकलिप्ती समे ह्रास इति तृतीयं वाक्यम् । द्वितीयश्लोके तु अतिवृद्धावष्टयुगमिति आद्यं वाक्यम् । वृद्धावष्टसमे चतुरिति द्वितीयम् । द्व्येकलिप्ती समे ह्रासे इति तृतीयम् । षट्पञ्चघटिकावृद्धिरिति वृद्धिः । एकद्वित्र्यादिका वृद्धिः समवृद्धिः चतुष्कादुत्तरं त्विदमित्यस्यायमर्थः । चतुष्कात् "चतस्रो घटिकाः प्रातररुणोदय उच्यते" इत्याचार्योक्तघटिकाचतुष्टयादुत्तरमवरोहणक्रमेण पूर्वकाले दशमीवेधवर्जितम् । द्वादश्यतिवृद्धौ इति यावत् । एकघटिका तु विशेषेण वृद्धौ अतिवृद्धाविति यावत् । षोडशलिप्तयः लिप्तिः पञ्चविघटिकाः । तथाचायमर्थः । द्वादशी अतिवृद्धौ नो चेत्सम्यग्वृद्धौ चतुष्काद्धटिकानां चतुष्कादुत्तरं अवरोहणक्रमेण पूर्वकाले एका घटिका यदि दशमी वेधवर्जिता तदा इदं दशमीवेधवर्जनं ज्ञेयम् । दशमीवेधवर्जितैकादशीति यावत् । अतिवृद्धौ तु अत्यन्त-वृद्धिपक्षे चतुष्कादुत्तरं यदि षोडशलिप्तयो दशमीवेधवर्जितास्तदा एकादशी तिथिः शुद्धा । समे तिथिसाम्यपक्षे चतुष्कादुत्तरं द्विलिप्ते दशमीवेधवर्जिते तदा एकादशीतिथिः शुद्धा । ह्रासपक्षे चतुष्कादुत्तरं यद्येकलिप्तिः दशमीवेधवर्जिता तदा एकादशीतिथिः शुद्धा । समे वृद्धौ साम्यवृद्धौ चतुष्कादुत्तरं अष्टचतुरिति द्वादशलिप्तयः । एका घटिकेति यावत् । सा यदि दशमीवेधवर्जिता तदा एकादशीतिथिः शुद्धा । द्व्येकलिप्त्यादिकं पूर्वमेव व्याख्यातम् । लिप्तिघटिकाश्रयणेन पूर्वश्लोकः प्रवृत्तः । लिप्तिमात्राश्रयेण द्वितीय इति । एवं दशम्या वेधनिर्णयस्त्वायंभटेन कार्यः ।

तदुक्तम्—

वृद्धौ प्रवृद्धसिद्धान्तमधिगम्य मुनीश्वराः ।
दैवज्ञैर्निर्णयः कार्यः दशम्यादिदिनत्रये ।।

"विष्णुधर्मेषु योऽधिकः" इति च । "साम्ये सौरः क्षये ब्राह्मः" पञ्चपञ्चाशद्धटिकानन्तरमेव षट्पञ्चाशद्धटिकायां वेध इत्यत्र वैष्णवसंहितायां मत्स्यावतारकथनावसरे—

पञ्चपञ्चाशतादूर्ध्वं दृश्यते यमवासरः ।
द्रष्टव्या सा प्रयत्नेन वर्जनीया नराधिप ।। इति ।।

यमवासरो दशमीत्यर्थः ।।

पञ्चपञ्चाशतादूर्ध्वं वासनानाडिका स्मृता ।
तादृशी वासनायुक्ता सुरायुक्तामृतोपमा ।
पञ्चपञ्चाशतादूर्ध्वं दृश्यते यदि भास्करी ।
तिथिवृद्धौ क्षये वापि वर्जयेद्वैष्णवोत्तमः ।। इति ।।

भास्करी दशमी इति । अनेकग्रन्थस्थवाक्यानि द्रष्टव्यानि । अत्र श्रीपादानां सम्प्रदायभेदाः । पञ्चपञ्चाशद्धटिकानन्तरं षट्पञ्चाशद्धटिकायां वृद्धिक्षयासाधारण्येन कथं चत्वारिंशद्विघटिकाः । करणप्रकाशेन यदा दृश्यन्ते तदा दशमीवेध इति रघूत्तमश्रीपादानां सम्प्रदायः । अत्रार्थे सम्प्रदायविशिष्टवचनम्—

आर्यमाने यदा नाड्यः षट्पञ्चाशत्परेऽहनि ।
नो चेत्पूर्वेव दशमी किञ्चिन्न्यूनं परेऽहनि ।। इति ।।

किञ्चिदित्यस्य विंशतिघटिकान्यूनमिति व्याख्यातम् ।

व्यासराजमठीयरामचन्द्रस्वामिनां सम्प्रदायस्तु—

पञ्चपञ्चाशदधिका नवनाडी यदा भवेत् ।
उपोष्या द्वादशी शुद्धा त्रयोदश्यां तु पारणम् ।।

—इति अधिकसिद्धान्तेन निर्णयः ।

सिद्धान्तेन निर्णयस्तु—

द्विपञ्चघटिकोर्ध्वं च दशमी नवनाडिका ।
अतिवृद्धौ परेद्युः स्यान्न्यूना चेत्पूर्ववासरे ।।
त्रयः पन्नगता या तु कलामात्राधिका यदि ।
समे परदिनं ग्राह्यं न्यूना चेत्पूर्ववासरे ।।
चतुःपञ्चाशदुपरि कलामात्राधिका यदि ।
महाक्षये परेद्युः स्यान्न्यूना चेत्पूर्ववासरे ।।

सिद्धान्तादार्यभटवृद्धौ प्रमाणम् ।।

वृद्धौ तिस्रः समे द्वे च क्षये तु घटिका स्मृता ।

इति पक्षत्रयप्रमाणानुसारेण सिद्धान्ते वृद्धावेका घटिका । साम्ये अर्धघटिका । क्षये पादघटिका इति । षट्पञ्चाशदार्यभटवृद्धिर्भवतीति ज्योतिःशास्त्रनिर्णयः । एकघटिकावृद्धौ दर्शविघटिकाः ।

अयं भावः—षट्घटिकावृद्धौ सिद्धान्तात् तिस्रः घटिकाः वृद्धाः भवन्ति । पञ्चघटिकावृद्धौ सिद्धान्ताद्विघटिकाधिकचत्वारिंशद्विनाडिका भवन्ति । त्रिघटिकावृद्धौ सिद्धान्ताद् द्विघटिकाधिकत्रिंशद्विघटिका भवन्ति । द्विघटिकावृद्धौ सिद्धान्ताद् द्विघटिकाधिकविंशद्विघटिका भवन्ति । एकघटिकावृद्धौ सिद्धान्तात्तद्विघटिकाधिकदशविघटिका भवन्ति । तिथिसाम्ये सिद्धान्ताद् द्वे घटिके भवतः । एकघटिकाक्षये सिद्धान्ताद्धटिकैका भवति । द्विघटिकाक्षये सिद्धान्तादेकघटिका द्विघटिकाश्चत्वारिंशद्भवन्ति । त्रिघटिकाक्षये सिद्धान्ताद्धटिकैका त्रिंशद्विघटिका भवन्ति । चतुर्घटिकाक्षये सिद्धान्ताद्धटिकैका विंशद्विघटिका भवन्ति । पञ्चघटिकाक्षये सिद्धान्ताद्धटिकैका त्रिंशद्विघटिका भवन्ति । चतुर्घटिकाक्षये सिद्धान्ताद्धटिकैका विंशद्विघटिका भवन्ति । पञ्चघटिकाक्षये सिद्धान्ताद्धटिकैका दश विघटिका भवन्ति । षड्घटिकाक्षये सिद्धान्ताद्धटिकैका भवतीति रामचन्द्रस्वामिनां सम्प्रदायभेदाः । विजयीन्द्रस्वामिनां सम्प्रदायस्तु—षट्पञ्चाशद्विघटिकायां वृद्धिक्षयसाधारण्येनादिभागे नवनाडिका यदा करणप्रकाशेन दृश्यते तदा वेध इति श्रीपादानां सम्प्रदायभेदाः ।। १३५ ।।

**उपेन्द्र**—अरुणोदयः कदेत्यत आह— **चतस्र इति** ।। प्रातरुदयात्पूर्वं यं कालमपेक्ष्य चतस्रो घटिकाः उर्वरिताः स कालः अरुणोदय उच्यते । ननूदयचतुष्टयघटिकात्पूर्वकाले दशम्या सम्बन्धे सति कथं पूर्वेद्युः क्रियमाणव्रतदूषकत्वमित्यत उक्तम् ।। **यतीनामिति** ।। यतीनां स्नानादिव्रतारम्भकालत्वात्तद्व्रतदूषकत्वं सम्भवतीति भावः । अस्य कालस्य यतीनामेव फलसाधनत्वमाह— **गङ्गाम्भस्सदृश इति** ।। यतीनामिति सम्बन्धः । यतीनां स्नानयोग्यत्वेन गङ्गाम्भसि क्रियमाणः स्नानफलसदृशफलप्रद इत्यर्थः । गङ्गाम्भसः पावनकरत्वं सदृश इति वा । यतीनां स्नानकालः ब्रह्मवैवर्तेऽभिहितः—

> चतस्रो घटिकाः पूर्वं रवेः स्यादरुणोदयः ।
> यतीनां स्नानकालोऽयं न कालो गृहधर्मिणाम् ।।
> सन्ध्यार्चनक्रियायोग्यः न कालोऽयं मनीषिणाम् ।। इति ।।
> उषस्युषसि यः स्नानं सन्ध्यायामुदिते रवौ ।
> प्राजापत्येन तत्तुल्यं सर्वपापप्रणाशनम ।। इति व्यासवचनाच्च ।।

पञ्चपञ्चाशद्धटिकानन्तरमेव वेध इत्यत्र विष्णुधर्मोत्तरे उत्तरभागे—

पञ्चपञ्चाशदधिका दशमी यदि दृश्यते ।
उपोष्या द्वादशी पुण्या त्रयोदश्यां तु पारणम् ।।
अरुणोदयतः पूर्वं कलावेधाद्विदूषिता ।
कलेति घटिका प्रोक्ता महावृद्धौ महीपते ।।
तदर्धार्धात्तथा ज्ञेया क्षयवृद्धौ महाक्षये ।
व्यवधानाव्यवधानाभ्यां वृद्धिवेध इतीरितः ।।
अरुणोदयतः पूर्वं व्यवधानमितीरितम् ।
महाक्षये क्षये चैव सम्प्राप्ते वा दिनक्षये ।।
महावृद्धौ च वृद्धौ च द्वादश्यामुपवासनम् ।
विद्धा वै विविधाः प्रोक्ताः पुण्यमूलनिकृन्तनीः ।।
व्यवधानान्तरं प्राहुरन्यदा किं वदाम्यहम् ।
अरुणोदयतः पूर्वं महावृद्धौ तु नाडिका ।।
तथा वृद्धौ यथासंख्यं वेधास्तत्र विदो विदुः ।
महाक्षयेऽपि वेधा वै पादनाडी तथैव च ।।
तथा क्षये दशोना वै विनाडीनां प्रकीर्तिता ।
समे विंशतिसंख्याता विनाडीवेधका भवेत् ।।
चतुःपञ्चाधिकः स्पर्शः सङ्गः पञ्चदशस्तथा ।
पञ्च पञ्च भवेच्छल्यः स वेधः षट्कपञ्चकः ।।
स्पर्शनी धर्महानिः स्यात्सङ्गिनी धनहानिदा ।
सशल्यो निष्फलो धर्मः सवेधे नरकं व्रजेत् ।।

पञ्चपञ्चाशद्धटिकानन्तरं षट्पञ्चाशद्धटिकायां चतुःपञ्चाशद्विघटिकास्पर्शे अतिवृद्धाविति सम्बन्धः । दशम्या इति शेषः । षट्पञ्चघटिकावृद्धिः अतिवृद्धिः । द्वादशी उपोष्या इति सम्बन्धः । अतिवृद्धौ नो चेत् वृद्धौ वृद्धिस्तु वृद्धिमात्रे षोडशविघटिका द्व्येकलिप्ती द्वित्वैकत्वयुक्ते लिप्ती । लिप्तिर्नाम पञ्चविघटिकाः । चतुष्कात्सूर्योदयात्प्राग्घटिकाचतुष्कादुत्तरमारोहक्रमेण पूर्वकाल इत्यर्थः ।

अयमर्थः—दशम्या अतिवृद्धौ चतुष्कादुत्तरं सूर्योदयात्पूर्वं पञ्चघटिकावेधायां दशमी यदि दृश्यते तदा द्वादशी उपोष्या । वृद्धौ चतुष्कादुत्तरं षोडश उदयात्प्राक् षोडशविघटिकाधिकघटिकाचतुष्कवेलायां चतुश्चत्वारिंशद्घटिकाधिकपञ्चपञ्चाश-द्धटिका दशमीति यावत् । समे चतुष्कादुत्तरं द्विलिप्तिः । दशविघटिकाधिक-चतुष्कवेलायां पञ्चाशद्धटिकाधिकपञ्चाशद्विघटिकेति यावत् । ह्रासे च चतुष्काद-त्तरमेकलिप्तिः । पञ्चविघटिकाधिकघटिकाचतुष्कवेधायां पञ्चपञ्चाशद्विघटिका-धिकपञ्चपञ्चाशद्विघटिकेति यावत् । अत्रैवार्थे सम्प्रदायशिष्टवाक्यम्—

पञ्चपञ्चाशदधिका नवनडी यदा भवेत् ।
उपोष्या द्वादशी शुद्धा त्रयोदश्यां तु पारणम् ।
अतिवृद्धावष्टयुगं वृद्धावष्टसमे चतुः ।
द्व्येकलिप्ती समे ह्रासे चतुष्कादुत्तरं त्विदम् ।। इति ।।

त्रिविक्रमपण्डिताचार्यवचनस्यायमर्थः । अतिवृद्ध्यादीनां स्वरूपमुक्तं ग्रन्थान्तरे-

षट्पञ्च त्वतिवृद्धिः स्यात्समवृद्धिश्चतुस्त्रयः ।
एकद्वितीयहानिस्तु समत्वं त्रिदिनेषु च ।।
द्व्येकं हीनक्षयं प्रोक्तं त्रिचतुश्च समक्षयम् ।
अतिक्षयं पञ्चषष्ट्यामिति वेधास्तु सप्तधा ।। इति ।।

सिद्धान्तात्करणप्रकाशिकावृद्धिप्रकारः ।

हीनातिसमवृद्धौ तु त्रिदिनेषु समेषु च ।
हीनक्षये द्विघटिका एकैकातिसमक्षये ।।

अस्यार्थः— वृद्धिशब्दः हीनेत्यादिना सम्बद्ध्यते । हीनवृद्धौ अतिवृद्धौ समवृद्धा-वित्यर्थः । हीनक्षये अल्पक्षये । तेषु पञ्चसु घटिकासिद्धान्ताद्वृद्धिर्भवतीत्यर्थः । अतिक्षये समक्षये एकैका घटिका वृद्धिर्भवति ।

सार्धद्विघटिकावृद्धौ साम्ये द्विघटिका भवेत् ।
क्षये सार्धैकघटिका सौरार्यभटयोर्भवेत् ।।इति सम्प्रदायवचनम् ।।
वृद्धौ तु घटिकास्तिस्रः समे सार्धाद्विनाडिका ।
क्षये द्विघटिका प्रोक्ता सौरार्यभटयोर्भवेत ।।

इति सम्प्रदायाद्विद्याधीशश्रीपादानां निर्णयवचनम् । आर्यमानविघटिकावृद्धिप्रति-पादकवचनम् । अतिक्षयसमवृद्धौ चातिसाम्येऽतिह्रासक्षयसमक्षयातिक्षीणकाले क्रमात्ताः ।

हरिदिनकतिसंख्याचार्यमाने विनाड्यः परशरखरसर्पः धूनषोढाखरोनम् । परा २१ शरा २५ खरा २२ सर्प १७ धूनं ९ षोढा ४६ खर २१ एकविंशत् पञ्चविंशत् द्वात्रिंशत्सप्तयुग्दश नवैव षट्चत्वारिंशद्वाविंशञ्च विनाडिका । इति परशरेत्यादिसंख्यार्थः । औत्तरीयास्तु अतिवृद्धावष्टयुगमिति श्लोकस्यायमर्थः । चतुष्कादुत्तरं त्विदमिति सप्तविधवेधासु सम्बध्यते । इदमष्टयुगादिकं चतुष्कान्मूल-वाक्योक्तघटिकानां चतुष्टयादुत्तरमिव उत्तरं पूर्वकाले विज्ञेयमित्यर्थः । अतिवृद्धौ प्रायोऽप्यष्टयुगं अष्टानां युगं युग्मं षोडशसंस्कारलिप्तयः ग्राह्याः । वृद्धौ समे समानाधिकरणे सप्तम्यौ । समवृद्धावित्यर्थः । अष्टचतुरिति द्वादशलिप्तयो ग्राह्याः । हीनवृद्धौ चतुर्द्वे चतुरः द्विगुणं कुर्यात् । एक इत्येक एव । तथाच नवलिप्ताः ग्राह्याः। समह्रसे समह्रासपक्षे चतुर्द्वेति चत्वारश्च द्वौ च षट् लिप्ताः ग्राह्याः । ह्रसे अतिक्षये चतुरेक इति चत्वारश्च एकश्च पञ्चसंस्कारलिप्ताः ग्राह्याः । नच चतस्र इति वक्तव्ये चतुरित्यपप्रयोगः । नारायणार्थं यतीन् भोजयेच्चतुरष्टौ द्वादश वेति विष्णुतीर्थीये ज्योतिःशास्त्रे च प्रयोगदर्शनात् । उक्तार्थे सम्प्रदायवचनं च ।

संस्कारलिप्ताः षोडशातिवृद्धौ वृद्धौ समे द्वादशलिप्तकाश्च ।
हीने च वृद्धौ नवलिप्तकाश्च समे च संस्कारविलिप्तका षट् ।
हीनक्षये सप्तविलिप्तसाकं समक्षयं चैव विलिप्तकाष्टः ।।
अतिक्षये पञ्चविलिप्तसार्धं द्विनाडिका पञ्चविलिप्त एकः ।। इति ।।

"एकातिद्वादशी वृद्धौ" इत्यादिपण्डिताचार्योक्तश्लोकद्वयस्य वादिराजतीर्थाः—

अस्यार्थः कथ्यते पूर्वविद्वच्छिक्षानुसारतः ।
एकातिद्वादशीवृद्धौ नोचेदित्येकवाक्यता ।।
वृद्धौ तु षोडशेत्येतदपरं यत्परं परम् ।
आदिपादस्यादिवाक्यं द्वितीयस्य द्वितीयकम् ।।
वाक्ये द्वितीयाद्येऽस्मिन् तृतीयस्य तृतीयकम् ।
षटपञ्चघटिकावृद्धिरतिवृद्धिरिहोच्यते ।।

एकद्वित्र्यादिका वृद्धिः समवृद्ध्यादिका स्मृता ।
चतुष्कान्मूलवाक्योक्तघटिकानां चतुष्टयात् ।
उत्तरं पूर्वकाले च तज्ज्ञेया दशमी तिथिः ।।
अतिवृद्धौ नचेत्साम्यवृद्धौ तद्वेधवर्जिता ।
घटिकैका यदि भवेच्छुद्धा सा सकला तिथिः ।
वृद्धावत्यन्तवृद्धौ तु लिप्तयः षोडशैव तु ।
तद्वेधहीना यर्हि स्याच्छुद्धा सा सकला तिथिः ।।
लिप्तिर्विघटिकाः पञ्च लिप्तयो द्वादशैव तु ।
घटिकैका तु विज्ञेया ज्योतिःशास्त्रोक्तमार्गतः ।
पञ्चाशदुत्तरा षष्ठिः घटिकैका तु लिप्तयः ।
चतस्रः पञ्चमीप्रान्तभागात्मकतया स्मृताः ।
एवं षोडश सर्वोक्ता दशमी वेधवर्जिताः ।
यदि स्युस्तिथयस्तर्हि शुद्धा सा सकला तिथिः ।
समे द्विलिप्तिकामात्रं ह्रासे त्वेकैव सा मता ।
चतुष्कादुत्तरं चैतद्दशमीवेधवर्जितम् ।
अतिवृद्धावष्टयुगं अष्टद्वन्द्वं हि षोडश ।
लिप्तयो वेधहीनाः स्युः वृद्धौ सत्यां समे दिने ।।
सति साम्ये न वृद्धिश्चेदिति यावत्तदष्टकम् ।
चतुष्टयं तु लिप्तीनामेवं द्वादशलिप्तिकाः ।
घटिकैका भवेत्सर्वा दशमी वेधवर्जिता ।
अन्यत्स्पष्टं लिप्तिमात्राश्रयाच्छ्लोकोऽयमुत्तरः ।। इति ।।

स्मृतिकौस्तुभे पण्डिताचार्यकृतश्लोकद्वयस्य सम्प्रदायानुसारेणार्थः कथ्यते—एकादिद्वादशीवृद्धौ नोर्चेदित्येकं वाक्यम् । वृद्धौ षोडशेति द्वितीयम् वाक्यम् । द्व्येकलिप्ते समे ह्रास इति तृतीयं वाक्यम् । द्वितीयश्लोके तु अतिवृद्धावष्टयुगमिति आद्यवाक्यम् । वृद्धावष्टयुगे चतुरिति द्वितीयम् । द्व्येकलिप्ती समे ह्रास इति तृतीयम् । षट्पञ्चघटिकावृद्धिरिति वृद्धि. । एकद्वित्र्यादिका वृद्धिः समवृद्ध्यचतुष्कादुत्तरं त्विदमित्यस्यायमर्थः । चतुष्कात् चतस्रो घटिकाप्रातररुणोदय उच्यत

इत्याचार्योक्तघटिकाचतुष्टयात् उत्तरमवरोहक्रमेण पूर्वकाले इदं दशमीवेधवर्जनं द्वादशी अतिवृद्धौ नोचेत्साम्यवृद्धाविति यावत् । एका घटिका तु विशेषेण वृद्धौ अतिवृद्धाविति यावत् । षोडश लिप्तयः । लिप्तीर्नाम पञ्चविघटिकाः ।

तथाचायमर्थः— द्वादशी अतिवृद्धौ नोचेत्साम्यवृद्धौ चतुष्काद्धटिकानां चतुष्टयादुत्तरमवरोहक्रमेण पूर्वकाले एका घटिका यदि दशमी वेधवर्जिता तदा इदं दशमीवेधवर्जनं ज्ञेयम् । दशमीवेधवर्जिता एकादशीति यावत् । वृद्धौ अत्यन्तवृद्धिपक्षे चतुष्कादुत्तरं यदि षोडशलिप्तयो दशमीवेधवर्जिताः तदा एकादशी तिथिः शुद्धा ज्ञेया । समे तिथिः साम्यपक्षे चतुष्कादुत्तरं द्विलिप्ते दशमी वेधवर्जिते तदा एका-दशी तिथिः शुद्धा । ह्रासपक्षे चतुष्कादुत्तरं यद्येकलिप्तिः दशमी वेधवर्जिता तदा एकादशीतिथिः शुद्धा । इत्याद्यश्लोकस्यार्थः ।

द्वितीयश्लोकस्यायं निष्कर्षः । अतिवृद्धावष्टयुगं षोडशलिप्तयः चतुष्कादुत्तरं दशमी वेधवर्जिता तदा एकादशी शुद्धा । समे, वृद्धौ सत्यां चतुष्कादुत्तरमष्टौ चतुरिति द्वादशलिप्तयः । एका घटिकेति यावत् । सा यदि दशमी वेधवर्जिता तदा एका-दशी शुद्धा । द्व्येकलिप्त्यादिकं तु पूर्वमेव व्याख्यातम् । लिप्तिघटिका-श्रयणेन पूर्वश्लोकप्रवृत्तिः । लिप्तिमात्राश्रयणेन द्वितीय इति । एवं दशम्या वेधनिर्णयः आर्यभटेन कार्यः ।

तदुक्तं—

आर्यमाने यदा नाड्यः षट्पञ्चाशत्परेऽहनि ।
नोचेत्पूर्वैव दशमी किञ्चिन्न्यूनं परेऽहनि ।।
षट्पञ्चघटिकादूर्ध्वं अरुणोदय उच्यते ।
सौरमानेन चान्द्रेण आर्यमानेन वा भवेत् ।। इति ।।
ब्राह्मेण पैतृकादीनि दैवकर्माणि सारतः ।
द्वादश्यादिव्रतादीनि आर्येणैव तु कारयेत् ।।
विष्णुव्रतानि चार्येण निश्चितानि मनीषिभिः ।
सर्वेषामुपवासानां आर्येणैव विनिर्णयः ।।
दशम्यादित्रयाणां तु आर्येणैव तु निर्णयः ।
दशम्यादित्रयाणां त स्तम्भेनैव त निर्णयः ।।

स्तम्भो आर्यभटः ।

स्तम्भेन निर्णयः कार्यो दशम्यादिदिनत्रये ।। इति निर्णयसारे ।।

आर्यभट्टेन गणनं दशम्यादिदिनत्रये ।। इति ।।

"वृद्धावार्यभटी ग्राह्या तिथिवृद्धौ पराशरः" । पराशर आर्यभटः । षट्पञ्चाशद्घटि-कायां वेध इत्यत्र वैष्णवसंहितायां मत्स्यावतारकथनावसरे—

पञ्चपञ्चाशतादूर्ध्वं दृश्यते यदि भास्करी ।

द्रष्टव्या सा प्रयत्नेन वर्जनीया नराधिप ।।

भास्करी दशमी ।

पञ्चपञ्चाशतादूर्ध्वं वासनाडिका स्मृता ।

तादृशी वासनायुक्ता सुरायुक्तामृतोपमा ।।

पञ्चपञ्चाशतादूर्ध्वं दृश्यते यमवासरः ।

तिथिवृद्धौ क्षये वापि वर्जयेद्वैष्णवोत्तमः ।।

यमवासरः दशमी ।

पञ्चपञ्चाशदधिका नवनाडी यदा भवेत् ।

उपोष्या द्वादशी शुद्धा त्रयोदश्यां तु पारणम् ।।

इत्याद्यनेकग्रन्थस्थवाक्यानि द्रष्टव्यानि ।

वेधाः सप्तविधाः । अतिवृद्धौ वेधो यथा सिद्धान्तात्करणप्रकाशकघटिके द्वे । एकविंशद्विघटिकाः । संस्कारलिप्ताः षोडश । सर्वमेलनेन षट्पञ्चाशद्घटिकया दशम्या विद्धा भवति ।

समवृद्धौ तु सिद्धान्तात्करणप्रकाशिका पञ्चविंशद्विघटिकाः घटिके द्वे । पञ्च विघटिकाः । संस्कारलिप्ताः द्वादश । सर्वमेलनेन षट्पञ्चाशद्घटिकया दशम्या विद्धा भवति ।

हीनवृद्धौ तु सिद्धान्तात्करणप्रकाशिका घटिके द्वे । द्वात्रिंशद्विघटिकाः । संस्कार-लिप्ताः नव । सर्वमेलनेन षट्पञ्चाशद्विघटिकया दशम्या विद्धा भवति ।

तिथित्रयसाम्ये सिद्धान्तात्करणप्रकाशिका घटिके द्वे । सप्तदशविघटिकाः । अष्ट संस्कारलिप्ताः । सर्वमेलनेन षटपञ्चाशद्घटिकया विद्धा भवति ।

हीनक्षये सिद्धान्तात्करणप्रकाशिका घटिके द्वे । नवविघटिकाः । संस्कारलिप्ताः सप्त । सर्वमेलनेन षट्पञ्चाशद्धटिकया दशम्या विद्धा भवति ।

समक्षये सिद्धान्तात्करणप्रकाशिका घटिकैका । षट्पञ्चाशद्विघटिकाः । संस्कार-लिप्ताः षट् । मिलित्वा षट्पञ्चाशद्धटिकया दशम्या विद्धा भवति ।

अतिक्षये सिद्धान्तात्करणप्रकाशिका घटिकैका । द्वात्रिंशद्विघटिकाः । संस्कार-लिप्ताः पञ्च । सर्वमेलनेन षट्पञ्चाशद्धटिकया दशम्या विद्धा भवति ।

अतिवृद्धिपक्षे विंशद्विघटिकान्यूनमपि विद्धा भवति ।

तदुक्तं—

आर्यमाने यदा नाड्यः षट्पञ्चाशत्परेऽहनि ।
नोचेत्पूर्वेव दशमी किञ्चिन्न्यूनं परेऽहनि ।।

किञ्चिच्छब्दस्य विंशद्धटिकान्यूनमिति व्याख्यातम् ।। १३५ ।।

**कोनेरी**—अरुणोदयवेधमुक्त्वा कियत्कालपर्यन्तमरुणोदय इत्याशंकायामाह- - **चतस्रो घटिका प्रातरिति** ।। सूर्योदयासन्नकालः प्रातःकाल इत्युच्यते ।

प्रातरारभ्य सायान्तं सायादि प्रातरेव हि ।
यत्करोमि जगन्नाथ तदस्तु तव पूजनमिति ।।

एतादृशप्रातःकालात् पूर्वतनाश्चतस्रो घटिका अरुणोदयः अरुणोदयकालः उच्यते । कालप्रशंसार्थं उक्तम् । "यतीनां स्नानकालोऽयं गङ्गाम्भस्सदृशः स्मृतः" इति ।। १३३ ।।

**स्मृ.कृष्णाचार्य**—अरुणोदये अरुणोदयवेलायां दशमीवेधे सति एकादशीव्रतं न कार्यमित्युक्तम् । तत्र अरुणोदयकालः क इत्यतः तत्स्वरूपं प्रमाणेनाह— **चतस्रो घटिका प्रातरिति** ।। एकादश्याः प्रातःकाले सूर्योदयात्पूर्वं याश्चतस्रो घटिका वर्तन्ते स काल अरुणोदय इत्यर्थः । प्रसङ्गात्तत्कालस्य वैशिष्ट्यमाह— **यतीनामिति** ।। योऽयं कालो यतीनां स्नानकालः कुतः यतो गङ्गाम्भःसदृशं गङ्गोदकवत्स्नानफलप्रदं तस्मादित्यर्थः । अत्र समाख्यावचनानि प्रमाणसङ्ग्रहे—

चतस्रो घटिका प्रातररुणोदय उच्यते ।। इति ।। तथा—
षट्पञ्चाशदनाक्रान्ताश्चतस्रो घटिकास्तु याः ।
अरुणोदय इत्याहुस्तत्र वेधाश्चतुर्विधाः ।।

वेधातिवेधौ विज्ञेयौ महावेधस्तृतीयकः ।

चतुर्थश्च तथा प्रोक्तो योगस्सूर्योदयः स्मृतः ।। इति ।।

ब्रह्मवैवर्तेऽपि—

चतस्रो घटिकाः प्रातररुणोदयनिश्चयः ।

चतुष्टयविभागोऽत्र वेधादीनां किलोदितः ।। इति ।।

तथा स्कान्दे विशेषोऽभिहितः—

अरुणोदयतः पूर्वं कलावेधविदूषिता ।

कलेति घटिका प्रोक्ता महावृद्धौ महीपते ।।

तदर्धार्धा तथा ज्ञेया क्षयवृद्धौ महाक्षये ।

व्यवधानाव्यवधानाभ्यां वृद्धिर्वेध इतीरितः ।।

अरुणोदयतः पूर्वं व्यवधानमितीरितम् ।

महाक्षये क्षये चैव सम्प्राप्ते वा दिनक्षये ।

महावृद्धौ च वृद्धौ च द्वादश्यामुपवासनम् ।

वेधा वै विविधाः प्रोक्ताः पुण्यकर्मनिकृन्तनीः(नाः) ।

व्यवधानान्तरे प्राहुरन्यथा किं वदाम्यहम् ।। इत्यादि ।।

तथाच अरुणोदयवेलायामिति वेलाशब्दसूचितारुणोदयात्पूर्वकाले षट्पञ्चाशद्घटिकायां यदा दशमीसम्बद्धैकादशी प्रतीयते । तदा सैकादशी विद्धैकादशीति नोपोष्येति तात्पर्यम् ।

अरुणोदयतः पूर्वं कलावेधविदूषिता ।

कलेति घटिका प्रोक्ता.............. ।।

इति वचने षट्पञ्चाशद्घटिकायां वृद्धिक्षयाभ्यां वेधोक्तेः ।। तथा त्रिविक्रमपण्डिताचार्यैरपि अरुणोदयतः पूर्वं षट्पञ्चाशद्घटिकायामेव वेधविचारोक्तेः ।

एकादिद्वादशीवृद्धौ नो चेद्वृद्धौ तु षोडश ।

द्व्यर्कल्प्तौ समे ह्रासे चतुष्कादुत्तरं त्विदम् ।।

अतिवृद्धावष्टयुगं वृद्धावष्टसमे चतुः ।

द्व्यर्कल्प्तौ समे ह्रासे चतुष्कादुत्तरं त्विदम् ।। इति ।।

अस्य श्लोकद्वयस्य वादिराजतीर्थैरुक्तव्याख्यानं लिख्यते ।

अस्यार्थः कथ्यते पूर्वविद्वच्छिक्षानुसारतः ।
एकातिद्वादशी वृद्धौ नोचेदित्येकवाक्यता ।।
वृद्धौ तु षोडशेत्येतदपरं तत्परं पदम् ।
आदिपादस्यादिवाक्यं द्वितीयस्य द्वितीयकम् ।।
वाक्यं द्वितीयपद्येऽस्मिन् तृतीयस्य तृतीयकम् ।
षट्पञ्चघटिकावृद्धिरतिवृद्धिरिहोच्यते ।
एकद्वित्र्यात्मका वृद्धिः समवृद्धिरिति स्मृता ।।
चतुष्कान्मूलवाक्योक्तघटिकानां चतुष्टयात् ।
उत्तरं पूर्वकाले तु ज्ञेयेत्थं दशमी तिथिः ।।
अतिवृद्धौ न चेत्साम्यवृद्धौ तद्वेधवर्जिता ।
घटिकैका यदि भवेच्छुद्धा सा सकला तिथिः ।
वृद्धावत्यन्तवृद्धौ तु लिप्तयः षोडशैव तु ।
तद्वेधहीना यर्हि स्युः शुद्धा सा सकला तिथिः ।
लिप्तिर्विघटिकाः पञ्चलिप्तयो द्वादशैव तु ।
घटिकैका तु विज्ञेया ज्योतिःशास्त्रोक्तमार्गतः ।
पञ्चाशदुत्तरा षष्टिः घटिकैकाथ लिप्तयः ।
चतस्रः पञ्चमी प्रान्तभागात्मकतया स्थिताः ।
एवं षोडश सर्वोक्ता दशमी वेधवर्जिताः ।
यदि स्युर्लिप्तयस्तर्हि शुद्धा सा सकला तिथिः ।।
समे द्विलिप्तिकामात्रं ह्रासे त्वेकैव सा मता ।
चतुष्कादुत्तरं त्वेतद्दशमी वेधवर्जनम् ।।
अतिवृद्धावष्टयुगमष्टद्वन्द्वं हि षोडश ।
लिप्तयो वेधहीनाः स्युर्वृद्धौ सत्यां समं दिनं ।।
सति साम्यं न वृद्धिश्चेर्दति यावत्तदाष्टकम् ।
चतुष्टयं च लिप्तीनामेवं द्वादशलिप्तयः ।।
घटिकैका भवेत्सर्वा दशमी वेधवर्जिता ।
अन्यत्स्पृष्टं लिप्तिमात्रायात् श्लोकोऽयमुत्तरः ।।

अस्यार्थः—अतिद्वादशीवृद्धौ नोचेद् द्वादशीसाम्यवृद्धिपक्षे चतुष्काद्धटिकानां चतुष्टयादुत्तरं अवरोहक्रमेण पूर्वकाले एका घटिका यदि दशमीवेधवर्जिता तदा दशमीवेधरहितैकादशी । ततो न्यूना चेद्विद्धेति । वृद्धौ सत्यां अत्यन्तवृद्धिपक्षे चतुष्कादुत्तरं यदि षोडशलिप्तयः तदा दशमी वेधवर्जिता । ततो न्यूना चेद्विद्धेति। समे साम्यपक्षे चतुष्कादुत्तरं षट्पञ्चाशद्धटिकायाः यदि विलिप्तिस्तदा शुद्धा । ततो न्यूना चेद्विद्धेति । ह्रासे ह्रासपक्षे चतुष्कादुत्तरं यदि एकलिप्तिर्भवति तदा शुद्धा । ततो न्यूना चेद्विद्धेति । लिप्तिरिति पञ्चविनाडिकोच्यते । द्वितीयश्लोकस्य तु । अष्टयुगं षोडशलिप्तयः अतिवृद्धौ चतुष्कादुत्तरं वेधरहिता चेच्छुद्धा । अन्यथा विद्धेति । समे वृद्धौ साम्यवृद्धौ अष्टचतुश्चतस्रश्च मिलित्वा द्वादशलिप्तयः । एकघटिकेति यावत् । दशमी वेधरहिता चेत्सा ग्राह्येति उत्तरार्धार्थः पूर्वमेवोक्तः। एवञ्च एकादश्यतिवृद्धौ वृद्धिमात्रे समे ह्रासे च क्रमात् अरुणोदयत्प्राक् यथा व्युत्क्रमेण घटिकैका विंशतिविनाडिका । वृद्धिमात्रे घटिकैका समे द्वादशविनाडिका ह्रासे पञ्चविनाडिका चेत् न वेधः । तदपेक्षया न्यूना चेद्विद्धेत्यर्थः । तत्र साम्प्रदायकैर्निर्णीतश्लोकः ।

> पञ्चपञ्चाशदधिका नवनाडी यदा भवेत् ।
> न ग्राह्या दशमीविद्धा विष्णुव्रतपरायणैः ।। इति ।।

वेधविषये षट्पञ्चाशद्धटिकाया वृद्धिसाम्यक्षयादौ कालनिर्णयायोगेन वेधसन्देहेऽपि एकादशीत्याज्यत्वोक्तेः तथा कर्तव्यमित्यरुणोदयवेलायामित्याचार्यवचनाभिप्रेतमुक्तम् । वेधसन्देहेऽपि एकादश्यास्त्याज्यत्वमुक्तं बहुवचनेषु ।

> बहुवाक्यविरोधेन सन्देहो जायते यदा ।
> द्वादशी तु तथा ग्राह्या त्रयोदश्यां तु पारणम् ।।

तथा संग्रहे—

> बहुनात्र किमुक्तेन सन्देहो जायते यदि ।
> एकादशी परित्यज्य द्वादशी समुपोषयेत् ।।

अत्र कृष्णामृतेऽपि—

> बह्वागमविरोधेन सन्देहो जायते यदा ।
> उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम् ।। इति ।।

तस्मादरुणोदयवेलायामित्युक्तषट्पञ्चाशद्घटिकायामधिकसिद्धान्तेन वृद्धिक्षयादिना दशमीयोगसन्देहेऽपि तादृशैकादशीं त्यक्त्वा द्वादश्यामुपवासः कर्तव्य इत्याचार्य-वचनाभिप्रायः । किञ्च षट्पञ्चाशद्घटिकायाः पूर्वभावि पञ्चपञ्चाशद्घटिकायामपि दशमीवेधे तादृशैकादश्यास्त्याज्यत्वं स्कान्दे वैष्णवसंहितायां मत्स्यावतार-कथनावसरे एकादशीप्रसङ्गेऽभिहितः । तदुक्तप्रकारेणापि वेधाकरणे षट्पञ्चाशद्घ-टिका कैमुत्येन कृता स्यादिति । सम्प्रदायश्लोकस्योक्तत्वात्तदुक्तप्रकारेण वेधः सर्वैः कार्यः । तथाच—

पञ्चपञ्चाशतादूर्ध्वं दशमी यदि दृश्यते ।
सन्दिग्धैकादशी ज्ञेया परित्याज्या महात्मभिः ।।
एवं पञ्चाशतादूर्ध्वं दृश्यते यदि भास्करी ।
द्रष्टव्या सा प्रयत्नेन वर्जनीया नराधिप ।।

भास्करी दशमी ।।

पञ्चपञ्चाशतादूर्ध्वं वासनानाडिका स्मृता ।
तादृशी वासनायुक्ता सुरायुक्तामृतोपमा ।।

वासना दशमी ।।

पञ्चपञ्चाशतादूर्ध्वं दृश्यते यमवासरः ।
तिथिवृद्धौ क्षये वापि वर्जयेद्वैष्णवोत्तमः ।

यमवासरो दशमी ।।

पञ्चपञ्चाशतादर्वाक् षट्पञ्चाशत्तथैव च ।
पञ्चपञ्चाशतादर्वाक् यदा स्याद्दशमी तदा ।।

तदैकादशी शुद्धा । यदा षट्पञ्चाशद्घटिका दशमी तदा विद्धेत्यर्थः ।।

तथा—

षट्पञ्चाशदधो यत्र कलया दृश्यते यमः ।
एकभुक्तोपवासे च पारणे च परं परम् ।।

यमो दशमी । तत्र यदा षट्पञ्चाशद्घटिकाभ्यः सकाशादधः कलया सह "काष्ठास्त्रिं-शस्तु ताः कला" इत्युक्तेः विद्धा दृश्यत इत्यर्थः । एकभुक्तोपवासे दिने एक-

भुक्तविषये, एकादशीदिने उपवासविषये, द्वादशीदिने पारणादिविषये, तद्दिनं परं परदिनं ग्राह्यम् श्रेष्ठमित्यर्थः ।

पञ्चपञ्चाशतादूर्ध्वं दशम्या चेन्न विद्ध्यते ।
शुद्धा सैकादशी ग्राह्या अन्यथा न कदाचन ।। इत्यादि ।।

तथा—

उदयात्प्राग्यदा विप्रा मुहूर्तद्वयसंयुता ।
सम्पूर्णैकादशी नाम तत्रैवोपवसेद्गृही ।। इत्यत्रैवोत्तरवचनाच्च ।।

एवं पञ्चपञ्चाशद्वेधनिर्णयश्च ।

सर्वेषामुपवासानां सौरेणैव विनिर्णयः ।
दशम्यादित्रयाणां तु आर्येणैव विनिर्णयः ।।

इति निर्णयसारोक्तरीत्या आर्यभटेन गणनं कृत्वा निर्णयः कार्यः । तदलाभे— "त्रयः पन्नगतं चापि अणुमात्रं तु दृश्यते" । दशम्येकादशीत्युक्तरीत्या सूर्यसिद्धान्तेन त्रिपञ्चाशद्घटिकायां दशमीसम्बन्धे पञ्चपञ्चाशद्घटिकायां अधिकसिद्धान्तेन वेधः भवति । क्षयवृद्धौ किञ्चिदूनत्रिपञ्चाशद्घटिकायां सत्यामधिकसिद्धान्तेन आर्यभटेन किञ्चिदधिकपञ्चाशद्घटिका भवतीति ।

सार्धद्विघटिकावृद्धौ साम्ये द्विघटिका भवेत् ।
क्षये सार्धैकघटिका सौरार्यभटयोर्भवेत् ।।

इति ज्योतिःशास्त्रे सौरसिद्धान्तादार्यभट्टस्याधिक्योक्तेः । तथा आधुनिकैर्वेधः क्रियते। साम्प्रदायकोक्तश्लोकश्च स्कान्दे वैष्णवसारोक्तरीत्या त्रिविक्रम-पण्डिताचार्यः साम्यपक्षोक्तरीत्या तदनुसारीति सर्वैरङ्गीकार्यमित्याचार्याभिप्रेतम्। अत्र विषये सम्प्रदायभेदश्च । षट्पञ्चाशद्घटिकयां वृद्धिक्षयसाधारण्येन आदिभागे नवनाडिका यदा आर्यभटेन दृश्यते तदा दशमीवेध इत्यस्मन्मठसम्प्रदायः । षट्पञ्चाशद्घटिकायां वृद्धिक्षयसाधारण्येन पञ्चचत्वारिंशद्विघटिकार्यभट्टेन दृश्यते चेत् तदा दशमीवेध इति रघूत्तमस्वामिनां सम्प्रदायः । सूर्यसिद्धान्तेन त्रिपञ्चाशद्घटिकानन्तरं किञ्चिदधिकं क्षयवृद्धिसाधारण्येन दृश्यते चेत्तदा आर्यभट्टेन किञ्चिदधिकपञ्चपञ्चाशदधिकनवनाडी भवतीति दशमीवेध इति रामचन्द्रतीर्थ-श्रीपादानां मठसम्प्रदाय इति द्रष्टव्यम ।। १३५ ।।

**कृष्णामृतमहार्णवः**

**उदयात्प्राग्यदा विप्रा मुहूर्तद्वयसंयुता ।**
**सम्पूर्णैकादशी नाम तत्रैवोपवसेद्गृही ।। १३६ ।।**

**ताम्रपर्णी**—हरिवासरव्यतिरिक्तास्तिथयः उदयमारभ्योदयपर्यन्तं स्थिताश्चेत्सम्पूर्णा इत्युक्तम् । हरिवासरस्य कथं सम्पूर्णत्वमित्यत आह— **उदयादिति** ।। दशमीवेधो हि चतुर्विधः। वेधोऽतिवेधो महावेधः सूर्योदयवेधश्चेति । तत्र पञ्चपञ्चाशतः परं वृद्धिसाम्यक्षयेषु उक्तरीत्या दशमीविनाडिकानां अवस्थानेऽरुणोदयकालस्य तद्वासनाप्रसक्तेर्यदैकादश्युदयात्प्राक् मुहूर्तद्वयेनारुणोदयशब्दितेन घटिकाचतुष्टयेन संयुता सम्यक्दशमीवेधराहित्येन स्थिता तदा सम्पूर्णैकादशी नाम गृही कुटुम्बी तत्रै-वोपवसेत् । नत्वरुणोदयस्य वासनावेधे उपवासे कुटुम्बहान्यापत्तेरिति भावः ।। १३६ ।।

**उमर्जी**—एवं दशम्या वेधप्रकारमुक्त्वा कदा शुद्धैकादशीतिथिरित्यत आह— **उदयादिति** ।। प्राक्पूर्वं मुहूर्तद्वयसंयुता । "मुहूर्तो द्वादशोऽस्त्रियाम्" इत्यभिधानात्। पञ्चघटिकाक्रान्ता सम्पूर्णेति नाम प्रसिद्धा शुद्धेति यावत् ।
तदुक्तम्—

पञ्चपञ्चाशतादूर्ध्वं दशम्या चेन्न विद्ध्यते ।
शुद्धा चैकादशी ग्राह्या अन्यथा न कथञ्चन ।। इति ।।

गृहीत्युपलक्षणम् । व्रताधिकारी ।। १३६ ।।

**उपेन्द्र**—प्रतिपदादितिथीनां पूर्णत्वमुक्त्वा हरिवासरस्य पञ्चपञ्चाशदधिकेति सम्प्रदायविशिष्टवचनात्पूर्णत्वप्रकारमाह— **उदयादिति** ।। मुहूर्तद्वयसंयुता "मुहूर्तो द्वादशोऽस्त्रियाम्" इत्यभिधानात् । उदयात्पूर्वं पञ्चघटिकाव्यापिनी षट्पञ्चाशद्घटिकामारभ्य व्यापिनीत्यर्थः । सा सम्पूर्णेति नाम सम्पूर्णफलप्रदेति प्रसिद्ध इत्यर्थः ।। १३६ ।।

**कोनेरी**—प्रतिपदादितिथीनामुदयादुदयाद्वर्धिरति सम्पूर्णतिथित्वमुक्त्वा हरिवासरवर्जिताः इत्युक्तम् । हरिवासरस्य कदा पूर्णतिथित्वमित्यत आह— **उदयादिति** ।। हे विप्र । उदयात्सूर्योदयात्प्राक् पूर्वं किञ्चिदधिकमुहूर्तद्वयसंयुता एकादशी यदा

भवति तदा सम्पूर्णैकादशी नाम प्रसिद्धम् । शास्त्रेष्विति शेषः । तामेव सम्पूर्णैकादशीमेव गृही उपवसेदित्यन्वयः । अत्र गृहीत्युपलक्षणम् । चतुर्वर्णैश्चतुराश्रमिभिश्चोपोष्या इति । तथोत्तरत्र वक्ष्यमाणत्वात् । स्मृतिकौस्तुभेऽप्युक्तम् ।

अरुणोदयमारभ्य पुनः सूर्योदयावधि ।
सम्पूर्णैकादशी ज्ञेया नैवान्या तिथिरीदृशी ।। इति ।। १३६ ।।

**स्मृ.कृष्णाचार्य**—अरुणोदये दशम्या विद्धैकादशी न कार्येत्युक्तम् । तर्हि का शुद्धैकादशीत्यतः षट्पञ्चाशद्घटिकापूर्वभाविपञ्चपञ्चाशद्घटिकायुक्तैकादशी शुद्धेति भावेन प्रमाणमाह आचार्यवर्यः— **उदयात्प्रागिति** ।। हे विप्रा इति सम्बोधनम् । उदयात्प्राक् सूर्योदयात्प्राक् व्युत्क्रमेण यदा मुहूर्तद्वयसंयुता 'मुहूर्तो द्वादशोऽस्त्रियाम्' इत्युक्तरीत्या षट्पञ्चाशदनाक्रान्तपञ्चपञ्चाशद्घटिकायुक्ता यदा तदा सम्पूर्णैकादशी नाम । तस्माद्गृही तत्रैवोपवसेदित्यर्थः । घटिकाद्वयं मुहूर्तमित्यत्रोक्तौ "चतस्रो घटिका प्रातः" इत्युक्तविरोधापातान्मुहूर्तद्वयमिति व्युत्क्रमेण पञ्चघटिकैव ।। १३६।।

**कृष्णामृतमहार्णवः**

**उदयात्प्राग्त्रिघटिकाव्यापिन्यैकादशी यदा ।**
**सन्दिग्धैकादशी नाम वर्ज्या धर्मार्थनाशिनी ।। १३७ ।।**

**ताम्रपर्णी**—एवमरुणोदयवेधो वेध इत्युक्त्वाऽतिवेधस्वरूपमाह— **उदयात्प्राग् त्रिघटिकेति** ।। १३७ ।।

**उमर्जी**—प्रसङ्गसङ्गत्या वेधातिवेधावाह— **उदयादित्यादिना** ।।

सप्तपञ्चाशद्घटिका दशमी दृश्यते यदा ।
वेधसंज्ञा तु सम्प्रोक्ता इति वचनात् ।।

वेधसंज्ञा सन्दिग्धैकादशी नाम संज्ञान्तरम् ।। १३७ ।।

**उपेन्द्र**—सम्पूर्णव्रता सम्पूर्णफलप्रदा । प्रसङ्गसङ्गत्या वेधातिवेधावाह— **उदयादित्यादिना**।।

सप्तपञ्चाशद्घटिका दशमी दृश्यते यदा ।
वेधसंज्ञेति सम्प्रोक्ता.................. ।। इति वचनाद्वेधसंज्ञा ।।

ननु वेधनिश्चयात्सन्दिग्धत्वं कथमिति चेत्

द्वादशी स्वल्पमल्पापि दिनं स्यात्तत्परेऽहनि ।
दशमीमिश्रिता कार्या महापातकनाशनी ।।
त्रयोदश्यां न लभ्यान्तर्द्वादशी यदि किञ्चन ।
उपोष्यैकादशी तत्र दशमीमिश्रितापि वा ।। इति वचनात् ।।

"पूर्वविद्धां प्रकुर्वाणो नरो धर्मान्निकृन्तति" इति विरुद्धार्थद्वयवचनात्सन्देहसम्भवात् सन्दिग्धैकादशीति नाम ।। १३७ ।।

**कोनेरी—**अरुणोदयवेलायामित्येकादश्याः अरुणोदयवेध उक्तः । स चारुणोदयवेधश्चतुर्विधः । वेधः, अतिवेधः, महावेधः सूर्योदयवेधश्चेति । तत्र महावेधलक्षणमाह— **उदयात्प्राक्त्रिघटिकेति** ।। उदयात्सूर्योदयात्प्राक् पूर्वं यदा एकादशी त्रिघटिकाव्यापिनी चेत् सन्दिग्धैकादशीति नाम प्रसिद्धा । यतः सा धर्मार्थकामनाशनी । अतो वर्ज्या नोपोष्येति ।। १३७ ।।

**स्मृ.कृष्णाचार्य—**एवं वेधरहितशुद्धैकादश्याः कर्तव्यत्वमुक्त्वा सन्दिग्धैकादशीस्वरूपं वदन् सा त्याज्येत्याह— **उदयात्प्राक्त्रिघटिकेति** ।। उदयात्प्राक् सूर्योदयात्पूर्वं सप्तपञ्चाशद्रूपत्रिघटिकायां एकादशी दशम्या यदा व्यापिनी भवति तदा सन्दिग्धैकादशीत्युच्यते । तादृशैकादशी वर्ज्या । कुतः, यतः स्वकृतधर्माणां अर्थानां च नाशनी ततः तस्मादित्यर्थः ।। १३७ ।।

### कृष्णामृतमहार्णवः

**पुत्रपौत्रविवृद्ध्यर्थं द्वादश्यामुपवासयेत् ।**
**तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ।। १३८ ।।**

**ताम्रपर्णी—**किं सर्वथा तस्मिन्पक्षे उपवासस्त्याज्य इत्यत आह— **पुत्रेति** ।। तत्र द्वादश्यामुपोषणं त्रयोदश्यां च पारणम् । क्रतुशतं पुण्यं क्रतुशतपुण्यप्रदम् ।। १३८ ।।

**उमर्जी—**तत्र द्वादश्यां क्रतुशतं पुण्यं भवति । पारणकाले द्वादश्यभावात्तत्कथमिति न्यूनतां परिहरति— **त्रयोदश्यां तु पारणमिति** ।। तु विशेषतः फलसाधनमित्यर्थः ।। १३८ ।।

**कोनेरी**—विद्धैकादशीं त्यक्त्वा द्वादश्युपवासफलमाह— **पुत्रपौत्रप्रवृद्ध्यर्थमिति** ।। पुत्रपौत्रप्रवृद्ध्यर्थं विद्धां हित्वा द्वादश्यामुपवसेत् । उपवासस्य पारणाङ्गत्वेन त्रयोदश्यां पारणं कार्यम् । तत्र पारणे कृते क्रतुशतं पुण्यं प्राप्यत इति शेषः । तुशब्दः प्रमाणप्रसिद्धिद्योतकः ।। १३८ ।।

**स्मृ.कृष्णाचार्य**—तर्हि कदा उपवासः कदा पारणं कार्यमित्यत्राह— **पुत्रपौत्रप्रवृद्ध्यर्थमिति** ।। एकादश्यां उक्तरीत्या वेधासन्दिग्धे परदिने द्वादश्यामेव उपवासं कुर्यात् । ततः परदिने त्रयोदश्यामेव पारणं कुर्यात् । ननु तत्र उपोषणं किमर्थं कार्यमित्यतः उक्तम् ।। **पुत्रपौत्रप्रवृद्ध्यर्थमिति** ।। यतः सन्दिग्धैकादशी धर्मार्थनाशनी अतस्तां त्यक्त्वा पुत्रपौत्राभिवृद्धिप्रदत्वात् द्वादशीमुपवसेदित्यर्थः । न केवलमैहिकफलमामुष्मिकं च भवतीत्याह— **तत्रेति** ।। तत्र सन्दिग्धैकादशी परित्यागेन शुद्धद्वादश्युपवासे शतयज्ञकरणपुण्यफलं च भवतीति । ननु त्रयोदश्यां पारणनिषेधेन अनर्थोक्तेः कथमित्यत आह— **तत्रेति** ।। तत्र त्रयोदश्यां पारणे कृते सति क्रतुशतं पुण्यं यतः भवति, अतः पारणं तत्र कर्तव्यमित्यर्थः ।। १३८ ।।

**कृष्णामृतमहार्णवः**

**उदयात्प्राग् द्विघटिकाव्यापिन्येकादशी यदा ।**
**[1]संकीर्णैकादशी नाम वर्ज्या धर्मार्थकाङ्क्षिभिः ।। १३९ ।।**

**ताम्रपर्णी**—महावेधस्वरूपमाह— **उदयात्प्राग् द्विघटिकेति** ।। १३७ ।।

**उमर्जी**—द्विघटिकाव्यापिनी अतिवेधसंज्ञा।

अष्टपञ्चाशद्घटिका यदा स्याद्दशमी तदा ।
अतिवेधेति सा प्रोक्ता...................... ।। इति वचनात् ।।

संकीर्णेति नामान्तरम् ।। १३९ ।।

**उपेन्द्र**—द्विघटिकाव्यापिनी अतिवेधसंज्ञा ।।

अष्टपञ्चाशद्घटिका यदि स्याद्दशमी तदा ।
अतिवेधेति सा प्रोक्ता...................... ।।

इति वचनात् अतिवेधसंज्ञा । संकीर्णा दशमीव्याप्तेत्यर्थः ।। १३९ ।।

---

[1] 'सम्पूर्णैकादशी' इति कोनेरी पाठः ।

**कोनेरी—**अतिवेधस्वरूपमाह— **उदयात्प्राग्द्विघटिकेति** ।। यदि यदा एकादशी उदयात्प्राग्द्विघटिकाव्यापिनी तदा सम्पूर्णैकादशी नाम प्रसिद्धा । सापि धर्मार्थकाङ्क्षिभिः नोपोष्या । उपोषणे कृते धर्मार्थकामनाशात् । धर्मार्थप्राप्तिर्न भवतीति ।। १३९ ।।

**स्मृ.कृष्णाचार्य—**संकीर्णैकादशीस्वरूपं वदन् सा त्याज्येत्याह— **उदयादिति** ।।

**कृष्णामृतमहार्णवः**

**पुत्रराज्यविवृद्ध्यर्थं द्वादश्यामुपवासनम् ।**
**तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ।। १४० ।।**

**कोनेरी—**फलमपि पूर्ववज्ज्ञेयमित्याह— **पुत्रराज्यविवृद्ध्यर्थमिति** ।। १४० ।।

**कृष्णामृतमहार्णवः**

**[40]दशमीशेषसंयुक्ता गान्धार्या समुपोषिता ।**
**तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ।। १४१ ।।**

**ताम्रपर्णी—**चतुर्थं सूर्योदयवेधं दर्शयन्विद्धोपोषणस्य सन्ततिविनाशकत्वं लक्ष्यारूढतया दर्शयति— **दशमीति** ।। उदयकाले दशमीशेषसंयुक्तेत्यर्थः ।। १४१ ।।

**उमर्जी—**दशमीविद्धैकादश्युपवासस्यानिष्टसाधनत्वेन दृष्टत्वात्तन्न कार्येत्याह— **दशमीशेषसंयुक्तेति** ।। दशम्याः शेषेण किञ्चिदभावेन संक्रान्ता ।। १४१ ।।

**उपेन्द्र—**दशमीविद्धैकादश्युपवासस्य ऐहिकानिष्टसाधनत्वेन दृष्टत्वात्तन्न कार्येत्याह— **दशमीशेषसंयुक्तेति** ।। दशम्याः शेषेण संयुता ।। १४१ ।।

**कोनेरी—**सूर्योदयवेधस्वरूपमाह— **दशमीशेषसंयुक्तेति** ।। दशमीशेषस्तु दशम्याः षष्टिघटिकासु अन्तिमघटिका शेषसंज्ञा भवति । तत्सम्बन्धः सूर्योदयवेधः । तदुक्तं वाराहे—

---

40. दशमीवेधसंयुक्ता त्याज्या चैकादशी व्रते ।
गान्धार्याऽपि पुरा तस्यामुपवासः कृतो यतः ।।
तस्याः पुत्रशतं नष्टं तस्मात्तां नियतं त्यजेत् ।। स्कन्दपुराणे ।।

षण्णाड्यधिकपञ्चाशद्यदा सूर्योदयाद्भवेत् ।
अरुणोदयवेधोऽसौ ततो नाडीत्रयादपि ।।
सूर्योदय इति ज्ञेयो मुनिभिः परिकीर्तितः ।। इति ।।

कौर्मे च—

यदा सूर्योदयात्पूर्वं घटिकैकाऽवशिष्यते ।
स वै सूर्योदयो नाम तत्र वेधः प्रकीर्तितः ।। इति ।।

एतादृशसूर्योदयवेधयुक्तैकादश्यामुपवासो न कार्यः । तस्यामुपवासं कृतवत्याः गान्धार्याः पुत्रशतं यस्मान्नष्टं तस्मात्तामेकादशीं परिवर्जयेत् नोपवसेदिति ।।१४१।।

**स्मृ.कृष्णाचार्य**—दशमीविद्धैकादशी न कार्येत्युक्तम् । तत्करणे कर्तुरनिष्टफल-श्रवणात् सा न कार्येत्याह— **दशमीति** ।। गान्धार्या दशमीशेषसंयुक्ता अरुणोदये दशमीविद्धैकादशी समुपोषिता । तस्याः तन्निमित्तेन पुत्रशतं दुर्योधनादिपुत्रशतं नष्टं नाशं प्राप्तम् । अतः अरुणोदये दशमीशेषसंयुक्तां एकादशीं परिवर्जयेदित्यर्थः ।। १४१ ।।

**कृष्णामृतमहार्णवः**

***[1] [2]अपीषद्दशमीविद्धा तदा तां परिवर्जयेत् ।**
**सुराबिन्दुसमायुक्तं प्रवदन्ति मनीषिणः ।। १४२ ।।**

**ताम्रपर्णी**—दशमीशेषविद्धस्य त्याज्यत्वं दृष्टान्तेनाह— **अपीषदिति** ।। एकादशी दशमीविद्धा तां परिवर्जयेदित्यन्वयः । कुतः यतस्तां सुराबिन्दुसमायुक्तां सुधा-मिव त्याज्यां मनीषिणः प्रवदन्तीत्यर्थः ।

तदुक्तं प्रमाणसंग्रहे—

षट्पञ्चाशदनाक्रान्ताश्चतस्रो घटिकाश्च याः ।
अरुणोदयमित्याहुस्तत्र वेधश्चतुर्विधः ।।

---

* अयं श्लोकः नारदपुराणे २-२-२९ ।

१. 'अपीषद्दशमीविद्धा' इति कांनेरी पाठः ।

२. 'अपि चेद्दशमीविद्धा' इति स्मृ.क. तथा क. पाठः ।

वेधोऽतिवेधो विज्ञेयो महावेधस्तृतीयकः ।

चतुर्थस्तु तथा प्रोक्तो योगस्सूर्योदयः स्मृतः ।। इति ।।

यद्वा सूर्योदयवेधः स्फुटत्वान्नोक्तः । दशमीशेषसंयुक्तेति श्लोकस्तु विद्धोपोषणस्य सन्ततिविनाशकत्वे उदाहरणमात्रपरः । पञ्चपञ्चाशतः परं षट्पञ्चाशद्धटिकाः याः अवशिष्टाः काश्चन विघटिकाः दशमीशेषशब्देनोच्यन्ते । तत्संयुक्ता तद्विद्धे-त्यर्थः। अपीषद्दशमीविद्धेत्यत्रापि दशम्या ईषत्त्वमप्येतदेव । उक्तं च—

पञ्चपञ्चाशतादूर्ध्वं वासनानाडिकाः स्मृताः ।

तादृशी वासनायुक्ता सुरायुक्तामृतोपमा ।। इति ।। १४२ ।।

**उमर्जो**—ननूदयात्पूर्वकाले अल्पसम्बन्धमात्रेण कथं दशम्या व्रतदूषकत्वमित्यत आह— **अपीति** ।। ईषद्दशम्या विद्धाम् । सुरयेति तृतीया षष्ठ्यर्थे । सुरायाः बिन्दुना युक्ताम् ।। १४२ ।।

**उपेन्द्र**—दशमीविद्धैकादश्युपवासस्यैहिकानिष्टसाधनत्वेन दृष्टत्वात्र कार्येत्यादि दशमीसंयुक्तेति दशम्याः शेषेण संयुक्ता । अतो दशमीविद्धैकादशी त्याज्येत्याह ईषद्विद्धामपि इत्यन्वयः ।। **सुरयेति** ।। तृतीया षष्ट्यर्थे । सुराया बिन्दुना युक्तं अमृतं प्रवदन्तीत्यन्वयः ।। १४२ ।।

**कोनेरी**—अतिवेधादिस्वरूपमुक्त्वा वेधस्वरूपमाह— **अतीव दशमीविद्धेति**।। अरुणोदयचतुष्टयघटिकानां पूर्वं अत्यन्तसमीपे विद्यमानदशमीविघटिकाभिर्विद्धा या सा अतीवदशमीविद्धा इव । वेधयुक्तेति यावत् । तामपि सदा परिवर्जयेत्। यदा दशमीद्रववेधयुक्तैकादश्याः परित्यागः किमु महावेधादियुक्तैकादश्यास्त्याग इति कैमुत्यद्योतनाय अतिवेधादिविभागः कथित इति ज्ञेयः । तत्र दोषमापादयति- — **सुराबिन्दुसमायुक्तमिति** ।। मनीषिणो ज्ञानिनः सुराबिन्दुसमायुक्तं प्रवदन्ति । गङ्गाम्भवदिति शेषः ।। १४२ ।।

**स्मृ.कृष्णाचार्य**—अरुणोदये दशमीविद्धैकादशी त्याज्येति सदृष्टान्तमाह— **अपि चेदिति** ।। अरुणोदयकाले एकादशी दशमीविद्धा चेदपि तामेकादशी सदा नित्यं वर्जयेत् । किमिव सुराबिन्दुसमायुक्तं सुराबिन्दुना स्पृष्टं अमृतमिव विद्धैकादशीं मनीषिणो ज्ञानिनस्त्याज्येति प्रवदन्ति । अतस्तत्र कार्यमिति भावः ।। १४२ ।।

**कृष्णामृतमहार्णवः**

**"बह्वागमविरोधेषु ब्राह्मणेषु विवादिषु ।**
**उपोष्या द्वादशी पुण्या त्रयोदश्यां तु पारणम् ।। १४३ ।।**

**ताम्रपर्णी**—वेधसन्देहे कथं कार्यमित्यत आह— **बह्विति** ।। बहूनां दशमीविघटि-कागणितशास्त्राणां विरोधेषु सत्सम्प्रदायप्रवर्तकेषु ब्राह्मणेषु वेधविषये विवादिषु सत्सु । सन्दिग्धैकादशीत्यागेन पुण्यैकादशी उपोष्या पुण्यहेतुभूता द्वादश्यु-पोष्या। त्रयोदश्यां पारणं कुर्यादित्यर्थः ।। १४३ ।।

**उमर्जी**—एकादशीनिर्णयमजानतां निर्णयमाह— **बह्वागमविरोधेष्विति** ।। बहूनामागमानां परस्परविरोधेषु विरोधत्वेन प्रतीयमानेषु सत्सु निर्णयादर्शनेन विवादिषु किं कार्यमित्यत आह— **उपोष्येति** ।।

बहुवाक्यविरोधेन सन्देहो जायते यदा ।
उपोष्या द्वादशी पुण्या त्रयोदश्यां तु पारणम् ।। इति स्कान्दे ।।

द्वादश्यां एकादश्युपवासफलं प्राप्नोति ।। १४३ ।।

**उपेन्द्र**—प्रमाणैर्निर्णयमजानतां निर्णयमाह— **बह्वागमविरोधेष्विति** ।। बह्वागमै-र्ज्योतिःशास्त्रैः विरुद्धेषु ब्राह्मणेषु निर्णयादर्शनेन विवादिषु ।
तदुक्तम्—

बहुवाक्यविरोधेन सन्देहो जायते यदा ।
उपोष्या द्वादशी पुण्या त्रयोदश्यां तु पारणम् ।।
—इति स्कान्दे ।। १४३ ।।

**कोनेरी**—दशमीवेधविचारविषये गणितज्ञाभावेऽनभिज्ञैः कथं कार्यमिति तत्राह- — **बह्वागमविरोधेष्विति** ।। बहवो आगमाः एषु ते बह्वागमाः बहुशास्त्रविचारज्ञाः तेषु विरोधेषु विरोधेन वदत्सु । ब्राह्मणेषु गणिकब्राह्मणेषु विवादिषु सत्सु । तत्र तस्मिन् समये सूर्यसिद्धान्तेन तिथिं ज्ञात्वा आर्यभटं संयोज्य विद्धां परित्यज्य द्वादशी उपोष्या भवति । त्रयोदश्यां पारणं कुर्यादिति ।। १४३ ।।

**स्मृ.कृष्णाचार्य**—ननु अरुणोदये दशमीसम्बन्धे सति एकादशी त्याज्येत्युक्तम् । तत्र अरुणोदये दशमीवेधोऽस्ति नास्तीति नानाविधज्योतिःशास्त्रविरोधेन नानाविध-स्मृतिविरोधेन वा व्रतनिष्ठब्राह्मणेषु विवादिषु सत्सु एकादशीव्रतं कथं कार्यमित्यत्र द्वादश्युपवासः कार्य इत्याह— **बह्वागमेति** ।। बहूनां नानाविधानां आगमानां स्मृतीनां विरोधेन परस्परं विरोधेन ब्राह्मणेषु उपवासपरेषु उपवासः कर्तव्य न कर्तव्य इति विवादं कुर्वत्सु तदा द्वादशी व्रतस्थैस्सर्वैरुपोष्या । कुतः यतो द्वादशी पुण्या पारणं कदेत्यत उक्तम् ।। **त्रयोदश्यामिति** ।। पारणमुपवासाङ्गपारणं कुर्यादित्यर्थः ।। १४३ ।।

**कृष्णामृतमहार्णवः**

*** [1]एकादश्यां तु विद्धायां सम्प्राप्ते श्रवणे [2]तथा ।**
**उपोष्या द्वादशी पुण्या पक्षयोरुभयोरपि ।। १४४ ।।**

**ताम्रपर्णी**—ननु द्वादश्युपवासो न युक्तः । तत्र पारणाऽकरणे प्रत्यवायोक्तेरित्यत आह— **एकादश्यामिति** ।। यथा द्वादश्यां श्रवणे प्राप्ते द्वादश्युपोष्या । पारणाविधि-वाक्यानां श्रवणद्वादश्यतिरिक्तपरत्वम् । तथा एकादश्यां विद्धायामपि द्वादश्यु-पोष्येति योज्यम् ।। १४४ ।।

**उपेन्द्र**—तत्र तदा द्वादश्यामेकादशीव्रतानुष्ठानस्य फलसाधनत्वे दृष्टान्तमाह— **एकादश्यामिति** ।। अविद्धायां दशमीवेधरहितायां सत्याम् । द्वादश्यां श्रवणे प्राप्ते तदा उपवासः कार्यः । महावेधे प्राप्तेऽपीत्यर्थः ।। १४४ ।।

**कोनेरी**—"ज्ञात्वा विप्रास्तिथिम्" इत्यारभ्य बह्वागमविरोधेष्वित्यन्तं एकादश्याः आर्यभटरीत्या दशमीवेधमुक्त्वा इदानीं श्रवणस्य विष्णुदेवताकत्वेन दशमीवेधवत् उत्तराषाढवेधोऽपि श्रवणस्यारुणोदयसमये आर्यभटरीत्या ग्राह्य इति वक्तुं विद्धैका-दशीसम्बद्धद्वादशीश्रवणद्वादश्योः सामानाधिकरण्येनोपवासमाह— **एकादश्यां तु विद्धायामिति** ।। एकादश्यां अरुणोदयसमये आर्यभटरीत्या विद्धायां सत्यां

---

*अयं श्लोकः नारदपुराणे २-२-३१ ।

१. 'एकादश्यामविद्धायां' इति उपे. पाठः ।

२. 'तदा' इति उपे. पाठः ।

द्वादशीमुपोष्येत्यन्वयः । त्रिविधवृद्धित्रिविधक्षयतिथिसाम्यभेदेन सप्तविधभेदोऽपि ग्राह्य इति तुशब्दो वक्ति । सप्तविधवेधप्रकारस्तु सूर्यसिद्धान्तेन

अतिवृद्धौ तिथिः ५२-१९ आर्य २-२१ लिप्ति १६=घ १-प २०, मेल्ने ५६ वेधः ।

समवृद्धौ तिथि ५२-३५ आर्य २-२५ लिप्ति १२=घ १-प ००, मेल्ने ५६ वेधः।

हीनवृद्धौ तिथि ५२-५३ आर्य २-२२ लिप्ति ९=घ००-प ४५, मेल्ने ५६ वेधः।

अतिक्षये तिथि ५४-१३ आर्य १-२२ लिप्ति ५=घ ००-प २५, मेल्ने ५६ वेधः।

समक्षये तिथिः ५३-४३ आर्य १-४७ लिप्ति ६=घ ००-प ३०, मेल्ने ५६ वेधः।

हीनक्षये तिथिः ५३-१६ आर्य २-१९ लिप्ति=घ ००-प ३५, मेल्ने ५६ वेधः ।

तिथिसाम्ये तिथि ५१-५३ आर्य २-१७ लिप्ति=घ ००-प ४०, मेल्ने ५६ वेधः।

एवमरुणोदयवेधः सप्तविधो ज्ञेयः ।

द्रववेधपक्षे तु अतिवृद्धौ ५५-४५ पल्वेधः । तिथिसाम्ये ५५-५० पल्वेधः । क्षयपक्षे ५५-५५ पल्वेधः नो चेत्पलर्द्धिपलन्यूनाऽपि न वेधः ।

एतत्साधकवचनानि विद्याधीशश्रीमद्बरणैः तिथित्रयनिर्णयग्रन्थे उदाहृतानीत्यत्र ग्रन्थविस्तरभयान्नोदाहृतानि । एवमुक्तरीत्या एकादश्यां विद्धायां तां परित्यज्य यथा द्वादशी उपोष्या तथारुणोदयवेलायां उत्तराषाढवेधरहितश्रवणे शुद्धद्वादश्यां प्राप्ते सा द्वादशी च श्रवणसम्बन्धेनोपोष्या । अरुणोदयसमये उत्तराषाढयुक्तश्रवणे शुद्धद्वादश्यां प्राप्तेऽपि द्वादशी नोपोष्या । उक्तं च सङ्ग्रहे—

> उत्तराषाढकणिका कला यावन्न दृश्यते ।
> सा जयन्ती परित्याज्या शुना स्पृष्टं हविर्यथा ।।
> उत्तराषाढमिलितश्रवणद्वादशीव्रतम् ।
> सुराबिन्दुभिरासिक्ततीर्थवद्भोभयं त्यजेत् ।

अयमेवार्थः स्वाभिमत इति ज्ञापनाय भगवानाचार्यः तथाशब्दं प्रायुङ्क्त । अन्यथा विद्धैकादश्युपवासो न कार्य इति पूर्वमसकृदुक्तत्वेन पुनः श्रवणयोगेन विद्धैकादश्युपवासनिषेधप्रयोजनाभावादिति । उभयोः पक्षयोः एकादश्याः दशमीवेधस्त्वेकः पक्षः । शुद्धद्वादश्याः उत्तराषाढवेधरहितश्रवणसम्बन्धः द्वितीयः पक्षः एवमुभयोः पक्षयोः पुण्ये द्वादश्यौ उपोष्ये इति सामस्त्येनान्वयः । उभयोः पक्षयोः शुक्लकृष्णयो-

रिति व्याख्यानमसङ्गतम् । कृष्णपक्षद्वादश्याः श्रवणयोगस्याभावेनोपवासस्य दूरोत्सारितत्वात् । यद्यपि मध्याह्नोपरिभागिन्योः श्रवणद्वादश्योरुभयोर्दशमी उत्तराषाढवेधस्य शशविषाणतुल्यत्वेऽपि वेधे दोषसूचनाय प्रासङ्गिकत्वेनोक्तमिति नानुपपत्तिः । द्वादश्याः शुद्धत्वं नाम यदा एकादशीवेधाभावेन पूर्णा परदिने द्वादशी मध्याह्नोपरिगामिनी शुद्धेत्युच्यते । तस्या उत्तराषाढवेधश्रवणयोगे उपवासः कार्यः । नो चेन्नोपवासः इति । यथा दशम्यादित्रयाणां विष्णुदेवताकत्वेन विष्णुव्रतत्वादार्यसिद्धान्तेनारुणोदयवेधोऽङ्गीक्रियते तथा श्रवणस्यापि विष्णुदेवताकत्वेन विष्णुव्रतत्वादार्यसिद्धान्तेनारुणोदयवेधोऽङ्गीकार्य इति स्वाभिप्रायमुद्धाटयन् भगवानमितमतिः विद्धैकादशीसम्बन्धद्वादश्युपवाससाहचर्येण श्रवणसम्बन्धद्वादश्युपवासमप्याचक्षते । "एकादश्यां तु विद्धायां सम्प्राप्ते श्रवणे तथा" इति । एवं यानि विष्णुव्रतानि तानि सर्वाण्यपि आर्यसिद्धान्तेनैव कार्याणीति भगवत्सिद्धान्तः । तदुक्तं मात्स्ये—

दशम्यां श्रवणर्क्षे तु आर्यभट्टमथोच्यते ।
तथैव विष्णुधर्मेषु एकादश्यां विशेषतः ।। इति ।।

संस्कारलिप्तिविशेषतः विष्णुव्रतानि आचार्येण निश्चितानि । मनीषिभिरिति च । पाद्मे च—

विष्णोश्च जन्मदिवसानि च वासराणि
विष्णुव्रतानि विविधानि च विष्णुभञ्च ।
कार्याणि चार्यभटमार्गत एव सर्वैः
स्मार्तैश्च वैष्णवजनैर्न विचार्यमस्ति ।। इति ।।

"सर्वधर्मेषु कः श्रेयान् विष्णुधर्मेषु योऽधिकः" इति च ।। कः ब्रह्मपक्षः पैतृकादिसर्वधर्मेषु श्रेयानङ्गीकार्यः । विष्णुधर्मेषु दशम्यादित्रयं श्रवणजन्माष्टमीजयन्तीविष्णुपञ्चकादिषु योऽधिको आर्यभटः सोऽङ्गीकार्यः । अतः श्रवणस्यारुणोदयकालेऽरुणोदयवेधः । आर्यभटश्चाङ्गीकार्य इति भगवत्पादानां मतमिति सिद्धम् । अन्यत्र वेधान्तरसाधकवचनानां यामत्रयसत्वाच्च । उक्तञ्च कौर्मे—

द्वादशी श्रवणोपेता अभिजित्स्पर्शसंयुता ।
अरुणोदयकाले तु नैवोपोष्या मनीषिभिः ।। इति ।।

धर्मसंहितायाञ्च—

अरुणोदयवेलायां अभिजित्स्पर्शनं यदि ।
श्रोणा चेत्षष्टिघटिका नोपोष्या विष्णुतत्परैः ।। इति ।।

अभिजित्स्पर्शनी उत्तराषाढान्त्यपादस्पर्शनीत्यर्थः ।। १४४ ।।

**स्मृ.कृष्णाचार्य**—नन्वेकादशीव्रतमेकादश्यामेव कर्तव्यमिति बहुष्वभिधानात् उपवासलक्षणं व्रतं कथं द्वादश्यां कर्तव्यमित्यतस्तत्र तत्कार्यमित्यत्र सदृष्टान्तमाह- – **एकादश्यां त्विति** ।। एकादश्यामरुणोदयकाले दशम्या विद्धायां सत्यां तत्र तदा द्वादश्यामेवोपवासः कुर्यात् । तत्र दृष्टान्तः ।। **सम्प्राप्ते श्रवणे तथेति** ।। यथा द्वादश्यामभिजिति श्रवणे सम्बद्धे द्वादश्युपवासः क्रियते । तथा विद्धामेकादशीं परित्यज्य द्वादश्यामेवोपवासः कार्यः । तथा तद्वदेव त्रयोदश्यामेव पारणं कार्यमिति भावः ।। १४४ ।।

**कृष्णामृतमहार्णवः**

**उपरागसहस्राणि व्यतीपातायुतानि च ।**
**अमालक्षं तु द्वादश्याः कलां नार्हन्ति षोडशीम् ।। १४५ ।।**

**ताम्रपर्णी**—द्वादशी पुण्येत्युक्तम् । द्वादश्या आधिक्यं विवृणोति— **उपरागेति**।। द्वादश्या अत्युत्तमतिथित्वात्तत्रैकादश्युपवासो युक्त इति भावः ।। १४५ ।।

**उमर्जी**—कथं तद्भिन्नस्य तत्साध्यफलसाधनत्वस्यादर्शनादित्यत द्वादश्यां एकादशीव्रतफलसाधनत्वे निमित्तमाह— **उपरागेति** ।। सूर्यचन्द्रोपरागाणां सहस्राणि ।। १४५ ।।

**उपेन्द्र**—द्वादश्याः फलसाधनत्वे निमित्तमाह— **उपरागेति** ।। सूर्यचन्द्रोपरागाणां सहस्राणि ।। १४५ ।।

**कोनेरी**—एवं श्रवणद्वादश्याः वेधावेधनिमित्तमुपोष्यत्वमनुपोष्यत्वमभिधाय द्वादशीव्रतं कुर्वतां फलातिशयमाह— **उपरागसहस्राणीति** ।। सहस्रोपरागाणां अयुतव्यतीपातानां अमालक्षाणां च यानि अनुष्ठातॄणां फलानि तानि द्वादशीव्रतं कुर्वतां फलस्य षोडशीं कलां नार्हन्तीत्यन्वयः । अल्पाधिकारिभिरनुष्ठितोपरागादि-

जन्यफलापेक्षयोत्तमाधिकारिभिरनुष्ठितद्वादशीफलस्याधिक्यमति द्योतनायेयमुक्तिः । अथवा प्रयागपातादिना मुक्तिवद्द्वादशीव्रतकरणे रुचिद्योतकी । न वास्तवी । प्रयागपातादिना मुक्तिस्तु पापान्मुक्तिः रुच्यर्था वेति गीताभाष्योक्तेः ।। १४५ ।।

**स्मृ.कृष्णाचार्य—**ननु एकादशीव्रतानुष्ठानं दशमीवेधे सति द्वादश्यां कर्तव्यमित्युक्तम् ।। अन्यतिथिं विना तत्र करणे को हेतुरित्यतस्तस्य सकलकालोत्तमत्वात्तत्र करणमेव युक्तमिति तत्र प्रमाणमाह— **उपरागसहस्राणीति** ।। उपरागाणां सूर्यग्रहणादीनां सहस्राणि सहस्रसंख्याकानि । व्यतीपातायुतानि व्यतीपाता-नामयुतानि दशसहस्राणि दशसहस्रसंख्याका व्यतीपाता इत्यर्थः । अमालक्षं अमानां अमावास्यानां लक्षं लक्षसंख्याका अमावास्या इत्यर्थः । एतानि सर्वाण्यपि द्वादश्याः षोडशीं कलां षोडशकलामध्ये एकामपि कलां लेशमपि नार्हन्ति । तत्साम्यमपि न प्राप्नुवन्ति । तस्माद्द्वादश्यास्सर्वपुण्यकालोत्तमत्वात्तत्रैकादशीकरणं युक्तमिति ।। १४५ ।।

**कृष्णामृतमहार्णवः**

**शुद्धाऽपि द्वादशी ग्राह्या परतो द्वादशी [1]यदि ।**
**विषं तु दशमी ज्ञेयाऽमृतं चैकादशीतिथिः ।**
**विषप्रधाना वर्ज्या साऽमृता ग्राह्या [2]प्रयत्नतः ।। १४६ ।।**

**ताम्रपर्णी—**ननु परतः कलामात्राऽपि द्वादश्यस्ति चेत्तदा एकादश्याः दशमीवेधवशेन त्याज्यत्वं द्वादश्याः उपोषणाय ग्राह्यत्वमस्तु । यदि परतो द्वादशी नावशिष्टा तदा पूर्वेद्युः केवलद्वादशी कथमुपोषणाय ग्राह्येत्यत आह— **शुद्धापीति** ।। परतो द्वादशी न चेत् शुद्धा द्वादशी उपोषणाय ग्राह्येत्यर्थः । ननु दशमीविद्धायाः एकादश्यास्त्यागवत् एकादशीविद्धाया अपि त्यागः किन्नेत्याह— **विषेति** ।। विषप्रधाना विषपूर्वैकादशी वर्ज्या दशमीविद्धा वर्ज्या । अमृतैकादशी प्रधानतः प्रधानत्वात्पूर्वभावित्वात्स्वस्या एव द्वादशीवेधकत्वेन प्रधानत्वात्परसंस्पर्शेऽपि ग्राह्या । द्वादश्या एवैतद्वेधेन दूषितत्वादिति भावः ।

---

१. 'न चेत्' इति ताम्र. पाठः ।
२. 'प्रधानतः' इति क्वचित पाठः ।

तथाच निगमे—

नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ।
कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासराः ।। इति ।।

नागः पञ्चमी । रुद्र एकादशी । दिवाकरो द्वादशी । कामस्त्रयोदशी । विष्णुश्चतुर्दशी ।। १४६ ।।

**उमर्जी**—द्वादश्यां उपवासे निमित्तान्तरमाह— **शुद्धेति** ।। परतः द्वादश्याः परतः परस्मिन्दिने यदि द्वादशी दृश्यते तदा एकादशी शुद्धापि पूर्वद्वादशी उपवासाय ग्राह्या । उपवासः कार्य इत्यर्थः । ननु कुतो दशम्याः सम्बन्धे अग्राह्यत्वमित्यत आह— **विषमिति** ।। तुशब्द एवार्थे । विषमेवेत्यर्थः । ननु एकादशी अमृतम् । ओमिति चेत् । तर्हि तस्मिन्कुतो नोपवास इत्यत उक्तम् ।। **विषप्रधानेति** ।। विषमिश्रा चेद्वर्ज्या । अमृता शुद्धा चेत् । प्रयत्नतः सम्यग्विचार्येत्यर्थः । उपवासाय ग्राह्या ।। १४६ ।।

**उपेन्द्र**—द्वादश्याः अतिरिक्तत्वेऽप्युपवासः कार्य इत्याह— **शुद्धापीति** ।। दशमी वेधरहितापि । अपिशब्दाद्द्वादश्युपवासानन्तरमित्यर्थः । द्वादशी पूर्णद्वादशी उपवासाय ग्राह्या । तत्र निमित्तमाह— **परत इति** ।। द्वादश्याः परतः उपरि द्वादशी दृश्यते तदेत्यर्थः । दशमीमिश्रितैकादश्याः अग्राह्यत्वे निमित्तमाह—**विषमिति** ।। तुशब्द एवार्थे । विषतुल्यमेवेत्यर्थः । अमृतं अमृततुल्या । विषप्रधाना विषमिश्रिता । अमृता शुद्धा ।। १४६ ।।

**कोनेरी**—विद्धामेकादशीं हित्वा द्वादशीमुपोष्य त्रयोदश्यां पारणं कार्यमित्युक्तम् । इदानीं द्वादश्याः त्रयोदश्यामुर्वरितत्वे पारणं कथमिति तत्राह— **शुद्धापीति** ।। एकादशी दशमीविद्धा चेत् शुद्धापि द्वादशी ग्राह्या । उपवासार्थमिति शेषः । पारणं तु त्रयोदश्यामेव । परतो द्वादशी यदि यदा परतः त्रयोदश्यां द्वादशी उर्वरिता भवति । तदा उर्वरितायामेव पारणं कार्यम् । न त्रयोदश्याम् । अन्यथा द्वादश्युल्लङ्घनदोषवान् भवति । "द्वादशद्वादशीर्हन्ति द्वादशीं नैव लङ्घयेत्" इत्युक्तत्वात् । ननु दशम्याः हरिदेवताकत्वेनात्युत्तमत्वात्कथं तद्विद्धैकादशी दूष्येति तत्राह— **विषं त्विति** ।।

उपवासव्रतस्थोऽपि भुञ्जीयाद्दशमीदिने ।
विषप्रधाना वर्ज्या साऽमृता ग्राह्या प्रयत्नतः ।।
दिनत्रयात्मकं ह्येतद्व्रतं मुक्तिप्रदायकम् ।। इति संग्रहवचनात् ।।
दशमीव्रतस्यात्युत्तमत्वेन धारणपारणविष्णुपञ्चकाद्युपवासव्रतिभिरपि न दशम्यामुपवासः कार्यः । तत्रोपवासं कुर्वतां हर्याज्ञोल्लङ्घिनां अनिष्टप्रदत्वेन दशमी विषरूपा भवति । तस्माद्दशमी विषं विषतुल्यानिष्टप्रदेति ज्ञेया । तत्रोपवासं कुर्वतामिति शेषः । वेधरहिता एकादशीतिथिः अमृतमित्युच्यते । मृतिरहितमोक्षसाधनत्वात् । अनेन प्रकृते किमायातमित्यत्राह— **विषप्रधानेति** ।। विषस्य प्रकर्षेणाधानं स्वीकारः यस्याः सा विषप्रधाना । अरुणोदयसमये विषरूपदशमीविद्धा या एकादशी उपवासविषये वर्ज्या न ग्राह्या । या अविद्धा एकादशी सा अमृता न विद्यते मृतिर्यस्याः सकाशात् साऽमृता मृतिरहितमोक्षसाधनभूतेत्यर्थः । सर्वप्रयत्नतः ग्राह्या तत्रोपवासः कार्य इति ।। १४६ ।।

**स्मृ.कृष्णाचार्य—**ननु शुद्धैकादश्यामेव उपवासः कर्तव्य इत्युक्तम् । तत्कुत इति चेत् दशम्या विषरूपत्वादेकादश्या अमृतरूपत्वाद्विषयुक्तस्य त्याज्यत्वादमृतरूपस्य ग्राह्यत्वाद्विषरूपदशमीवेधरहितामृतरूपशुद्धैकादश्यामेवोपवासः कर्तव्य इत्याह- — **विषमिति** ।। यथा विषयुक्तामृतं त्याज्यं तथा विषरूपदशमीयुक्तैकादशी त्याज्या शुद्धैकादशी अमृतरूपत्वात्सैव प्रयत्नतो ज्योतिःशास्त्रालोचनया ग्राह्येति ।। १४६ ।।

कृष्णामृतमहार्णवः

**द्वादश्यां भोजनं चैव विद्धायां हर्युपोषणम् ।**
**यः कुर्यान्मन्दबुद्धित्वान्निरयं सोऽधिगच्छति ।। १४७ ।।**

**ताम्रपर्णी—**न केवलं विद्धोपोषणं धर्मज्ञानार्थहानिदम् । किन्तु निरयप्रदं चेत्याह— **द्वादश्यामिति** ।। १४७ ।।

**उमर्जी—**उक्तनियमातिक्रमे बाधकमाह— **द्वादश्यामिति** ।। उपवासयोग्यद्वादश्यां विद्धायामेकादश्यां हर्युपोषणं हरिमुद्दिश्योपवासः ।। १४७ ।।

**उपेन्द्र—**उक्तार्थाकरणे बाधकमाह— **द्वादश्यामिति** ।। उपवासयोग्यद्वादश्यां विद्धायामेकादश्यां हर्युपोषणं हरिमुद्दिश्योपवासः ।। १४७ ।।

**कोनेरी**—उक्तमनङ्गीकुर्वतां विपरीतफलमाह— **द्वादश्यामिति** ।। विद्धायां एकादश्यामुपोषणं तत्सम्बद्धद्वादश्यां पारणं च यः कुर्यात् सः मन्दबुद्धित्वाद्धेतोर्निरयं नरकं अधिगच्छति अतिशयेन दुःखमनुभवति । तस्माद्विद्धायां नोपवास इति ।। १४७ ।।

**स्मृ.कृष्णाचार्य**—ननु दशमीवेधे सति द्वादश्यामेवोपवासः बहुफलत्वात्कर्तव्य इत्युक्तम् । तत्र विद्धायामुपवासं कृत्वा द्वादश्यां भोजने क्रियमाणे को दोष इत्यत आह— **द्वादश्यामिति** ।। विद्धैकादशीपरित्यागेन यद्द्वादश्यामुपवासः कर्तव्य इत्युक्तम् । तद्द्वादशीभोजनं विद्धैकादश्यामुपोषणं च यः कुर्यात्सः मन्दबुद्धित्वान्निरयं नरकमधिगच्छति प्राप्नोति । तस्माद्विद्धैकादशीं त्यक्त्वा द्वादश्यामेवोपवासः कार्य इत्यर्थः ।। १४७ ।।

**कृष्णामृतमहार्णवः**

**यानि कानि च वाक्यानि विद्धोपास्यापराणि तु ।**
**[1]धनदार्चापराणि स्युर्वैष्णवी न दशायुता ।। १४८ ।।**

**ताम्रपर्णी**—

दिवाकरतिथौ राजन्यदि न स्यात्परेऽहनि ।
दशमीमिश्रिता कार्या महापातकनाशिनी ।।

इत्यादिषु विद्धोपवासविधानाद्विहितकरणे कथं निरयप्राप्तिरित्यत आह— **यानीति** ।। यतो दशायुता दशमीविद्धैकादशी न वैष्णवी न विष्णुप्रीतिकरा तस्माद्यानि कानि च वाक्यानि विद्धोपोषणस्य कर्तव्यत्वपराणि तानि धनदस्यार्चनार्थं एकादशीविधिपराणीत्यर्थः ।। १४८ ।।

**उमर्जी**—ननु—

द्वादशी स्वल्पमल्पापि यदि न स्यात् परेऽहनि ।
द्वादशीमिश्रिता कार्या महापातकनाशनी ।।
त्रयोदश्यां न लभ्येत द्वादशी यदि किञ्चन ।
नोपोष्यैकादशी तत्र दशमीमिश्रितापि वा ।। इति ।।

---

१. 'धनेशार्चापराणि' इति कोनेरी पाठः ।

विद्धोपवासविधायकऋषिवाक्यानामप्रामाण्यं स्यादित्यत आह— **यानीति** ।। यानि कानि यावन्ति तानि धनदार्चापराणि कामितं धनं ददते इति धनदा देवास्तेषां अर्चापराणि । न भगवत्पराणि । कुत इत्यत उक्तम् ।। **वैष्णवीति** ।। दशायुता दशम्या युक्ता वैष्णवी विष्णुदेवताका न भवति ।

देवतानां विमुक्त्यर्थमसुराणां तमोगतेः ।
अनिश्चितानि वाक्यानि कानिचित्सम्प्रदर्शय ।। इति वचनात् ।।

तात्पर्यभेदेन प्रवृत्तत्वाद्वाक्यानां अधिकारिप्रामाण्यं सम्भवतीति भावः ।। १४८ ।।

**उपेन्द्र**—ननु विद्धोपवासविधायकऋषिवाक्यानामप्रामाण्यं स्यादित्यत आह— **यानीति** ।। यानि कानि यावन्ति तानि धनदार्चापराणि "कामितं धनं ददत" इति धनदाः देवाः तेषामर्चापराणि । न भगवत्पराणि । कुत इत्यत आह— **वैष्णवी न दशायुता इति** ।। दशम्या युक्ता वैष्णवी विष्णुदेवताका नेत्यर्थः ।

देवतानां विमुक्त्यर्थमसुराणां तमोगतेः ।
अनिश्चितानि वाक्यानि कानिचित्सम्प्रदर्शयेत् ।।

इति वचनात् अधिकारिभेदेन प्रवृत्तत्वाद्वाक्यानां नाप्रामाण्यमिति भावः ।।१४८ ।।

**कोनेरी**—ननु विद्धोपवाससाधकानि बहूनि वचनानि सन्ति । कथं निषेधः इत्याशंक्य तेषामसुरजनमोहकत्वेनाग्राह्यत्वं सूचयन् कतिपयैः श्लोकैर्व्यवस्थामाह- — **यानि कानि चेत्यादिना** ।। या दशायुता दशा दशमी तया युता दशमीविद्धे-त्यर्थः । सा वैष्णवी विष्णुसम्बन्धिनी न । अतो विद्धैकादश्युपवासपराणि यानि कानिचन वचनानि तानि धनेशार्चापराणि स्युः । तस्माद्वैष्णवतन्त्रविरुद्धत्वान्न ग्राह्याणि ।। १४८ ।।

**स्मृ.कृष्णाचार्य**—

त्रयोदश्यां न लभ्येत द्वादशी यदि किञ्चन ।
उपोष्या द्वादशी स्वल्पा यदि न स्यात्परेऽहनि ।।
दशमीमिश्रिता कार्या महापातकनाशनी ।।

इति अनेकवचनेषु विद्धोपवासविधानात्कथं तत्परित्याग इत्यत आह-- **यानि कानि च वाक्यानीति** ।। विद्धोपोषणपराणि यानि कानि वाक्यानि वर्तन्ते

तानि वचनानि धनदार्चापराणि कामितधनादिप्रदार्चाव्रतपराणि । नतु शुद्धैकादशीपराणि । तत्कृतः, दशायुता दशमीवेधयुक्ता एकादशी यतः न वैष्णवी विष्णुप्रीतिकरशुद्धैकादशीव्रतफलप्रदा न भवतीत्यर्थः ।। १४८ ।।

कृष्णामृतमहार्णवः

**अथवा मोहनार्थाय मोहिन्या भगवान् हरिः ।**
**अर्थितः कारयामास व्यासरूपी जनार्दनः ।। १४९ ।।**

**ताम्रपर्णी**—न केवलं विद्धोपोषणविधिवाक्यानि कुबेरार्चातात्पर्यकानि किन्तु प्रयोजनान्तरेण प्रवृत्तानीत्याह— **अथवेति** ।। रुक्माङ्गदस्य राज्याधिपत्यकाले तच्छिक्षया सर्वेषां जनानामेकादश्युपवासेनोर्ध्वलोकप्राप्तौ सत्यां यमलोके शून्ये देवैर्निर्मितया मोहिन्या रुक्माङ्गदस्य जायया लोकानां मोहनायार्थितः व्यासरूपी जनार्दनः दुष्टजनमर्दको भगवान्हरिः विद्धोपोषणं जनैः स्मृतिप्रणयनद्वारा कारयामास विद्धोपोषणविधिवाक्यानि ऋषिभिः कारयामासेति वा ।। १४९ ।।

**उमर्जी**—प्रकारान्तरेणापि प्रामाण्यं साधयति— **अर्थित इति** ।। मोहिन्या अर्थितः प्रार्थितः । अयोग्यजनमोहनाय ऋषिभिः कारयामासेत्यन्वयः ।।१४९।।

**उपेन्द्र**—प्रकारान्तरेणापि प्रामाण्यं साधयति— **अथवेति** ।। मोहिन्या अर्थित अयोग्यजनमोहनार्थाय ऋषिभिः कारयामासेति सम्बन्धः ।। १४९ ।।

**कोनेरी**— अथवेति पक्षान्तरम् । भगवान् षड्गुणपूर्णः जनार्दनः दुष्टजननाशको व्यासरूपी हरिः सत्कुलप्रसूतत्वेन सन्मार्गवर्तिनां तमोयोग्यानां मोहनार्थं मोहिन्या अर्थितस्सन् एतादृग्वचनानि कारयामास । स्वशिष्यैरिति शेषः ।। १४९ ।।

**स्मृ.कृष्णाचार्य**—विद्धैकादश्युपवासकरणस्य मोहिन्याः प्रार्थनेन कृतत्वात् न सर्वैः कार्यं व्यासोक्तमित्याह— **अथवेति** ।। अथवेति पक्षान्तरम् । मोहिन्या अर्थितो व्यासरूपी जनार्दनः भगवान् लोकानां मोहनार्थाय विद्धैकादशीव्रतं तया कारयामास । यद्वा तयार्थितः विद्धोपोषणपराणि वचनानि शिष्यैः कारयामास ।। १४९ ।।

कृष्णामृतमहार्णवः

धनदार्चाविवृद्ध्यर्थं महावित्तलयस्य च ।
असुराणां मोहनार्थं [1]पाषण्डानां विवृद्धये ।
आत्मस्वरूपाविज्ञप्त्यै [2]स्वलोकाप्राप्तये तथा ।। १५० ।।

**ताम्रपर्णी**—न केवलं विद्धोपोषणं मोहिनीयाज्ञया कारयामास । किन्तु स्वयं च बहूनि प्रयोजनाद्यनुसन्दधत् कारयामासेत्युक्तानुवादपूर्वमाह— **धनदेति** ।। विद्धोपोषणे धनदप्रीतिद्वारा बहुधनलाभो भवतीत्युक्तौ वित्तं भवतीति भ्रान्त्या धनदार्चायां सर्वेषां प्रवृत्त्या धनदार्चाविवृद्ध्यर्थम् । वस्तुतो महावित्तलयस्यैवार्थे । असुराणामियमेवैकादशीति व्यामोहनार्थं अधर्मबाहुल्येन पाषण्डानां पाशुपतादीनां विवृद्धये । तेन चात्मस्वरूपाविज्ञप्त्यै वैकुण्ठादिस्वलोकाप्राप्तये तथा कारयामासेत्यर्थः ।। १५० ।।

**उमर्जी**—सर्वज्ञशिखामणेर्व्यासस्यानेकतात्पर्यमस्तीत्याह— **धनदार्चाविवृद्ध्यर्थमिति** ।। काम्यव्रतविवृद्ध्यर्थम् । महावित्तरूपज्ञानस्य लयः तस्य विवृद्ध्यर्थम् । अज्ञानादिविवृद्ध्यर्थमिति यावत् । पाषण्डानां जनानां आत्मनः परमात्मनः स्वस्वरूपस्य वा ज्ञानानन्दादेः अविज्ञप्त्यै अज्ञानाय । स्वलोकाप्राप्तये वैकुण्ठाद्यप्राप्तये ऋर्षिभिः कारयामासेति पूर्वेणान्वयः । अतोऽन्यतात्पर्यकत्वादग्राह्यमिति भावः ।। १५० ।।

**उपेन्द्र**—परमकारुणिकस्य व्यासस्य वाक्यप्रणयने अनेकतात्पर्यमाह— **धनदार्चाविवृद्ध्यर्थमिति** ।। काम्यव्रतविवृद्ध्यर्थमिति भावः । महावित्तरूपस्य ज्ञानस्य लयः तदर्थमित्यर्थः । पाषण्डानां मतानाम् । आत्मनः परमात्मनः स्वस्य स्वरूपस्य सच्चिदानन्दादेः अविज्ञप्त्यै अज्ञानाय । स्वलोकाप्राप्तये स्वस्य लोको वैकुण्ठादिः तस्याप्राप्तये । ऋर्षिभिः कारयामासेति पूर्वेणान्वयः । अतो वाक्यानामन्यतात्पर्यकत्वात्प्रामाण्यं सम्भवतीति भावः ।। १५० ।।

---

१. 'शैवादीनां' इति स्मृ.क. तथा क. पाठः ।
२. 'स्वलोकाप्राप्तये' इति स्मृ.क. तथा क. पाठः ।

**कोनेरी—**तद्वचनानां प्रयोजनान्तरं चाह— **धनदार्चेति** ।। कुबेराद्यन्यदेवतार्चनेन द्रव्याधिक्यं भविष्यतीति द्रव्याभिवृद्ध्यर्थं अर्चनमुद्दिश्य महावित्तलस्य वित्तनाशार्थं। असुराणां मोहनार्थं पाषण्डानां विष्णुद्रोहिणां विवृद्धये । अयोग्यानां आत्मस्वरूपस्य अविज्ञप्त्यै तथा स्वर्लोकस्य विष्णुलोकस्य अप्राप्तये । यद्वा स्वर्लोकप्राप्तये अन्धन्तमोरूपस्वलोकस्य आ सम्यक् प्राप्तये कारयामासेति पूर्वेणान्वयः ।। १५० ।।

**स्मृ.कृष्णाचार्य—**न केवलं मोहिन्या अर्थितः तत्कारितवान् किन्त्वसुराणां मोहायापीत्याह— **असुराणामिति** ।। असुराणामयोग्यानां पाषण्डानां मोहनाय शैवादीनां विवृद्धये अधर्माभिवृद्ध्यर्थं आत्मस्वरूपाविज्ञप्त्यै आत्मनः स्वस्य नारायणस्य यत्स्वरूपं तस्याविज्ञप्त्यै अज्ञानाय । तथा स्वर्लोकाप्राप्तये स्वर्गलोकस्य अप्राप्त्यर्थं विद्धैकादशीव्रतं तया कारयामासेत्यर्थः । स्वलोकाप्राप्तय इति पाठे वैकुण्ठाप्राप्तये इत्यर्थः ।। १५० ।।

**कृष्णामृतमहार्णवः**

**एवं विद्धां परित्यज्य द्वादश्यामुपवासनात् ।**
**कोटिजन्मार्जितं पापं एकयैव विनश्यति ।। १५१ ।।**

**ताम्रपर्णी—**न केवलं विद्धोपवासत्यागेन द्वादश्युपवासकृतामेव महत्फलं किन्तु कारयितृणां चेत्याह— **एवमिति** ।। एवं बहुदोषदुष्टां विद्धां परित्यज्य त्याजयित्वा यो द्वादश्यामुपवासयेत् उपवासं कारयेत् तस्य कोटिजन्मार्जितं ततः कोटिगुणं चापि पापमेकया द्वादश्या विनश्यतीत्यर्थः ।। १५१ ।।

**उमर्जी—**उक्तार्थमुपसंहरन् व्रतानुष्ठातृणां अधिकारिभेदेन फलभेदमाह— **एवमिति** ।। ऋषिवाक्यानां अन्यतात्पर्यकत्वं ज्ञात्वा शुद्धद्वादश्यामुपवासिनाम् ।। १५१ ।।

**उपेन्द्र—**उक्तार्थमुपसंहरन् व्रतानुष्ठातृणामधिकारिभेदेन फलमाह— **एवमिति** ।। उक्तरीत्या ऋषिवाक्यानां अन्यतात्पर्यं ज्ञात्वा दशम्या विद्धामेकादशीं परित्यज्य शुद्धद्वादश्यामुपवासिनाम् ।। १५१ ।।

**कोनेरी—**एवं विद्धैकादश्युपवासः दोषप्रापक इति ज्ञात्वा योऽधिकारी स्वयं विद्धामेकादशीं परित्यज्य द्वादश्यामुपवासनात् तथा अन्यानपि त्याजयित्वो-

पवासयेत् । तस्य एकयैव तु द्वादश्युपवासेन कोटिजन्मार्जितं पापं नश्यति नाशं प्राप्नोति ।। १५१ ।।

**स्मृ.कृष्णाचार्य**—तस्मात्तादृशैकादर्शो परित्यज्य द्वादश्यामुपवासो महाफलप्रदा इत्याह— **एवं विद्धामिति** ।। एवं विद्धां बहुफलप्रदां विद्धैकादर्शी परित्यज्य द्वादश्यामुपवासिनां तादृशशुद्धैकादश्युपवासकर्तृणां कोटिजन्मार्जितं पापं शुद्ध-द्वादश्युपवासकरणेन नश्यति नाशं प्राप्नोतीत्यर्थः ।। १५१ ।।

**कृष्णामृतमहार्णवः**

**ततः कोटिगुणं [1]चाऽपि [2]निषिद्धस्येतरैर्जनैः ।**
**यदनादिकृतं पापं तदूर्ध्वं यत्करिष्यति ।। १५२ ।।**
**(तत्सर्वं विलयं याति परेषामुपवासनात् ।)**

**ताम्रपर्णी**—न केवलं प्रागर्जितं नश्यति एष्यदपि न लिप्यतीत्याह— **निषिद्ध-स्येति**।। इतरैरयोग्यैर्जनैर्द्वादश्युपवासं मा कुरु द्वादश्युपोषणोपदेशं च मा कुर्विति निषिद्धस्य वारितस्याप्यधिकारिणः परेषामुपवासनान्निमित्तात् यदनादिकृतं पापं तदूर्ध्वं यत्करिष्यति तत्सर्वं विलयं यातीत्यर्थः ।। १५२ ।।

**उमर्जी**—इतरैर्निषिद्धोपवासकर्तृभिः जनैः निषद्धस्य शुद्धद्वादश्युपवासो न कार्यः इति निन्दितस्य शुद्धद्वादश्युपवासस्य ऋषितात्पर्यं ज्ञात्वा प्रीतिकरत्वेन दृढबुद्ध्या करणादिति शेषः । ततः पूर्वोक्तपुरुषार्थापेक्षया कोटिगुणं पुण्यं भवति । कोटिगुणं पापमिति पाठे विनश्यतीत्यनुकर्षः । उपदेशेन धर्मप्रवर्तकस्य फलाधिक्यमाह- — **यदिति** ।। अनादिकृतं अनादिकालमारभ्य कृतम् । ऊर्ध्वमुत्तरकाले क्रियमाणं यद्वर्तमानकाले करिष्यति । परेषां स्वान्येषां वैष्णवानां उपदेशेनोपासनात् उपपूर्वाद्वस निवास इत्यस्मादन्तर्णीतण्यर्थाभावे घञि । ततः करोत्यर्थे ल्युट् तस्याना-देशे उपवासनं सिद्ध्यति । उपवासकारयितृत्वानामित्तादित्यर्थः नन्वपरोक्षज्ञानवदे-कादश्युपवासस्य कथं पूर्वोत्तरपापनिवर्तकत्वं इति चेन्न । विष्णोः परत्वनिश्चयस्यापि पापनिवर्तकत्वश्रवणात् ।

---

१. 'पापं' इति उम., उप. पाठः । २. 'निषिद्धस्योपवासनं' इति कानेरी, स्मृ.कृ., कृ.पाठः ।

यैर्निश्चितं परत्वं तु विष्णोः प्रायो न यातनाम् ।
ब्रह्महत्यादिभिरपि यान्त्याधिक्ये चिरं ननु ।। इत्युक्तेः ।।
किमु सर्वोत्तमत्वनिश्चयेन एकादश्युपवासकर्तुरिति ।। १५२ ।।

**उपेन्द्र—** ।। **ततः कोटिगुणमिति** ।। इतरैर्जनैर्निषिद्धोपवासकर्तृभिः निषिद्धस्य द्वादश्युपवासो न कार्य इति निन्दितस्य शुद्धद्वादश्युपवासस्य ऋषितात्पर्यं ज्ञात्वा विष्णुप्रीतिकरत्वेन दृढबुद्धिकरणादिति शेषः । ततः पूर्वोक्तपुरुषार्थापेक्षया कोटिगुणं भवति । "ततः कोटिगुणं पापम्" इति पाठे विनश्यतीत्यनुकर्षः । उपदेशेन धर्मप्रवर्तकस्य फलाधिक्यमाह— **यदिति** ।। अनादिकृतमनादिकालमारभ्य कृत-मूर्ध्वं उत्तरकाले यत्क्रियमाणं यदिदानीं करिष्यति तत्सर्वं पापं परेषां स्वान्येषां वैष्णवानामुपवासनात् उपपूर्वाद्वस निवास इत्यस्मादन्तर्णीतण्यर्थाभावे घञन्तस्ततः करोतीत्यर्थे ल्युट् तस्य अनादेशे उपवासनमिति सिद्ध्यति । उपवासकारयितृत्व-निमित्तादित्यर्थः । नन्वपरोक्षज्ञानवत् एकादश्युपवासस्य कथं पूर्वोत्तरपापनिवर्त-कत्वमिति चेन्न । विष्णोः परत्वश्रवणस्यापि पापनिवर्तकत्व-श्रवणात् ।

यैर्निश्चितं परत्वं तु विष्णोः प्रायो न वेदनाम् ।
ब्रह्महत्यादिभिरपि यात्याधिक्ये चिरं ननु ।। इत्युक्तेः ।।
किमु सर्वोत्तमत्वनिश्चयेनैकादशीधर्ममनुष्ठाय परेषां प्रवर्तकस्येति नानुपपत्तिः ।। १५२ ।।

**कोनेरी—**निषिद्धविद्धैकादश्युपवासने ततः द्वादश्यामुपवासपुण्यात् कोटिगुणं पापं स्यादिति वा अपीत्यनेन सूचयति । विद्धैकादश्युपवासं निषिद्धय द्वादश्यामु-पवासं कुरुध्वमित्युपदेशकर्तुः किं फलमिति तत्राह— **यदनादिकृतमिति** ।। परेषां अन्यभगवद्भक्तानाम् । उपवासनात् उपवासं कुर्वित बोधनात् । अनादिकृतं अनादिलिङ्गशरीरसम्बन्धात् कृतं यत्पापं उत्तरत्र यत्पापं करिष्यति तत्सर्वं विलयं यातीत्यन्वयः । अत्रापि पूर्वोक्तरीत्या अधिकारिपरतया रुच्यर्थपरतया वेत्यर्थो ज्ञातव्यः ।। १५२ ।।

**स्मृ.कृष्णाचार्य—**एतादृशद्वादश्युपवासं विना विद्धैकादश्युपवासो न कार्यः । बहुपापप्रदत्वादित्याह— **तत इति** ।। ततः द्वादश्युपवासने यत्पुण्यफलमुक्तं

तत्सङ्ख्यापेक्षया कोटिगुणपापं निषिद्धस्य दशमीविद्धैकादश्युपवासने भवति । तस्माद्विद्धां परित्यज्य परदिने द्वादश्युपवासे फलमस्तीति प्रमाणेनाह— **यदनादीति** ।। यत् येन पुरुषेण द्वादश्युपवासकर्त्रा यत् अनादिकृतं अनादिजन्मारभ्य एतज्जन्मपर्यन्तं कृतं नानाविधं पापं तथा तदूर्ध्वं एतज्जन्मन्युपरि पापं करिष्यति । तत्सर्वं पापं परेषां अन्यद्वादशीतिथीनां मध्ये विद्धैकादशीपरदिने द्वादश्यामुपोषणाद्विलयं यान्तीति ।। १५२ ।।

कृष्णामृतमहार्णवः

**तत्सर्वं विलयं यान्ति परेषामुपवासनात् ।**
**नच तस्मात्प्रियतमः केशवस्य ममापि वा ।। १५३ ।।**

**ताम्रपर्णी**—कथमेतत्फलं तस्य घटत इत्यत आह— **नचेति** ।। तस्मादुपदेशकात्। ममेति रुद्रवाक्यमेतत् । अत एव विष्णुतीर्थीये स्कान्देऽप्याह । तथा रुद्रो ज्यायान् इत्यवतार्यैतेषां वचनानां पठितत्वमिति बोध्यम् ।। १५३ ।।

**उमर्जी**—असम्भावनाशंकां परिहरति— **नचेति** ।। तस्मात्स्वयं धर्ममनुष्ठाय परेषां धर्मप्रवर्तकत्वाद्रुद्रवाक्यत्वात् मम रुद्रस्यापि भगवत्प्रियतमत्वाच्च पापनिवृत्तिः सम्भवतीति भावः ।। १५३ ।।

**उपेन्द्र**—स एव भगवत्प्रिय इत्याह— **नचेति** ।। तस्मादुपदेशेन धर्मप्रवर्तकत्वात्पुरुषात् । रुद्रवाक्यत्वान्मम रुद्रस्यापीत्यर्थः । अत्यन्तभगवत्प्रियतमत्वात् पापपरिहारः सम्भवतीति भावः ।। १५३ ।।

**कोनेरी**—य एवमन्यान् प्रति उपदेशं करोति तस्मात् केशवस्य ममापि च प्रियतमोऽत्यन्तप्रियो नास्तीत्यन्वयः । एतद्वचनं पार्वतीं प्रति रुद्रोक्तमिति ज्ञातव्यम् ।। १५३ ।।

**स्मृ.कृष्णाचार्य**—तस्य फलान्तरमाह— **नच तस्मात्प्रियतम इति** ।। तस्माद्विद्धां परित्यज्य द्वादश्यामुपवासिनः पुरुषात्प्रियतमः अत्यन्तप्रियतमः केशवस्य ब्रह्मरुद्रादिदेवोत्तमस्य ममापि रुद्रस्य नास्ति । तस्माद्विद्धैकादशीत्यागेन केवलद्वादश्युपवासः विष्णुप्रीतिकरत्वादेव कर्तव्य इति ।। १५३ ।।

कृष्णामृतमहार्णवः

***एकादश्यां [1]ह्यवेधे तु द्वादशीं न परित्यजेत् ।**
**पारणे मरणे चैव तिथिस्तात्कालिकी स्मृता ।। १५४ ।।**

**ताम्रपर्णी**—ननु—

महाहानिं करोत्येषा द्वादशी लङ्घिता नृणाम् ।
करोति धर्महरणं लङ्घितेव सरस्वती ।।

इति द्वादश्यामपारणे प्रत्यवायश्रवणात्कथं तदुपोषणमित्यत आह— **एकादश्यामिति**।। एकादश्यां वेधाभावे द्वादशी न लङ्घनीयेति भावेन तद्वचनमिति भावः। द्वादशी लङ्घितेत्यस्याभिप्रायान्तरमाह— **पारण इति** ।। अल्पावशिष्टद्वादश्यां तत्काले काल एव पारणम् । द्वादशी न लङ्घनीया । यथा मरणे तात्कालिकी तिथिः स्मृतिषूक्तत्वादनुष्ठेया, तथा पारणार्थमपि तात्कालिकद्वादश्या एवानुष्ठेयत्वादल्पकाले पारणकरणे माध्याह्निकक्रियाकालक्रमलोपभयेनालस्येन वा लङ्घिता चेन्महाहानिं करोत्येवेति तद्वचनाभिप्राय इति भावः ।

यां तिथिं समनुप्राप्य ह्युदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया................ ।।

इति वचनं पारणातिरिक्तकार्यविषयमिति ज्ञेयम् ।। १५४ ।।

**उमर्जी**—ननु दशमीवेधाभावेऽपि एकादशीं परित्यज्य द्वादशीमुपोष्य त्रयोदशीपारणं कार्यं किमित्यत आह— **एकादश्यामिति** ।। एकादशीं द्वादशीं च न परित्यजेत् । एकादशीमुपोष्य द्वादशीकाल एव पारणं कुर्यादित्यर्थः । ननु द्वादशीकाले एव कुतः पारणं कार्यमित्यत आह— **पारण इति** ।। व्रताङ्गपारणे मरणे च प्राप्ते तात्कालकी स चासौ कालश्चेति कर्मधारयः तत्कालस्येयं तात्कालिकी तिथिः । द्वादशीकलार्धा चेत् तत्रैव पारणं कुर्यादित्यर्थः । मरणकाले या तिथिः सैव ग्राह्या नत्वुदयतिथिः । यद्वा पारणे प्रसक्ते । मरणे । निमित्तसप्तमीयम् । तन्निमित्तश्राद्धे प्राप्ते । चशब्दस्तुशब्दार्थः । किं व्रताङ्गपारणं कार्यं उत मातापितृश्राद्धं

---

* अयं श्लोकः नारदपुराणे २-२-१५ ।
१. 'हि वेधे' इति कानेरो पाठः ।

कुतुपकाले कार्य इति विशये प्राप्ते राद्धान्तविशेषमाह— **तिथिरिति**।। तात्कालिकी पारणकालसम्बन्धिनी द्वादशीतिथिरेव श्राद्धार्थं ग्राह्येति स्मृता ।

त्रयोदश्यां मृताहश्चेत्कलार्धा द्वादशी यदि ।
द्वादश्यामेव कर्तव्यं न दोषमुपगच्छति ।। इति स्कान्दे ।।

द्वादश्यामेव द्वादशी यावद्घटिकापर्यन्तमनुवर्तते तावत्कालमध्य एव सर्वानुष्ठानादिकं कृत्वा पारणं कर्तव्यमित्यर्थः ।।

त्रयोदश्यां मृततिथिः मातापित्रोस्समागता ।
द्वादश्यामेव कर्तव्यं कुतुपो नह्यपेक्षते ।। इति विष्णुपुराणे ।। १५४ ।।

**उपेन्द्र**—ननु दशमीवेधाभावेऽपि शुद्धद्वादशीमुपोष्य त्रयोदशीपारणं कार्यं चेत्याह— **एकादश्यामिति** ।। अवेधे दशम्या वेधाभावे । तुशब्दः विधिविशेषद्योतकः। तामेव दर्शयति— **द्वादशीमिति** ।। एकादशीमुपोष्य पारणयोग्यद्वादशीं न परित्यजेत्। पारणमन्तरेणेति शेषः । द्वादशीकाल एव पारणं कुर्यादित्यर्थः । तत्र हेतुमाह— **पारण इति** ।। व्रताङ्गपारणे कार्ये । मरणे मरणनिमित्तश्राद्धे । तात्कालिकी स चासौ कालश्चेति कर्मधारयः । तत्कालस्येयं तात्कालिकी पारणयोग्या तिथिः मरणकालतिथिः ग्राह्येति स्मृता स्मृत्युक्ता । यद्वा द्वादशीपारणे विशेषोऽस्तीत्याह— **पारण इति** ।। पारणे कार्ये मरणनिमित्तश्राद्धे प्राप्ते । चशब्दस्तुशब्दार्थः । किं व्रताङ्गपारणं कार्यमुत कुतुपकाले मातापितृश्राद्धं कार्यमिति संशये विशेषोऽस्तीत्याह— **तात्कालिकीति** ।। पारणकालतिथिरेव श्राद्धार्थं ग्राह्येति स्मृता । तदुक्तम्—

त्रयोदश्यां मृताहश्चेत्कलार्धाद्द्वादशी यदि ।
द्वादश्यामेव कर्तव्यं न दोषमुपगच्छति ।। इति स्कान्दे ।।
त्रयोदश्यां मृततिथिः मातापित्रोः समागता ।
द्वादश्यामेव कर्तव्यं कुतुपो नह्यपेक्षितः ।।
—इति श्रीविष्णुपुराणे ।। १५४ ।।

**कोनेरी**—तदेव विशदयति— **एकादश्यामिति** ।। एकादश्यां दशमीवेधे प्राप्ते सति द्वादशीं न परित्यजेत् । उपवासार्थमिति शेषः । द्वादश्यामुपवासं कृत्वा

त्रयोदश्यां पारणं कुर्यादिति । अयमर्थः तु शब्दगृहीत इति ज्ञेयः । ननु त्रयोदश्यां पारणे कृते द्वादश्युल्लङ्घनदोषप्राप्तिः स्यादिति तत्राह— **पारण इति** ।। यस्यां **तिथौ** उपवासः क्रियते तत्परतिथावेव पारणं कार्यम् । यदा एकादशीतिथौ तिथिद्वयमेलनं भवति तदा यस्यां तिथौ म्रियते सैव मृतितिथिरिति ग्राह्या । अतो पारणे मरणे च तात्कालिकी तिथिर्ग्राह्येति स्मृता स्मृतिसिद्धा ।। १५४।।

**स्मृ.कृष्णाचार्य**—एकादश्यां वेधाभावेऽपि द्वादश्यामुपवासः कर्तव्यः किमित्यतो नेत्याह— **एकादश्यामिति** ।। एकादश्यां तिथौ दशमीवेधाभावे तत्रैवोपोष्य पारणार्थं द्वादशीं द्वादशीव्रतं न परित्यजेत् । एकादशीमुपोष्य द्वादश्यां प्रातरेव पारणव्रतं कुर्यात् । ननु द्वादश्याः पूर्णतिथित्वाभावे कथं तत्र प्रातःपारणमित्यतः आह— **पारणे मरणे चेति** ।। पारणे द्वादशीपारणविषये तिथिर्द्वादशीतिथिः तात्कालिकी प्रातःपारणपर्यन्तैवावस्थिता नतु पूर्णतिथ्यपेक्षा । "द्वादशद्वादशीर्हन्ति द्वादशी तु विलङ्घिता" इत्यादिवचनैर्द्वादश्यतिक्रमे दोषोक्तेः । तत्र दृष्टान्तः ।। **मरणे चेति** ।। चोऽप्यर्थे । मरणे यथा पूर्णतिथिमनपेक्ष्य मरणकालमात्रव्यापिनीति स्मृत्यादावुक्ता तथा द्वादश्यामपि पारणे तात्कालिकीति स्मृत्यादावुक्तेत्यर्थः ।। १५४ ।।

**कृष्णामृतमहार्णवः**

**ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।**
**ब्राह्मणः क्षत्रियो वैश्यः शूद्रो भर्तृमती तथा ।। १५५ ।।**
**अभर्तृका तथाऽन्ये वा सूतवैदेहिकादयः ।**
**एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।। १५६ ।।**

**ताम्रपर्णी**—एकादश्युपवासे न अधिकारिविशेषनियम इत्याह— **ब्रह्मचारीति** ।। १५५ ।।

सूतो ब्राह्मण्यां क्षत्रियाज्जातः । वैदेहिकस्तस्यां वैश्यजः । आदिपदेन शूद्राज्जातश्चण्डालः गृह्यते । "ब्राह्मण्यां क्षत्रियात्सूतस्तस्यां वैदेहिको विशः । चण्डालो वृषलात्तस्याम्" इत्यभिधानम् । नापि कालनियम इत्याह— **पक्षयोरिति** ।। १५६ ।।

**उमर्जी**—विष्णुव्रतत्वादेकादशी सर्वाधिकारिकेत्याह— **ब्रह्मचारीत्यादिना** ।। तथा वा इत्यादिशब्दाः परस्परसमुच्चायकाः । अन्ये वर्णबाह्याः सूतवैदेहिकादयः । सूतः क्षत्रियाद् ब्राह्मण्यां जातः । वैदेहिकः वैश्याद् ब्राह्मण्यां जातः । चण्डालः शूद्राद् ब्राह्मण्यां जात इत्यादयः आदिशब्दात्परिगृहीताः ।। १५५-१५६ ।।

**उपेन्द्र**—विष्णुव्रतत्वादेकादशी सर्वाधिकारिकेत्याह— **ब्रह्मचारीत्यादिना** ।। तथा इत्यादिशब्दाः परस्परसमुच्चायकाः । अन्ये वर्णबाह्याः सूतवैदेहिकादयः । क्षत्रियाद् ब्राह्मण्यां जातः सूतः । वैश्याद् ब्राह्मण्यां जातः वैदेहिकः । शूद्राद् ब्राह्मण्यां जातश्चण्डालः ।। १५५-१५६ ।।

**कोनेरी**—इदानीं दशम्यादितिथित्रयेऽधिकारिणो निर्दिशति— **ब्रह्मचारीति** ।।ब्रह्मचर्याद्याश्रमिणो चत्वारः । ब्राह्मणाद्याश्चत्वारो वर्णाः । तथा स्त्रियो भर्तृमत्यः अभर्तृमत्यश्च ।। १५५ ।।

अन्ये सूतवैदेहिकादयश्च उभयोः पक्षयोः शुक्लकृष्णपक्षयोः विद्यमानायां अविद्धायां एकादश्यां न भुञ्जीत न भुञ्जीरन् ।। १५६ ।।

**स्मृ.कृष्णाचार्य**—एवमरुणोदयकाले षट्पञ्चाशद्घटिकायां दशमीविद्धैकादशीं परित्यज्य वेधरहितशुद्धैकादश्यामुपवासः कर्तव्यः । तत्र भोजनं न कर्तव्यमित्युक्तम्। तत्र के अधिकारिणः इत्यतस्तदधिकारिण आह— **ब्रह्मचारीति** ।। ब्रह्मचारी प्रथमाश्रमी नैष्ठिकश्च । गृहस्थो गृहसथाश्रमी । वाशब्दोऽप्यर्थे । वानप्रस्थः वानप्रस्थाश्रमी यतिः । 'कुटीचको बहूदश्च हंसः परमहंसकः' इत्युक्तश्चतुर्विधः यतिरपि । एवमाश्रमिणां तदुक्त्वा ब्राह्मणादिवर्णिनां तदाह— **ब्राह्मण इति** ।। स्त्रीणामपि तदाह— **भर्तृमतीति** ।। सुमङ्गली ।। १५५ ।।

अभर्तृका विधवा । वर्णाश्रमिणां तत्स्त्रीणामभिधाय वर्णबाह्यानामपि तदाह— **तथान्ये चेति** ।। ते के इत्यत आह— **सूतेति** ।। सूतजात्याक्रान्तादयः न भुञ्जीत एते सर्वे न भुञ्जीरन् । ननु कृष्णपक्षे गृहस्थानामुपवासनिषेधाच्छुक्लपक्ष एवोपवासप्राप्तिरित्यत उक्तम् ।। **पक्षयोरुभयोरपीति** ।। कृष्णपक्षे उपवासनिषेधस्य काम्योपवासनिषेधपरत्वात्पक्षयोरुभयोरपि कर्तव्यमिति ।। १५६ ।।

**कृष्णामृतमहार्णवः**

**[४१]एकादश्यां तु यो भुङ्क्ते मोहेनावृत[१]चेतसा ।**
**शुक्लायामथ कृष्णायां निरयं याति स ध्रुवम् ।। १५७ ।।**

**ताम्रपर्णी**—ननु पक्षद्वये उपवासो वानप्रस्थयत्योर्धर्मः नतु गृहस्थस्य ।

संक्रान्त्याद्युपवासेन पारणेन युधिष्ठिर ।
एकादश्यां च कृष्णायां ज्येष्ठपुत्रो विनश्यति ।।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेवान्वयाद्गृही ।।

इत्यादिवचनादित्यत आह— **एकादश्यामिति** ।। यो मोहेन पठितस्मृतिसमुत्थेन मिथ्याज्ञानेनावृतचेतसा कृष्णायामेकादश्यां भुङ्क्ते । यथा शुक्लायां यो भुङ्क्ते स नित्यं याति तथा निरयं यातीत्यर्थः ।। १५७ ।।

**उमर्जी**—अनधिकारी नास्ति किमित्यत स्वरूपजिज्ञासायामाह— **एकादश्यामिति** ।। मोहेन मिथ्याज्ञानेनावृतं चेतनं मनो यस्य सः । यो वा अधिकारी एकादश्यां भुङ्क्ते तस्य का गतिरित्यत उक्तम् ।। **निरयमिति** ।। ध्रुवं शाश्वतं पुनरावृत्तिरहितमित्यर्थः ।। १५७ ।।

**उपेन्द्र**—आदिशब्दगृहीताधिकारिणमुक्त्वा अनधिकारिणः स्वरूपमाह— **एकादश्यामिति** ।। यस्तु मोहेनावृतचेतनः । तुशब्दात् ज्ञानसद्भावेऽपि मिथ्याज्ञानेनावृतं चेतनस्वरूपं यस्य सः । अनधिकारीत्यर्थः । एकादश्यां यो भुङ्क्ते ध्रुवं शाश्वतं पुनरावृत्तिवर्जितमित्यर्थः । तमोयोग्य एवानधिकारीत्यर्थः ।। १५७ ।।

---

१. 'चेतनः' इति उम., उपे. तथा कोनेरी पाठः ।

४१. यथा शुक्ला तथा कृष्णा ह्युपोष्या सा प्रयत्नतः ।
शुक्ला भक्तिप्रदा नित्यं कृष्णा मुक्तिं प्रयच्छति ।। वराहपुराणे २११·४३
सपुत्रश्च सभार्यश्च स्वजनो भक्तिसंयुतः ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ।। निर्णयरत्नोदाहृतनारदीयवचनम् ।।
गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च ।

**कोनेरी—**प्रत्यवायमाह— **एकादश्यामिति** ।। यः मोहेनावृतचेतनः ज्ञानशून्यः एकादश्यां वेधरहितैकादश्यां शुक्लायां कृष्णायां वा भुङ्क्ते । सः ध्रुवं निश्चयेन नरकं याति ।। १५७ ।।

**स्मृ.कृष्णाचार्य—**कृष्णपक्षशुक्लपक्षयोरेकादश्युपवासः कार्यः । अज्ञानात्तदकरणे प्रत्यवायश्रवणादित्याह— **एकादश्यामिति** ।। यः पुरुषो मोहेन मिथ्याज्ञानेनावृतचेतसा तत्सम्बद्धान्तःकरणेन शुक्लायां तथा कृष्णायामेकादश्यां उपवासं त्यक्त्वा भुङ्क्ते । स पुरुषो ध्रुवं निश्चयेन ध्रुवं नित्यं नरकं याति प्राप्नोति । तस्मात्पक्षद्वयेऽप्युपवासः कार्य इति भावः ।। १५७ ।।

कृष्णामृतमहार्णवः

**विवेचयति यो मोहाच्छुक्ला कृष्णेति पापकृत् ।**
**एकादशीं स वै याति निरयं नात्र संशयः ।। १५८ ।।**

**ताम्रपर्णी—**कैमुत्येन कृष्णपक्षोपोषणपरित्यागिनोऽनर्थमाह—**विवेचयतीति** ।। शुक्ला न भोक्तव्या कृष्णा तु भोक्तव्येति एकादशीं यः विवेचयति । सोऽपि पापकृन्निरयं याति किमु भोक्तेत्यर्थः ।। १५८ ।।

**उमर्जी—**ननु कृष्णां नोपवसेद्गृहीति निषेधवाक्यबलात्कृष्णैकादश्युपवासनं कथं कार्यमित्यत आह— **विवेचयतीति** ।। शुक्ला ग्राह्या कृष्णा त्याज्या इति यो विवेकं करोति । विवेचनस्यैव निन्दितत्वादनर्थफलस्य च विद्यमानत्वाच्च मुमुक्षुणा उभयं कार्यमिति भावः ।। १५८ ।।

**उपेन्द्र—** "कृष्णां नोपवसेद्गृही" इति निषेधात्कथं कृष्णैकादश्युपवासविधानमित्यत आह— **विवेचयतीति** ।। शुक्ला ग्राह्या कृष्णा त्याज्येति विवेकं करोति । विवेचनस्यैवाविहितत्वोक्त्या निषेधवचनस्य काम्यपरत्वान्मुमुक्षुणोभयं कार्यमिति भावः ।। १५८ ।।

**कोनेरी—**यः पापकृत् पापकर्मा इयं शुक्लोपोष्या इयं कृष्णा नोपोष्येति मोहादज्ञानादेकादशीं विवेचयति । स वै सोऽपि निरयं नरकं नित्यनरकं याति गच्छति । अत्रास्मिन्नर्थे संशयो नास्ति ।। १५८ ।।

**स्मृ.कृष्णाचार्य**—पक्षद्वयोपवासाकरणे दोष उक्तः । इदानीं शुक्लपक्षे सा कार्या कृष्णपक्षे न कार्या इति विचारमात्रकर्तुरपि दोषश्रवणात्तथा विवेकोऽपि न कार्य इत्याह— **विवेचयतीति** ।। यः शुक्ला उपोष्या कृष्णा तु नोपोष्येति एकादर्शी विवेचयति विवेकं करोति । सः पापकृत् निरयं याति गच्छति । अत्र संशयो नास्ति । अतः पक्षद्वयेऽपि उपवासः कार्य इति भावः ।। १५८ ।।

## कृष्णामृतमहार्णवः

शंकरः—

> **यथा गौर्नैव हन्तव्या शुक्ला कृष्णेति भामिनि ।**
> **एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।। १५९ ।।**

**ताम्रपर्णी**—उक्तमेव शंकरवचनैः सदृष्टान्तमाह— **शंकर इत्यादिना** ।। हे भामिनि भार्ये पार्वति कोपना सैव भामिनीत्यभिधानात् । वचनाभासप्रयुक्ताग्रहाभासप्रदर्शनादेवमुक्तिः । यथा शुक्ला तथा कृष्णेत्याख्यातोभयविधगौर्न हन्तव्या एवमेकादश्यां पक्षयोरुभयोरपि न भुञ्जीतेत्यर्थः । यथा गोवधनिषेधपराणि वाक्यानि न भाक्तानि । एवमेकादशीभोजननिषेधपराणि वाक्यानि न भाक्तानि कल्पकाभावादिति भावः ।। १५९ ।।

**उमर्जी**—विवेचनस्य मोहकृतत्वं तावत्कथमित्यत आह— **यथेति** ।। गौर्न हन्तव्येत्युक्ते शुक्ला न हन्तव्या कृष्णा हन्तव्येति वचनं यथा निन्दितम् । तथा शुक्ला कृष्णा इति विवेचनमकृत्वा न भुञ्जीतेत्यन्वयः । शंकरवाक्यत्वाद्भामिनीति पार्वतीसम्बोधनम् । एकजात्यवच्छिन्नयोर्मध्ये एकस्य ग्राह्यत्वं अन्यस्याग्राह्यत्वं विरुद्धमिति भावः ।। १५९ ।।

**उपेन्द्र**—एकजात्यवच्छिन्नयोर्मध्ये एकस्य ग्राह्यत्वं अपरस्याग्राह्यत्वं विरुद्धमित्याह— **यथेति** ।। गौर्न हन्तव्येत्युक्ते शुक्ला न हन्तव्या कृष्णा हन्तव्येति विवेचनं यथा न कार्यं तथेत्यर्थः ।। १५९ ।।

**कोनेरी**—तत्र दृष्टान्तमाह— **यथेति** ।। हे भामिनि! पार्वति! यथा शुक्ला कृष्णा गौर्न हन्तव्या । तथोभयोः पक्षयोर्विद्यमानयोः एकादश्योः न भुञ्जीत । अपिशब्द एवार्थे । नैव भुञ्जीतेत्यर्थः ।। १५९ ।।

**स्मृ.कृष्णाचार्य**—गौर्न हन्तव्येत्युक्ते शुक्ला न हन्तव्या कृष्णा तु हन्तव्येति यथा विवेचनं न सम्भवति एवमेकादश्यां न भोक्तव्यमित्युक्ते शुक्लायां न भोक्तव्यं कृष्णायां तु भोक्तव्यमिति विवेचनं न सम्भवति । अतः पक्षद्वयेऽपि तत्कार्यमित्याह— **यथेति** ।। तस्मादुभयोरपि पक्षयोरेकादश्यां भोजनं न कार्यमित्याह— **एकादश्यामिति** ।। तस्माद्भोजने उभयत्र दोषश्रवणात्तत्र तन्न कार्यमिति ।। १५९ ।।

**कृष्णामृतमहार्णवः**

**यानि कानि च वाक्यानि कृष्णैकादशिवर्जने ।**
**भरण्यादिनिषेधे च तानि काम्यफलार्थिनाम् ।। १६० ।।**

**ताम्रपर्णी**—ननु "शुक्लामेवान्वयाद्गृही"ति कृष्णैकादश्या गृहस्थैस्त्याज्यत्वेनोक्तत्वेन कृष्णोपवासकरणे तथा "भरण्यादियुता वापि कृष्णां नोपवसेद्गृही" इत्यादौ भरण्यादियुक्तकृष्णोपवासस्य सर्वथा त्याज्यत्वेनोक्तेः प्रापकाभावोऽसिद्ध इत्यत आह— **यानि कानि चेति** ।। **भरण्यादिनिषेधे इति** ।। कृष्णैकादशीनिषेधे भरण्यादियुक्तैकादश्युपवासनिषेधे चेत्यर्थः । अस्यां योजनायां "भरण्यादियुता वाऽपि कृष्णां नोपवसेद्गृही" इति स्मृतेर्भरण्यादियुक्तामेकादशीमित्यर्थः । काम्यफलार्थिनां काम्यस्य फलमुद्दिश्यैकदाशीव्रतं कुर्वतां प्रत्येव इत्यर्थः ।।१६०।।

**उमर्जी**—ननु—

संक्रान्तावुपवासेन पारणेन युधिष्ठिर ।
एकादश्यां तु कृष्णायां ज्येष्ठपुत्रो विनश्यति ।।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही ।।
भरण्यादियुतां वापि कृष्णां नोपवसेद्गृही ।।

इत्यादिवाक्यानां का गतिरित्यत आह— **यानीति** ।। भरण्यादिनिषेधं भरण्यायुक्तैकादशीनिषेधकं वाक्यम् । काम्यं ऐहिकफलम् । अर्थ्यन्त इति अर्थिनः । काम्यफलार्थिनः । तेषां विषयकाणीत्यर्थः ।। १६० ।।

**उपेन्द्र**—ननु—

संक्रान्तावुपवासेन पारणेन युधिष्टर ।
एकादश्यां तु कृष्णायां ज्येष्टपुत्रो विनश्यति ।।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही ।
भरण्यादियुतां वापि कृष्णां नोपवसेद्गृही ।।

इत्यादिवाक्यानां अप्रामाण्यं स्यादित्यतः व्यवस्थामाह— **यानीति** ।। भरण्यादि-निषेधं च भरणीनक्षत्रयुक्तैकादश्यां एकादश्या व्रतनिषेधम् । आदिशब्दात्संक्रान्ति-युक्तव्रतनिषेधं कुर्वन्तीति शेषः । काम्यमैहिकफलम् । अर्थ्यन्त इति तथोक्ताः तेषां विषयाणीत्यर्थः ।। १६० ।।

**कोनेरी**—एवं चेत्—

सङ्क्रान्तावुपवासं च कृष्णैकादशिवासरे ।
चन्द्रसूर्योपरागे च नोपोष्यात्पुत्रवान् गृही ।।

इति वचनात् कृष्णैकादश्युपवासस्य निषिद्धत्वेन कथमुपवास इत्यत आह— **यानीति** ।। कृष्णैकादशीवर्जने भरण्यादिनिषेधे च यानि कानि च वाक्यानि सन्ति तानि काम्यफलार्थिनां अवैष्णवानां विषयाणि ।। १६० ।।

**स्मृ.कृष्णाचार्य**—ननु—

संक्रान्तावुपवासेन पारणेन युधिष्ठिर ।
एकादश्यां च कृष्णायां ज्येष्ठपुत्रो विनश्यति ।।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही ।।

तथा—

भरण्या संयुतां वापि कृष्णां नोपवसेद्गृही ।।

इत्यादिबहुवाक्येषु कृष्णैकादश्युपवासनिषेधात् कथं पक्षद्वये उपवासकरणमित्यत-स्तन्निषेधस्य काम्योपवासनिषेधपरत्वात्पक्षद्वयेऽप्युपवासः कार्य एवेत्याह— **यानि कानि च वाक्यानीति** ।। कृष्णैकादशीवर्जने कृष्णैकादश्यामुपवासवर्जने यद्यपि कानिचिद्वाक्यानि सन्ति तथा भरण्यादियुतैकादशीवर्जने च । तथापि तानि वाक्यानि काम्यफलार्थिनां काम्यफलमपेक्ष्य एकादशीव्रतं कुर्वतां प्रत्येव । निषेध-पराणि नतु विष्णुप्रीत्यर्थमुपवासं कुर्वताम् । अतस्तस्य निषेधस्य काम्योपवास-परत्वान्नित्योपवासः कार्य इति ।। १६० ।।

### कृष्णामृतमहार्णवः

**कामिनोऽपि [१]हि नित्यार्थं कुर्युरेवोपवासनम् ।**
**प्रीणनार्थं हरेर्नित्यं नतु कामव्यपेक्षया ।। १६१ ।।**

**ताम्रपर्णी**—कामिभिरपि प्रत्यवायभयेन स्वकामोपमर्देनानुष्ठीयमानत्वात्कृष्णोपोषणमवश्यं कार्यमित्याह— **कामिनोऽपीति** ।। नियत्यर्थं अकरणे प्रत्यवायप्रसङ्गेन । श्रुतिनियमानुसरणार्थं हरेः प्रीणनार्थं कृष्णोपवासं कुर्युरेव । काम्यव्यपेक्षया काम्यफलोद्देशेन नित्यं सदा कृष्णैकादशीवर्जनं न कुर्युः । तस्मात्कामिभिरपि अनुष्ठीयमानत्वाच्छुक्लां कृष्णां भरण्यादियुतामप्येकादशीं प्रत्यवायनिषेधार्थं प्रीणनार्थं च नित्यं नियमेनोपवसेदित्यर्थः । यद्वा "पुत्रपौत्रविवृद्ध्यर्थं द्वादश्यामुपवासयेत्" इति भवद्भिरुक्तत्वात् एकादश्युपवासमात्रं काम्यफलार्थिनामिति प्राप्तम् । किं विशिष्योच्यते "तानि काम्यफलार्थिनाम्" इतीत्यत आह— **कामिन इति** ।। नित्यं काम्यव्यपेक्षयोपवासं न कुर्युरिति सम्बन्धः ।।१६१।।

**उमर्जी**—श्रुतिविहितकाम्यकर्तृणां गृहस्थानां कृष्णैकादशीनिषेधः प्राप्त इत्यत आह— **कामिन इति** ।। श्रुतिविहितकाम्यसंज्ञितकाम्यकर्तारो गृहस्था अपीत्यर्थः। भुञ्जीतेति यो वदेत् ।

उपदेशकेषु सत्स्वेवं यो भुङ्क्ते हरिवासरे ।
तावुभौ नरकं यातः यावदाभूतसम्प्लवम् ।।

इत्यादिना प्राप्तप्रत्यवायपरिहारार्थम् । तर्हि तदेव फलं किमित्यत आह— **प्रीणनार्थमिति** ।। नित्यस्यैहिकफलत्वं किन्न स्यादित्यत आह— **नत्विति** ।। नित्यं विहितकर्म काम्यव्यपेक्षया ऐहिकफलोद्देशेन नो नैव । श्रुतिविहितस्यैव भगवत्प्रीतिजनकत्वादित्यर्थः ।। १६१ ।।

**उपेन्द्र**—ननु काम्यकर्मकर्तृणां गृहस्थानां कुतः कृष्णैकादश्युपवासनिषेधः प्राप्त इत्यत आह— **कामिन इति** ।। श्रुतिविहितकाम्यकर्मकर्तारः गृहस्था अपि । नित्यार्थं अकरणे प्रत्यवायपरिहारार्थम् ।

---

१. 'नियत्यर्थं' इति ताम्र. पाठः ।

भुङ्क्ष्व भुङ्क्ष्वेति यो ब्रूयाद्यो भुङ्क्ते हरिवासरे ।
तावुभौ नरकं यातः यावदाभूतसम्प्लवम् ।।

इत्यादिवचनप्राप्तप्रत्यवायपरिहारार्थमेवेत्यर्थः । तर्हि प्रत्यवायपरिहार एव फलं किन्नेत्याह— **प्रीणनार्थमिति** ।। प्रीणनमेवार्थः प्रयोजनमुद्दिश्य कुर्युरैहिकफलोद्देशेन किं न स्यादित्यत उक्तम् ।। **नन्विति** ।। कामव्यपेक्षया काम्यत इति कामः। ऐहिकफलोद्देशेन नतु श्रुतिविहितस्य भगवत्प्रीतिजनकत्वादिति भावः ।। १६१ ।।

**कोनेरी**—यद्यधिकारिणो वैष्णवाश्चेत् तेऽपि नित्यार्थं नित्यो हरिः तदर्थं तत्प्रीत्यर्थमिति यावत् । उपवासं कुर्युरेव । तदेव स्पष्टयति—**प्रीणनार्थमिति** ।। नित्यं हरेः प्रीणनार्थमेव कुर्वन्ति । काम्यव्यपेक्षया न कुर्वन्ति । अतस्तानि वचनानि नाङ्गीकार्याणीति भावः ।। १६१ ।।

**स्मृ.कृष्णाचार्य**—ननु तथापि काम्योपवासिनां कृष्णैकादशीवर्जनं प्राप्तमित्यत आह— **कामिनोऽपि हीति** ।। कामिनोऽपि काम्योपवासं कुर्वन्तः पुरुषाः कृष्णैकादश्युपवासं कुर्युः। कुतः नित्यार्थं करणे प्रत्यवायपरिहारार्थम् । तथा हरेः प्रीणनार्थं प्रीत्यर्थं च । नतु केवलं काम्यव्रतापेक्षया नित्यं कुर्युरिति । अन्यथा प्रत्यवायश्रवणादिति भावः ।। १६१ ।।

**कृष्णामृतमहार्णवः**

**तस्माच्छुक्लामथो कृष्णां भरण्यादियुतामपि ।**
**प्रत्यवायनिषेधार्थमुपवासीत नित्यशः ।। १६२ ।।**

**उमर्जी**— उक्तार्थमुपसंहरति ।। **तस्मादिति** ।। नित्यविहितत्वात्प्रत्यवायनिर्हरणार्थं अकरणे दोषपरिहारार्थं उपवासीत ।

यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा ।
तुल्यतामिष्यते यैस्तु ते वै वैष्णवसम्मताः ।। इति ।।

सफलमित्यर्थः ।। १६२ ।।

**उपेन्द्र**— उक्तार्थमुपसंहरति— **तस्मादिति** ।। तस्माद्भरण्या युतामेकादशीं प्रत्यवायनिषेधार्थं, वरं स्वमातृगमनमित्यादिना प्राप्ताकरणे दोषपरिहारार्थं उपवासीत ।

यथा शुक्ला तथा कृष्णा यथा कृष्णा तथोत्तरा ।
तुल्यतां मन्यते यस्तु सद्वैष्णव उदाहृतः ।। इति वचनात् ।
समफलमिति भावः ।। १६२ ।।

**कोनेरी—**फलितमाह— **तस्मादिति** ।। तस्मात्तेषां वचनानामेवाप्रमाणत्वात् शुद्धां वेधरहितां शुक्लां कृष्णां च भरण्यादियुतामपि एकादशीं प्रत्यवायनिषेधार्थं प्रत्यवायप्रमाणानां परिहारार्थं नित्यशः निरन्तरं यावदायुः प्रवर्तते तावत्पर्यन्तमुपवासीत ।। १६२ ।।

**स्मृ.कृष्णाचार्य—**तमेवार्थं विवृण्वन्नुपसंहरति— **तस्मादिति** ।। यस्मात्कामिनः अपि प्रत्यवायपरिहारार्थम् ।

भुंक्ष्व भुंक्ष्वेति यो ब्रूयात् यो भुंक्ते हरिवासरे ।
तावुभौ नरकं यातः यावदाभूतसम्प्लवम् ।।

इत्यादि प्रत्यवायवचनप्राप्तपरिहारार्थं नित्यशः नित्यं निरन्तरमुपवासीत । पक्षद्वयेऽप्युपवासं कुर्यान्नतु केवलशुक्लामिति भावः इति ।। १६२ ।।

**कृष्णामृतमहार्णवः**

**कला वा घटिका वाऽपि 'परतो द्वादशी यदि ।**
**द्वादशद्वादशीर्हन्ति पूर्वेद्युः पारणे कृते ।। १६३ ।।**

**ताम्रपर्णी—**"एकादश्यां ह्यवेधे तु द्वादशीं न परित्यजेदि"त्यत्रैकादश्याः वेधाभावे द्वादशी न त्याज्या । किन्तु तत्र पारणा कार्येत्युक्तस्यापवादमाह— **कला वेति** ।। अत्र केचित् घटिकाषोडशभागः कलेत्याहुस्तदयुक्तम् । "कला तु षोडशो भागो बिम्बोऽस्त्री मण्डलं त्रिषु" इत्यमरसिंहे कालावयवातिरिक्तद्रव्यवाचिनः कलाशब्दस्य षोडशभागार्थत्योक्तेः । अपरे तु—

अष्टादशनिमेषास्तु काष्टास्त्रिंशत्तु ताः कलाः ।
तास्तु त्रिंशत्क्षणास्ते तु मुहूर्तो द्वादश स्त्रियाम् ।।

इत्यमरोक्त्यनुसारेण कलाकाष्टाशब्दार्थमाहुः । तदप्ययुक्तम् ।

निमिषस्त्रिलवो ज्ञेयः आम्रातस्ते त्रयः क्षणः ।
क्षणान्पञ्च विदुः काष्टां लघुता दश पञ्च च ।।

लघूनि च समाम्राता नाडिका दश पञ्च च ।

इति तृतीयस्कन्धवचनविरोधात् । अन्ये तु कला घटिका ।

अरुणोदयतः पूर्वं कलावेधविदूषिता ।

कलेति घटिका प्रोक्ता महावृद्धौ महीपते ।।

इति स्कान्दवचनादित्याहुः ।

वस्तुतस्तु । कला घटिकाषष्ठ्यंशभूता विघटिका। काष्ठा तु भागवतोक्तरीत्या घटिकापञ्चादशांशलघुपञ्चदशांशरूपा बोध्या । तथाच यदि द्वादशी परतः परदिने कला विघटिका काष्ठा चोर्वरिता तदा पूर्वेद्युः पारणे कृते तदा तत्पारणं द्वादशद्वादशीः द्वादशद्वादश्यनुष्ठानफलं हन्ति । तथाच वृद्धिमिच्छतो मूलहान्या-पत्तिरिति न्यायेन पारणपुण्यार्थं यत्नकरणे आर्जितपुण्यहान्यापत्तेः। एकादश्याः वेधाभावे त्रयोदश्यां द्वादशीशेषदर्शनेन एकादशीं द्वादशीं चोपवसेदिति भावः । उक्तं चान्यत्र—

द्वादशी तु कला काष्ठा यदि स्याद्धि परेऽहनि ।

द्वादशद्वादशीर्हन्ति पूर्वस्यां पारणं कृतम् ।। इति ।। १६३ ।।

**उमर्जी**—एवं अविद्धैकादश्युपवासस्य कर्तव्यत्वं बहुप्रमाणैरुपपाद्य द्वादश्या अतिरिक्तत्वे पूर्वद्वादश्यामुपवासः कार्य इत्याह— **कला वा घटिकेत्यादिना** ।। परतः द्वादश्याः परेद्युः द्वादशी । दृश्यते इति शेषः । पूर्वेद्युः अतिरिक्तद्वादश्याम् । उपवासयोग्यद्वादश्यामित्यर्थः । द्वादशद्वादशीर्हन्ति द्वादशसङ्ख्याकैकादशीव्रतं हन्ति ।। १६३ ।।

**उपेन्द्र**—एवमविद्धैकादश्युपवासस्य कर्तव्यत्वं बहुप्रमाणैरुपपाद्य द्वादश्या अतिरिक्तत्वे पूर्वद्वादश्यामुपवासः कार्यः । अन्यथा प्रत्यवायफलमाह— **कला वेत्यादि श्लोकत्रयेण** ।। द्वादश्याः परेद्युः यदि दृश्यत इति शेषः । द्वादशी द्वादशसंख्याकद्वादश्युपवासव्रतमित्यर्थः । पूर्वेद्युरुपवासयोग्यद्वादश्यामिति ।। १६३ ।।

**कोनेरी**—एवं विद्धैकादशीसम्बद्धद्वादश्यां उपवासमभिधायेदानीमतिरिक्तद्वादश्युपवासस्यावश्यकर्तव्यत्वेन तत्स्वरूपमाह— **कला वेति** ।। कला वा घटिका वा अपरे परदिने त्रयोदशीदिने यदि द्वादशी वर्तते इति शेषः । तदा पूर्वेद्युःपारणं नैव

१. 'परेद्युः' इति उपं. पाठः ।

कार्यम् । पारणे कृते पूर्वतनद्वादशद्वादशीर्हन्ति नश्यति । तज्जन्यं पुण्यमित्यर्थः। तत्स्वरूपं दशमी पंचाशद्धटिका, एकादशी पञ्चपञ्चाशद्धटिका, आर्यभटरीत्या द्वादशी षष्टिघटिका, त्रयोदश्यां कला वा घटिका वा उर्वरिता भवति । तदा सातिरिक्तेत्युच्यते । तदुक्तं कौर्मे—

दशमीवेधहीना चेत् परतो द्वादशी यदि ।
उपवासद्वयं कार्यं सातिरिक्तेति भण्यते ।। इति ।।

इदमुक्तं भवति । यदा दशमी वेधहीना एकादशी वृद्धिमाप्नोति द्वादशी चातिवृद्ध्या षष्टिघटिका भवति । त्रयोदश्यां किञ्चिदुर्वरिता च तदोपवासद्वयं कृत्वोर्वरितद्वादश्यां पारणं कार्यम् । तदुल्लङ्घ्य पूर्वेद्युः पारणे कृते पूर्वद्वादशीं द्वादशीपुण्यं नश्यतीति ।। १६३ ।।

**स्मृ.कृष्णाचार्य—**पूर्वमेकादश्या अरुणोदयवेलायां षट्पञ्चाशद्धटिकायां दशमीवेधे सति तां परित्यज्य द्वादश्यामुपवासं कृत्वा परदिने पारणं कर्तव्यमित्यत्र वचनान्युक्त्वा शुद्धैकादश्यां उपवासानन्तरं द्वादश्यां पारणं प्राप्तम् । तत्र द्वादश्याः परदिने त्रयोदश्यामपि द्वादशीदर्शने पूर्वद्वादश्यां पारणं न कार्यम् । अन्यथा प्रत्यवायश्रवणादिति तत्र स्मृतिवचनानि पठत्याचार्यः। तत्र तावदुपवासद्वयाकरणे प्रत्यवायमाह— **कला वेति** ।। अपरे अपरदिने त्रयोदश्यां कला वा कलामात्रा वा घटिकामात्रा वा द्वादशी यदि दृश्यते । तदा पूर्वेद्युः त्रयोदश्याः पूर्वदिने द्वादश्यामेव एकादश्युपवासं कृत्वा पारणे कृते सति पूर्वदिने द्वादश्यां क्रियमाणं पारणं द्वादशद्वादशीः पूर्वं स्वकृतद्वादशसङ्ख्याकद्वादशीव्रतेषु यानि पुण्यफलानि तानि हन्ति यतस्तस्मादेकादशीं द्वादशीं चेति दिनद्वयमुपोष्य त्रयोदश्यां साधनद्वादशीकाले एव पारणं कार्यमिति भावः ।। १६३ ।।

कृष्णामृतमहार्णवः

**अतिरिक्ता द्वादशी चेद्यस्तां नोपोषयेद्यदि ।**
**द्वादशद्वादशीर्हन्ति द्वादशी चातिलङ्घिता ।। १६४ ।।**

**ताम्रपर्णी—**न केवलं द्वादश्यवशेषे पूर्वस्यामुपवासाकरणे उपवासविध्यतिक्रमेण विधानाल्लङ्घिता द्वादशी च द्वादशद्वादशीर्हन्तीति प्रमाणान्तरेणाह— **अतिरिक्तेति** ।।

द्वादशी यद्यतिरिक्ता चेत्तर्हि यस्तां नोपवसेत्सम्पूर्णद्वादश्यां पारणं कार्यमिति भ्रान्त्योपवासविधित्यागात् द्वादशद्वादशीर्हन्ति । न केवलमेतावत् । अल्पद्वादश्या एव कार्यत्वादतिलङ्घिता द्वादशी च द्वादशद्वादशीर्हन्तीत्यर्थः । अतिरिक्तलक्षणम्-

दशमी वेधरहिता परतो द्वादशी यदि ।
अतिरिक्ता तु सा ज्ञेया सर्वपापप्रणाशिनी ।।

—इति वचनाज्ज्ञेयम् ।। १६२ ।।

**उमर्जी**—अतिरिक्तद्वादशी चेत् ।

दशमी वेधरहिता परतो द्वादशी यदि ।
अतिरिक्ता तु सा ज्ञेया सर्वपापप्रणाशनी ।।

—इति वचनोक्तरीत्येत्यर्थः ।।

एकादश्युपवासकर्ता तां पूर्वद्वादशी अवशिष्टद्वादशी अतिलङ्घिता पारणं अकृत्वा अतिक्रान्ता चेत् । द्वादशद्वादशीर्हन्तीत्युभयत्रान्वयः ।। १६४ ।।

**उपेन्द्र**—अतिरिक्ता द्वादशी चेत्

दशमी वेधरहिता परतो द्वादशी यदि ।
अतिरिक्ता तु सा ज्ञेया सर्वपापप्रणाशिनी ।।

इति वचनरीत्या व्यतिरिक्ता चेदित्यर्थः ।। १६४ ।।

**कोनेरी**—अथोक्तरीत्या द्वादशीं तिथिं स्पष्टमाह— **अतिरिक्तेति** ।। द्वादशी अतिरिक्ता चेत् तां द्वादशीमुपवसेत् । यदि तां नोपवसेत् तदा उल्लङ्घिता उर्वरिता द्वादशी स्वोल्लङ्घनापराधेन पूर्वकृतद्वादशीजन्यपुण्यं नाशयति ।। १६४ ।।

**स्मृ.कृष्णाचार्य**—तत्र वचनान्तरमाह— **अतिरिक्तेति** ।। अतिरिक्तद्वादशीदिने षष्टिघटिकानन्तरं परदिने त्रयोदश्यामपि द्वादश्यधिका वर्तते चेत्साप्युपोष्या यदि तां पूर्वदिनं पूर्वद्वादशीमपि नोपोषयेत् तदा द्वादशद्वादशीर्हन्ति । कीदृशी द्वादशीत्यत उक्तम् ।। **अतिलङ्घितेति** ।। त्रयोदशीयुक्तसाधनद्वादशी अतिलङ्घिता चेत्यक्ता चेद्द्वादशद्वादशीर्हन्तीत्यर्थः ।। १६४ ।।

कृष्णामृतमहार्णवः

**द्वादश्यामतिरिक्तायां यो भुङ्क्ते पूर्ववासरे ।**
**द्वादशद्वादशीर्हन्ति द्वादशीं न परित्यजेत् ।। १६५ ।।**

**ताम्रपर्णी**— अतिरिक्ता द्वादशी चेद्यस्तां नोपोषयेद्यदीति सामान्योक्तेरत्र तामिति अतिरिक्तामिति प्रतीयते । अतः स्पष्टप्रमाणमाह— **द्वादश्यामिति** ।। द्वादशीं न परित्यजेदित्यस्योपवासाय पूर्वद्वादशीं पारणाय पुच्छद्वादशीमित्यर्थः । अत्रातिरिक्तद्वादशीनिर्णयश्चार्यभट्टानुसारेण कार्यः । नतु सूर्यसिद्धान्तानुसारेण । तथाच निर्णयसारे—

ब्राह्मेण पैतृकादीनि दैवकार्याणि सौरतः ।
द्वादश्यादिव्रतं तत्र आर्येणैव तु कारयेत् ।। इति ।।

तथान्यत्र—

आर्यभट्टेन गणनं दशम्यादिदिनत्रयम् ।। इति ।।

रामचन्द्रतीर्थमठसम्प्रदायस्तु सूर्यसिद्धान्तेन द्वादश्यतिरेकदर्शने सानुष्ठेया नतु तत्राप्यार्यानुसरणम् । दशम्यादिदिनत्रय इत्यस्य दशम्यामित्यर्थ इति ।। १६३ ।।

**उमर्जी**— अतिरिक्तायां सत्यां योऽधिकारी पूर्ववासरे उपवासयोग्यद्वादश्यां अतिरिक्तद्वादशीं न परित्यजेत् । द्वादशीकाल एव पारणं कुर्यादित्यर्थः ।।

षष्ठ्यूननाड्यश्चेद्धरिवासरसंज्ञारूपत्वं ज्ञेयम् ।

तदुक्तम्—

एकादश्याः प्रान्तभागो द्वादश्याः पूर्व एव च ।
हरिवासरसंज्ञोऽसौ न कुर्यात्तत्र पारणम् ।। इति ।।
द्वादश्या आद्यपादस्तु कीर्तितो हरिवासरः ।
महादोषकरं चात्र सम्प्राप्ते हरिवासरे ।।
तर्पणं श्राद्धहोमादि नित्यनैमित्तिकं तथा ।
कुर्वीत जलपानादि व्यतीते हरिवासरे ।। इति ।।

एकादशी यदा दशमीविद्धा भवति । तदा दशम्यामरुणोदये विद्यमानामेकादशी सूर्योदयानन्तरं विद्यमानामेकादशी च मिलित्वा यावत्यो घटिकाः जायन्ते तासां

घटिकानां भागचतुष्टयं कृत्वा तत्र चतुर्थभागे भोजनतर्पणौपासनादिकं न कार्यम्। तथाचैकादश्यां रात्रिशेषे यावद्घटिका द्वादशी वर्तते । उदयानन्तरं यावद्द्वादशी वर्तते तदुभयं मिलित्वा भागचतुष्टयं कृत्वा प्रथमे भागे यावत्यो घटिकाः एकादशी-रात्रिगताः ताः विहाय सूर्योदयानन्तरं उर्वरितघटिकासु तर्पणौपासन-भोजनानि कार्याणि ।। १६३ ।।

**उपेन्द्र**—उपवासकर्ता द्वादर्शी अत एवातिरिक्तद्वादर्शी तावत्परेद्युः पारणयोग्यां द्वादर्शी न परित्यजेत् । तत्रैव पारणं कुर्यादित्यर्थः। अत्र पण्डिताचार्यैः—एका-तिद्वादशीवृद्धाविति अतिरिक्तद्वादशीविषये उक्त इति केचन व्याख्यास्यन्ति ।

एकातिद्वादशीवृद्धौ नोचेद्वृद्धौ तु षोडश ।
द्व्येकलिप्ते समे ह्रासे षण्न्यूनं हरिवासरः ।। इति पाठान्तरम् ।।

अस्यार्थः । द्वादशी अतिवृद्धौ वृद्धौ नोचेत्समवृद्धाविति यावत् । एका घटिका ग्राह्या वृद्धौ तु अतिवृद्धावित्यर्थः । षोडशलिप्तयो ग्राह्याः । द्व्येकलिप्तेत्यादेरर्थः पूर्वमेवोक्तः । एवमतिरिक्तत्वं सम्पाद्योपवासद्वयं कार्यमित्यर्थः । क्षयपक्षे संस्कार-लिप्ता न सन्तीति केचित् षण्न्यूननाड्यश्चेद्धरिवासरं क्षयेत् ।

एकादश्याः प्रान्तभागः द्वादश्याः पूर्वमेव च ।
हरिवासरसंज्ञोऽसौ न कुर्यात्तत्र पारणम् ।। इति ।।
द्वादश्या आद्यपादस्तु कीर्तितो हरिवासरः ।
सकृद्दोषकरं चात्रं सम्प्राप्ते हरिवासरे ।।
तर्पणं श्राद्धहोमादि नित्यनैर्मित्तिकं तथा ।
कुर्वीत जलपानादि व्यतीते हरिवासरे ।। इति च ।।

एकादश्याः पूर्वदिनोपभुक्तघटिकया सहाद्यन्तसङ्ख्यायां सत्यामाद्यपादः हरिवासरः ।। १६५ ।।

**कोनेरी**—इदानीमुक्तार्थस्य आधिक्यद्योतनाय सामान्यतयोक्तातिरिक्तद्वादशीशब्द-निर्वचनपूर्वकं पूर्वतनद्वादश्यां भोजननिषेधमाह— **द्वादश्यामतिरिक्तायामिति** ।। द्वादश्यामतिरिक्तायां सत्यां पूर्ववासरे पूर्वदिने विद्यमानद्वादश्यां यः भुङ्क्ते तस्य पूर्वकृतद्वादशद्वादशीपुण्यं परदिनोर्वरितद्वादशी हन्ति । द्वादशीदेवता हरिर्नाश-

यति । तस्मात्तां द्वादशीं न परित्यजेत् । पूर्वा द्वादशीं उपोष्योर्वरितद्वादश्यामेव पारणं कार्यमिति भावः । अत्र द्वादश्याः अतिरिक्तत्वं नाम रिक्तामारभ्य यद्द्वादशी अतिवृद्धितया युक्ता सा अतिरिक्तेत्यर्थः । अयमर्थः— रिक्तशब्दवाच्या तिथिर्नवमी, नन्दाशब्दवाच्यषष्ठीमारभ्य गणनायां नवम्याः अतिरिक्ततिथित्वादतिरिक्तामारभ्य यावद्द्वादशी अतिवृद्धियुक्ता भवति सा द्वादशी अतिरिक्तेत्युच्यत इति। अतिरिक्तशब्दार्थज्ञापनाय द्वादश्यामतिरिक्तायामित्युक्तमाचार्यैः । गारुडे च—

रिक्तामारभ्यातिवृद्धा द्वादशी या खगेश्वर ।
सा द्वादशी प्रिया विष्णोरुपोष्या विष्णुतत्परैः ।। इति ।।

अतो नवमीमारभ्य द्वादशीपर्यन्तं वृद्धिर्विचार्येति ।। १६५ ।।

**स्मृ.कृष्णाचार्य**—पुनस्तत्रैव वचनान्तरमाह— **द्वादश्यामिति** ।। त्रयोदशीदिनेऽपि द्वादश्यामतिरिक्तायां सत्यां यः पूर्ववासरे पूर्णद्वादश्यामुपवासमकृत्वा भुङ्क्ते तस्य द्वादशद्वादशीः पूर्वं स्वकृतद्वादशद्वादशीव्रतं हन्तीत्यर्थः। तस्मात्तद्द्वादशीं पुच्छद्वादशीं त्रयोदश्यां न परित्यजेत् । किन्तु एकादशीमुपोष्य पूर्णद्वादशीं परदिने उपोष्य त्रयोदश्यां पुच्छद्वादश्यामेव पारणं कुर्यादिति भावः ।। अत्र अतिरिक्तद्वादश्या-मुपवासपारणादिकं आर्यभटेनैव विचार्य कर्तव्यमित्यभिप्रेतम् । तत्र वचनम्—

ब्राह्मेण पैतृकादीनि देवकार्याणि सौरतः ।
द्वादश्यादिव्रतादीनि ह्यार्येणैव तु कारयेत् ।। इति निर्णयसारे ।।

सौरतः सूर्यसिद्धान्तप्रकारेण । आर्येण आर्यभटेन । तथाच एकादशीवत् द्वादशीमप्यार्यभटेन गणनं कृत्वा तेनातिरिक्तद्वादशीवत् पूर्वेद्युरुपवासं कुर्यादिति ।

अत्र केचित् पण्डितं मन्यमानाः आर्यभटेन द्वादश्यतिरेकेऽपि सौरेण । दृष्टे अतिरिक्तद्वादशीं त्यजन्ति । तदयुक्तमेव 'आर्यभट्टेन गणनं दशम्यादिदिनत्रये' इत्याद्युक्तवचनविरोधात् ।

अत्र समाख्यावचनं च—

द्वादशी तु कला काष्टा यदि स्यादपरेऽहनि ।
द्वादशद्वादशीर्हन्ति पूर्वस्यां पारणं कृतम् ।। इति ।।

तल्लक्षणं च—

दशमी वेधरहिता परतो द्वादशी यदि ।
अतिरिक्ता तु सा ज्ञेया सर्वपापप्रणाशनी ।। इति ।।

परतस्त्रयोदश्यां पुच्छद्वादशी यदीति ।। तथा चैतादृशातिरिक्तद्वादश्यामपि उपवासः कार्य इति ।। १६५ ।।

**कृष्णामृतमहार्णवः**

**द्वादशीं श्रवणोपेतां यो नोपोष्यात्स [1]मूढधीः ।**
**पञ्चसंवत्सरकृतं पुण्यं [2]तस्य विनश्यति ।। १६६ ।।**

**ताम्रपर्णी—**"एकादश्यां ह्यवेधे तु द्वादशीं न परित्यजेत्" इत्यस्यापवादान्तरमाह- – **द्वादशीमिति** ।। अत्र केचिच्छुक्लपक्षे श्रोणायुक्तद्वादश्युपोष्या न कृष्णपक्ष इत्याहुः । तद्दूषणाय द्वादशीं श्रवणोपेतामिति सामान्येनोक्तम् । तथाच नारदीये-

शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।
तत्रोपवासं कुर्वीत एकादश्याः शतं फलम् ।। इति ।।

द्वादश्याः श्रवणेन सम्यग्युक्तत्वं नाम उभयोर्मध्याह्नसंस्पर्शित्वमुत्तराषाढवेध-रहितश्रवणयुक्तत्वं च ।

उक्तं च विष्णुतीर्थीये—

मध्याह्नव्यापिनी श्रोणा सदोपोष्या विचक्षणैः ।। इति ।।

नारदीये च—

अनङ्गयुक्तद्वादश्यां वैश्वदेवविवर्जिता ।
श्रुतिर्भवेद्यदा तत्र कुर्याद्व्रतमुपोषणम् ।।
यदि च द्वादशी स्वल्पा श्रवणं चातिरिच्यते ।
तदा नोपोषणं कार्यम्.................... ।। इति ।।

तत्र मध्याह्नव्यापित्वं नाम प्रातःसङ्गवलक्षणद्वादशघटिका ततः परं मध्याह्न-स्पर्शित्वम् । मध्याह्नपर्यन्तव्यापिनी वा । प्रातःसङ्गवव्यापिनीति यावत् ।

---

१. 'मन्दधीः' इति स्मृ.कृ. तथा कृ. पाठः ।
२. 'सद्यः' इति क्वचित् पाठः ।

केचित्तु—

दिनार्धसंयुता श्रोणा द्वादश्या सह संयुता ।
तामुपोष्य व्रतं कुर्याद्वामनस्यातिवल्लभाम् ।।
उदयादभिजिल्लग्नगामिनी श्रुतिवासरे ।
फाल्गुने प्रोष्ठपद्यां वा ह्युपोष्य व्रतमाचरेत् ।।

इत्यादिवचनात् द्वादश्यां श्रोणायाः पञ्चदशघटिकाव्याप्त्या उपवासः कार्य इत्याहुः । एतद्वचनं विष्णुपञ्चकप्रारम्भकाले श्रोणाया द्वादशीदिनार्धसंस्पर्शे व्रतारम्भस्य प्राशस्त्यपरमित्याहुः। यद्वा श्रवणोपेतत्वं नाम उदयद्वयसंस्पर्शरहितश्रवणयुक्तत्वं विवक्षितम्। उदयद्वयसंस्पर्शे श्रवणोपवासस्य त्याज्यत्वात् ।

उक्तं च विष्णुरहस्ये—

एवं श्रोणोदयद्वन्द्वस्पर्शिनी च यदा भवेत् ।
पूर्वेद्युर्वा परेद्युर्वा नोपोष्या पुण्यहानिदा ।। इति ।।

तथाऽन्यत्र—

उदयद्वयसंस्पृष्टा श्रोणायुक्ता हरिर्यदि ।
तदा नोपोषणं कार्यं वैष्णवैर्विष्णुतत्परैः ।। इति ।।

श्रोणाया उदयद्वयसंस्पर्शनं नाम त्रयस्त्रिंशत्कलाधिकैकोनषष्टिघटिकावस्थानं विवक्षितम् । षष्ठिघटिकावस्थाने तु सुतरामुदयद्वयसंस्पर्शेन त्याज्यत्वम् ।

तदुक्तम्—

एकोनषष्ठिघटिकात्रयस्त्रिंशत्पलाधिका ।
श्रोणा च पौर्णमासी च नोपोष्या विष्णुतत्परैः ।। इति ।।
एकोनषष्ठिघटिका त्रयस्त्रिंशत्पलाधिका ।
श्रोणा भवेद्यदि तदा नोपोष्या विष्णुतत्परैः ।।इति च ।। १६६ ।।

**उमर्जी—**द्वादश्यामतिरिक्तत्वे सम्पूर्णद्वादश्यामुपवासं कार्यमिति अभिधाय द्वादश्यां श्रवणयोगे एकादशीमुपोष्य द्वादशीमप्युपोषयेदित्याह— **द्वादशीमित्यादिना**।। मध्याह्नोपेतद्वादशीम् । मध्याह्नव्याप्तश्रोणायुतां उत्तराषाढवेधरहितां उदयद्वन्द्वसंस्पर्श-रहितां यः नोपोष्यात् स मूढधीरित्यर्थः ।

तदुक्तं गारुडे—

द्वादशी श्रवणोपेता मध्याह्नव्यापिनी स्फुटम् ।
तामुपोष्य व्रतं कुर्याद्वामनस्यैव वल्लभाम् ।। इति ।।
उदयादभिजिल्लग्नगामिनी श्रुतिवासरे ।
फल्गुने प्रोष्टपद्यां वा ह्युपोष्य व्रतमाचरेत् ।।
दिनार्धसंयुता श्रोणा द्वादश्या सह सङ्गता ।
तामुपोष्य व्रतं कुर्याद्वामनस्यातिवल्लभाम् ।।
रवेरावर्तनादूर्ध्वं द्वादशीश्रवणयोस्तथा ।
व्याप्तयोरुपवासस्य यद्येकोना न कारयेत् ।। इति स्मृतिसारे ।।
शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।
तयोरेवोपवासश्च त्रयोदश्यां तु पारणम् ।।
दिनस्यार्धे यदा व्याप्ता श्रोणा पापप्रणाशनी ।
कलालवविहीना चेदुपवासो न विद्यते ।।

व्याससंहितायाम्—

श्रवणद्वादशी यत्र मध्याह्नादूर्ध्वमप्यणु ।
तज्जयन्त्यामुपोष्यं स्यान्न्यूनं चेन्नैव कारयेत् ।।
द्वादश्यां श्रवणं चेत्स्यादुदयद्वयसंयुतम् ।
उत्तराषाढसंयुक्तं नैवोपोष्यं कदाचन ।।
उत्तराषाढसंयुक्तश्रवणद्वादशी यदि ।
सुरया बिन्दुना स्पृष्टं गङ्गाम्भ इव सन्त्यजेत् ।।
एकोनषष्टिघटिकां श्रवणद्वादशीं त्यजेत् ।
एकोनषष्टिघटिका यदि श्रोणा प्रदृश्यते ।।
द्वादशीसहिता वापि नोपोष्या विष्णुतत्परैः ।।

संवर्ते—

उत्तराषाढसंयुक्ता श्रोणा पुत्रस्य हानिदा ।
घटिकाद्वादशादर्वाक् शिष्टा ज्ञानस्य हानिदा ।। इति ।।
एवं श्रोणा दिनद्वन्द्वस्पर्शनी च भवेद्यदि ।
पूर्वेद्युर्वा परेद्युर्वा नैवोपोष्यार्थहानिदा ।।

पूर्वेद्युरुत्तरामिश्रा परेद्युस्सा यदा पुनः ।
मध्याह्नव्यापिनी ग्राह्या ज्ञानमोक्षफलप्रदा ।। इति ।।

अत्र द्वादश्याः श्रोणायुक्तत्वं नाम उभयोर्मध्याह्नव्यापित्वं उत्तराषाढवेधराहित्यं उदयद्वन्द्वस्पर्शित्वं कुत इत्यतः प्रमाणान्येतानि ज्ञेयानि ।

श्रवणद्वादशीं पुण्यां नोपोष्याद्य समाहितम् ।
पञ्चसंवत्सरकृतं पुण्यं तस्य विनश्यति ।।
श्रुत्वा ये पारणं कुर्युर्द्वादश्यां श्रवणं यदि ।
प्रयान्ति रौरवं घोरं बालवृद्धातुरा अपि ।।

इत्यादिना द्वादश्युपवासविधिर्ज्ञेयः । प्रत्यवायशास्त्रापरिज्ञानेन विमूढधीः ।।१६६।।

**उपेन्द्र**—एवं द्वादश्या अतिरिक्तत्वे पूर्णद्वादश्यामुपवासं विधाय द्वादश्यां श्रवणयोगे उपवासः कार्य इत्याह— **द्वादशीमिति** ।। मध्याह्नोपेतश्रवणद्वादशीम् । तदुक्तं-

दिनार्धसंयुता श्रोणा द्वादश्या सह सङ्गता ।
तामुपोष्य व्रतं कुर्याद्वामानस्यातिवल्लभा ।।

मरीचिः—

उदयादभिजिल्लग्नगामिनी श्रुतिवासरे ।
फल्गुने प्रोष्टपद्यां वा ह्युपोष्य व्रतमाचरेत् ।।
रवेरावर्तनादूर्ध्वं द्वादशीश्रवणयोस्तथा ।।
व्याप्तयोरुपवासस्य सशक्तो नाम कारयेत् ।
मध्याह्नव्यापिनी श्रोणा द्वादश्या सममास ह ।।
उपोष्या द्वादशी पुण्या विष्णुव्रतपरायणैः ।
शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।।
तयोरेवोपवासश्च त्रयोदश्यां तु पारणम् ।
दिनस्यार्धे यदा व्याप्ता श्रोणा पापप्रणाशिनी ।।
कला लर्वविहीना चेदुपवासो न विद्यते ।
श्रुतिस्तु द्वादशी वापि नतु मध्याह्नगोचरी ।।
तत्रोपवासं कुर्वाणो निरयं प्रति पद्यते ।
एकोनषष्टिघटिकां श्रवणद्वादशीं त्यजेत ।।

एकोनषष्टिघटिका श्रोणा यदि श्रोणा प्रदृश्यते ।
द्वादशीसहिता वापि नोपोष्या विष्णुतत्परैः ।। इति ।।
घटिकाद्वादशादर्वाक् शिष्टा ज्ञानस्य हानिदा ।
श्रवणा द्वादशी यत्र मध्याह्नादूर्ध्वमप्युत ।।
द्वादश्यां श्रवणं चेत्स्यादुदयद्वयसंयुतम् ।
उत्तराषाढसंयुक्ता श्रवणद्वादशी यदि ।।
सुरया बिन्दुना स्पृष्टं गङ्गाम्भ इव सन्त्यजेत् ।
उदयद्वयसंस्पृष्टश्रोणायुक्ता हरिर्यदि ।
तदा नोपोषणं कार्यं वैष्णवैर्विष्णुतत्परैः ।।
अनङ्गयुक्तद्वादश्यां विश्वदेवर्क्षवर्जितम् ।
श्रुतिर्भवेद्यदा तत्र कुर्याद्व्रतमुपोषणम् ।
यदि च द्वादशी स्वल्पा श्रवणं चातिरिच्यते ।
तदा नोपोषणं कार्यम्................ ।।

—इत्यादिना श्रवणोपवासविधिक्षयः ।।

श्रवणद्वादशीं पुण्यां नोपोष्याद्यः समाहिताम् ।
पञ्चसंवत्सरकृतं पुण्यं तस्य विनश्यति ।।
श्रुत्वा यः पारणं कुर्याद्द्वादश्यां श्रवणे यदि ।
ते यान्ति रौरवं घोरं बालवृद्धातुरा अपि ।।
पूर्वेद्युरुत्तरामिश्रा परेद्युः सा यदा पुनः ।
मध्याह्नव्यापिनी ग्राह्या ज्ञाने मोक्षफलप्रदा ।। इति निर्णयवचनानि ।।

इत्यादिना श्रवणोपवासविधिर्ज्ञेयः । प्रत्यवायश्रवणात्प्रत्यवायशास्त्रापरिज्ञानेन मूढधी-रित्यर्थः ।। १६६ ।।

**कोनेरी**—एवमेकादश्याः दशमीवेधाभावे अतिवृद्ध्या द्वादश्याः उदयद्वयस्पर्शित्वे तत्रोपवासद्वयं कर्तव्यमित्यभिधाय तत्सहपठितश्रवणस्यापि अरुणोदयसमये उत्तराषाढवेधरहितत्वेन एकोनषष्टिघटिकात्वे च त्रयोदश्यां किञ्चिदुर्वरितत्वेऽपि मध्याह्नोपरितनद्वादशीसम्बन्धे श्रवणनिमित्तद्वादश्युपवासः कार्यः । अरुणोदयसमये उत्तराषाढवेधयुक्तश्रवणं चेत्तदा एकोनषष्टिघटिकात्वे षष्टिघटिकात्वे वा परदिने

किञ्चिदुर्वरितत्वेऽपि मध्याह्नोपरिगामिन्यां द्वादश्यां श्रवणनिमित्तोपवासो न कार्य इति । उभयप्रकारमधिकारिणो ग्राहयितुमाह— **द्वादशीं श्रवणोपेतामिति** ।। योऽधिकारी अरुणोदयसमये उत्तराषाढवेधरहितउदयद्वयस्पर्शरहितश्रवणयुक्तां मध्याह्नोपरिगां द्वादशीं नोपोष्यात् उपवासं न कुर्यात् । स मूढधीः मंन्दबुद्धिः । तस्मात्सा श्रवणद्वादशी उपोष्या । तदुक्तम्—

श्रवणर्क्षे तु सम्पूर्णे द्वादशी नास्तमाप्नुयात् ।
विजयं श्रवणं नाम तत्र कार्यमुपोषणम् ।।
जया भद्रादिना मिश्रा सम्पूर्णं श्रवणं तथा ।
उपवासद्वयं कार्यमगस्त्यः प्राह नान्यथा ।। इति ।।

इत्यादिपुराणेषु यदा श्रवणमुदयद्वयस्पर्शोपेतं अरुणोदयसमये उत्तराषाढपादा-न्त्यस्पृष्टं द्वादशी च मध्याह्नोपरिगा तदा श्रवणद्वादशी नोपोष्येति तन्त्रन्यायेन तमेव श्लोकमाह— **द्वादशीं श्रवणोपेतामिति** ।। श्रवणोपेतां उक्तप्रकारेण उत्तराषाढविद्धश्रवणोपेतां द्वादशीं मध्याह्नोपरिविद्यमानद्वादशीं नोपोष्यात् तत्रोपवासं न कुर्यात्। यः तत्र उपवासं कुर्यात् स मूढधीः ज्ञानशून्यः उत्तराषाढदूषितश्रवण-युक्तत्वात् । तदुक्तं विष्णुतीर्थीये—

अनङ्गयुक्तद्वादश्यां विश्वदेवर्क्षवर्जिता ।
श्रुतिर्भवेद्यदि तदा नोपोष्या विष्णुतत्परैः ।। इति ।।
उत्तराषाढकणिका कलया यत्र दृश्यते ।
सा जयन्ती परित्याज्या शुना स्पृष्टहविर्यथा ।। इति ।।
उत्तषाढामिलितश्रवणद्वादशीव्रतम् ।
सुराबिन्दुभिरासिक्तं तीर्थवच्चोभयं त्यजेत् ।।
षष्ठिनाडी यदा श्रोणा जायते द्वादशीदिने ।
उपोषणं न कर्तव्यं कृते यान्त्यधरं तमः ।। इति ।।
द्वादशीसहिता श्रोणा परतो यदि दृश्यते ।
उपवासो न कर्तव्यः कृते चान्द्रायणं चरेत् ।। इति ।।
द्वादशीसहिता श्रोणा यमुनाद्वादशी परा ।
परतो हरिभं तर्हि नोपष्या विष्णुतत्परैः ।।

—इत्यादि वचनमुक्तं पुराणेषु ।।

उपोष्यद्वादश्या अनुपोष्यत्वे अनुपोष्यद्वादश्या उपोष्यत्वे च प्रत्यवायवचनमेकमेव । "पञ्चसंवत्सरकृतं पुण्यं तस्य विनश्यति" इति । तस्मादुत्तराषाढवेध-रहितउदय-द्वयस्पर्शरहितश्रवणद्वादश्यां प्राप्तायां श्रवणोपवासः कर्तव्यः । तथा उत्तराषाढवेध-सहितोदयस्पर्शोपेतश्रवणे मध्याह्नोपरिविद्यमानद्वादश्यां प्राप्तश्रवणो-पवासो न कर्तव्य इति । "द्वादशीं श्रवणोपेताम्" इति श्लोकोक्तभगवत्पादाभिप्रायं प्रकटीकर्तुमुभय-विधार्थसाधकानि पुराणवचनानीति ज्ञेयानि । एकादश्याः अरुणोदयसमये श्रवण-स्योत्तराषाढान्त्यपादसम्बद्धश्रवणस्योत्तराषाढवेधो भवति नान्यथेति ।

अरुणोदयवेलायां अभिजित्स्पर्शसंयुता ।
श्रोणा चेत् षष्टिघटिका नोपोष्या विष्णुतत्परैः ।।

इत्यादि प्रबलतमप्रमाणानां पूर्वमुदाहृतत्वान्नात्र पुनर्विविच्यते ।

ततश्च श्रवणस्योत्तराषाढवेधप्रकारः—यदा एकादश्यां षट्पञ्चाशद्धटिका उत्तराषाढः भवति परदिने अतिवृद्ध्या श्रोणा उदयस्पर्शिनी तदा अरुणोदयवेलायां श्रवणस्यो-त्तराषाढसम्बन्धेन वेधो भवति तदा तस्यां द्वादश्यां नोपवासः कार्यः । समवृद्धिपक्षे अपि एकादश्यां षट्पञ्चाशद्धटिकापर्यन्तं उत्तराषाढः द्वादश्यां पञ्चाशद्धटिकापर्यन्तं श्रवणं भवति तदाऽपि पूर्ववदरुणोदयवेधान्नोपवासः । हीनवृद्धिपक्षेऽपि एकादश्यां षट्पञ्चाशद्धटिकापर्यन्तं उत्तराषाढः द्वादश्यां सप्तपञ्चाशद्धटिकापर्यन्तं श्रोणा तदाप्य-रुणोदयसमये उत्तराषाढवेधत्वेन द्वादश्यां नोपवासः । एवं त्रिविधवेधे प्राप्ते द्वादश्यां श्रवणोपवासो न कार्य इति ।

अथ वेधाभावप्रकारः—एकादश्यां त्रिपञ्चाशद्धटिकापर्यन्तं उत्तराषाढः द्वादश्यां षष्टिघटिकापर्यन्तं श्रवणं, त्रयोदश्यां अतिवृद्ध्या किञ्चिदुर्वरितं भवति तदा अरुणो-दयवेलायां उत्तराषाढवेधाभावेनोपवासः कार्यः । समवृद्धिपक्षेऽपि एकादश्यां चतुःपञ्चाशद्धटिकापर्यन्तं उत्तराषाढः द्वादश्यां एकोनषष्टिघटिका श्रोणा तदापि अरुणोदयवेधाभावेन उपवासः कार्यः । हीनवृद्धिपक्षेऽपि एकादश्यां पञ्चपञ्चादश-द्धटिकापर्यन्तं उत्तराषाढः द्वादश्यां सप्तपञ्चाशद्धटिकापर्यन्तं श्रोणा । तदापि वेधाभावेनोपवासः कार्य इति । उपवसानुपवासप्रतिपादकवचनानां सामञ्जस्यं ज्ञेयम् । किञ्च यदा श्रोणा वृद्ध्या एकोनषष्टिघटिका षष्टिघटिका भवति तदैवोत्तरा-

षाढवेधो वेधाभावश्च भवति । नान्यत्र । अन्यथा श्रवणस्योत्तराषाढवेधावेध-प्रतिपादकवचनानां दत्तजलाञ्जलित्रा स्यादिति ।। १६६ ।।

**स्मृ.कृष्णाचार्य—**एवं विद्धैकादश्यामुपवासः द्वादश्यां कर्तव्यः । तथा परदिने द्वादश्यतिरेके द्वादश्यामप्युपवासः कर्तव्य इत्यत्र प्रमाणान्युक्त्वा केवलद्वादश्यां मध्याह्नसमये श्रवणयोगश्चेत्तदाप्युपवासः कर्तव्यः । तदकरणे प्रत्यवायस्य, करणे फलाधिक्यस्य च सत्वादित्यत्र वचनान्याह— **द्वादशीं श्रवणोपेतामिति** ।।

दिनार्धसंयुतां श्रोणां द्वादश्या सह सङ्गताम् ।
तामुपोष्य व्रतं कुर्याद्वामनस्यातिवल्लभाम् ।। इति ।।

मरीचिः—

उदयादभिजिल्लग्रगामिनी श्रुतिवासरे ।
फल्गुने प्रोष्टपद्यां वा उपोष्य व्रतमाचरेत् ।।

इत्याद्युक्तप्रमाणेन द्वादशीं मध्याह्नस्पृष्टद्वादशीं मध्याह्नपर्यन्तं उक्तश्रवणेनोपेतां युक्तां तिथिं यः नोपोष्यादुपवासं न कुर्यात् स मन्दधीः । तस्य तादृशस्य पुरु-षस्य पञ्चसंवत्सरकृतं पञ्चसंवत्सरादारभ्य सम्पादितं पुण्यं विनश्यति । यद्वा स्वकृतानेकवर्षमध्ये पञ्चसंवत्सरकृतं पुण्यं विनश्यति । तस्मादुदयमारभ्य मध्याह्न-काले श्रवणद्वादश्योर्योगे वैष्णवेनोपवासः कर्तव्य इति ।

अत्रापि केचिन्मध्याह्नशब्देन सङ्गवात्परतः कालमङ्गीकृत्योपवासं कुर्वन्ति । तदपि चिन्त्यम् । उक्तवचनविरोधात् । तदकरणे प्रत्यवायसमाख्यावचनानि ।

तथा विष्णुधर्मोत्तरे—

श्रवणद्वादशीं पुण्यां नोपोष्याद्यः समाहिताम् ।
संवत्सरकृतं कर्म तत्क्षणादेव नश्यति ।।

अत्रिः—

ये श्रुत्वा पारणं कुर्युर्द्वादश्यां श्रवणं यदि ।
ते यान्ति रौरवं घोरं बालवृद्धातुरा अपि ।।

तथा जाबालिः—

द्वादश्यां श्रुतियुक्तायां ये कुर्युः पारणं द्विजाः ।
ते यान्ति रौरवं घोरं बालवृद्धातुरा अपि ।। इत्यादि ।।

न केवलं प्रत्यवायश्रवणात् तत्कर्तव्यं अपितु करणे फलाधिक्यश्रवणाच्च तत्कर्तव्यमित्यभिप्रेतम् ।

धर्मसंहितायाम्—

यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् ।
तन्नक्षत्रे चोपवासः एकादश्ययुतं फलम् ।। इति ।।

नारदीये—

शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।
तत्रोपवासः कुर्वीत एकादश्ययुतं फलम् ।। इति ।।

तथा चाकरणे प्रत्यवायस्य करणे फलाधिक्यस्य सत्त्वात् श्रवणद्वादशीव्रतं उभयोर्मध्याह्नयोगे एव उपवासः कर्तव्यः । तदभावे उपवासो न कार्य इत्यभिप्रेतम्। तत्र—

उदयद्वयसंस्पृष्टश्रोणायुक्ता हरिर्यदि ।
तदा नोपोषणं कार्यं वैष्णवैर्विष्णुतत्परैः ।। इति ।।
अनङ्गयुक्तद्वादस्यां विश्वेदेवर्क्षवर्जिता ।
श्रुतिर्भवेत्तदा तत्र कुर्याद्व्रतमुपोषणम् ।
यदि च द्वादशी स्वल्पा श्रवणं चातिरिच्यते ।
तदा नोपोषणं कार्यं........................ ।।

इत्युभयविधवेधरहितश्रवणद्वादश्यामुपवासः कर्तव्य इति ।। १६६ ।।

**कृष्णामृतमहार्णवः**

**एकादशीमुपोष्याथ द्वादशीमप्युपोषयेत् ।**
**न तत्र विधिलोपः स्यादुभयोर्देवता हरिः ।। १६७ ।।**

**ताम्रपर्णी**—द्वादश्युपवासे किं पूर्वैकादशी नोपोष्येत्यत आह— **एकादशीमिति**।। ननु द्वादश्यामुपवासकरणे एकादशीव्रतस्य "पारणान्तं व्रतं भवेत्"इत्युक्त्या पारणान्तत्वात् तद्व्रतविधिलोपः स्यात् । तथा द्वादश्यां वैश्वदेवादिविलोपः स्यादतः सा नोपोष्येत्यत आह— **न तत्रेति** ।। उभयोरेकादशीद्वादश्योर्हरिर्देवता तदुभयोर्हरिवासरत्वात्तदतिक्रमणेऽपि न विधिलोप इति भावः ।। १६७ ।।

**उमर्जी**—नन्वेकादशीपरित्यागेन द्वादश्युपवासः कार्यः किमित्यत आह— **एकादशीमिति** ।। ननु पारणान्तं व्रतं भवेदिति वचनात् । उपवासानन्तरं पारणस्य विहितत्वेन तदतिक्रम्य द्वादश्युपवासे "असमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतान्तरम्" इति वचनविरोधेन विधिलोप इत्यत उक्तम् ।। **न तत्रेति** ।। एकादश्युपवासं कृत्वा द्वादश्युपवासे विधिलोपो नास्तीत्यत्र हेतुमाह— **उभयोरिति** ।। एकादशी द्वादश्युभयोरुपवासनं "एकदैवतमुद्दिश्य कर्तव्यं नान्यथा क्वचित्" इति वचनादिति भावः ।। १६७ ।।

**उपेन्द्र**—नन्वेकादश्युपवासपरित्यागेन द्वादश्युपवासः कार्यः किमित्यत आह—
- **एकादशीमिति** ।। अथ उपवासानन्तरं श्रवणयुक्तद्वादशीम् । ननु "पारणान्तं व्रतं भवेत्" इति वचनादेकादश्युपवासानन्तरं पारणस्य विहितत्वेन तत्परित्यागेन द्वादश्युपवासे "असमाप्तव्रते पूर्वे नैव कुर्याद्व्रतान्तरम्" इति वचनविरोधेन विधिलोप इत्यत उक्तम् ।। **न तत्रेति** ।। अस्मिन्पक्षे विधिलोपो नेत्यत्र हेतुमाह-
— **उभयोरिति** ।।

एकदैवतमुद्दिश्य कर्तव्यं नान्यथा क्वचित् ।। इति ।। १६७ ।।

**कोनेरी**—उपवासस्य पारणाङ्गत्वेन द्वादश्यां पारणाभावे द्वादश्युल्लङ्घनदोषप्राप्तिः स्यादिति तत्राह— **एकादशीमिति** ।। यस्मादुभयोरेकादशीद्वादश्योर्हरिर्देवता । तस्मादधिकारी एकादशीमुपोष्य द्वादशीमुपोषयेत् । उपवासद्वयं कार्यमित्यर्थः । एकादश्युपवासवत् द्वादश्युपवासेऽपि विधिलोपो नेत्यर्थः ।। १६७ ।।

**स्मृ.कृष्णाचार्य**—नन्वेकादशीव्रतं द्वादश्यं पारणपर्यन्तं भवति "पारणान्तं व्रतं भवेत्" इत्युक्तेः । अतो द्वादश्यामप्युपवासे एकादश्युपवासस्य लोपः स्यादित्यतः तत्रोभयोरेकदेवताकत्वान्न दोष इति प्रमाणेनाह— **एकादशीमिति** ।। एकादशीमुपोष्य द्वादश्यामप्युपवासं कुर्यात् । तर्हि तद्व्रतलोपः स्यादित्यतः उक्तम् ।। **उभयोर्देवतेति** ।। उभयोरेकादशीद्वादश्योर्हरिर्देवता यतः । तत्र उभयोरेकदेवताकत्वेन हरिवासरत्वात् परदिने ततः तत्करणेऽपि व्रतभङ्गो नास्तीति भावः ।। १६७ ।।

**कृष्णामृतमहार्णवः**

**अल्पायामपि विप्रेन्द्र पारणं तु कथं भवेत् ।**
**पारयित्वोदकेनापि भुञ्जानो नैव दुष्यति ।। १६८ ।।**

**ताम्रपर्णी**—यदुक्तं—"पारणे मरणे चैव तिथिस्तात्कालिकी स्मृता" इत्यत्र कलामात्रावशेषेऽपि तदैव पारणं कार्यमिति तदयुक्तम् । पराधीनानां स्त्र्यादीनामशक्तानां च तदा पारणस्याशक्यत्वादित्यत आह— **पारयित्वेति** ।। उदकेन पारयित्वा उदकपारणं कृत्वा द्वादश्यतिक्रमदोषवान्न भवति । ननु उदकेन पारणं कृत्वा तदनन्तरं अन्नपारणे द्विःपारणदोषः स्यादित्यतोऽवशिष्टं वाक्यम्। उदकेन पारयित्वा भुञ्जानोऽपि नैव दुष्यतीत्यर्थः ।। १६८ ।।

**उमर्जी**—ननु पराधीनस्त्रीपुरुषाणां द्वादशीकाले एव पारणासम्भवेन व्रतलोपः स्यादित्यत आह— **पारयित्वेति** ।। उदकपारणं कृत्वापि भुञ्जानो न दुष्यतीति अन्वयः । व्रतहानिं न प्राप्नोतीत्यर्थः ।। १६८ ।।

**उपेन्द्र**—ननु पराधीनस्त्रीपुरुषाणामतिरिक्तद्वादशीकाल एव पारणासम्भवाद्-व्रतलोपः स्यादित्यत आह— **पारयित्वेति**।। उदकेन पारयित्वा उदकपारणं कृत्वेत्यर्थः । नैव दुष्यति व्रतहानिं नाप्नोत्येव ।। १६८ ।।

**कोनेरी**—पराधीनप्रवृत्तीनां अल्पद्वादश्यां पारणायोगात्कथं द्वादश्युल्लङ्घनदोषाभाव इति तत्राह — **पारयित्वेति** ।। उदकेन तीर्थोदकेन । पारयित्वा पारणं कृत्वा । पुनः पश्चाद्भुञ्जानो नैव दुष्यति दोषयुक्तो न भवत्येव । यस्मादापः अशितानशिताः याः कृताः कृतप्रायाः इति विद्वद्भिरीरिताः । तस्मान्न व्रतलोप इति भावः ।।१६८।।

**स्मृ.कृष्णाचार्य**—एवमल्पद्वादश्यामतिरिक्तायां तत्काल एव पारणं कर्तव्यमित्युक्तम् । तत्र कर्तुमशक्यत्वात्सन्ध्यादिनित्यकर्मलोपप्राप्तेश्च कथं तदानीं तत्कार्यमित्यतः प्रश्नप्रतिवचनाभ्यां ऋषिवाक्यं पठति— **अल्पायामिति** ।। द्वादश्यामल्पायां सत्यां तदानीं कथं पारणं स्यात् । पराधीनस्त्रीपुरुषादीनां तदानीमेव पारणस्य कर्तुमशक्यत्वादिति कस्यचिद्दृषेः प्रश्ने उत्तरमाह— **पारयित्वेति** ।। पराधीनकर्मकर्ता यः सः उदकेन पारयित्वा ब्राह्मणभोजनानन्तरं भुञ्जानः नैव दुष्यति। तथा वराहपुराणेऽप्युक्तेः इति ।। १६८ ।।

**यदल्पां द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव तु ।**
**आमध्याह्नाः क्रियास्सर्वाः कर्तव्याः शम्भुशासनात् ।।**

**स्मृ.कृष्णाचार्य**—नन्वन्याधीनस्य पुरुषस्य प्रातःकालाद्धटिकायाः पूर्वमेव स्नानसन्ध्यावन्दनादिविहितनित्यकर्मणां माध्याह्निककर्मणां च तदानीमेव कर्तुमशक्यत्वात्कथं तत्करणमन्यथा तत्परिलोपः स्यादित्यत आह— **यदिति** ।। यदा द्वादशीमल्पां पञ्चाङ्गेन दृष्ट्वा निशीथादर्धरात्रादूर्ध्वं प्रभातादृशघटिकातः पूर्वमेवोत्थाय आमध्याह्नाः क्रियाः प्रातःकालमारभ्य मध्याह्नपर्यन्तं क्रियमाणनित्यनैमित्तिकक्रियाः कर्तव्याः । सूर्योदयात्पूर्वमेव कर्माणि कर्तव्यानि ।। ननु अकाले च कृतं कर्म निष्फलं स्यादिति वचनात्कथमकाले कर्तव्यानीत्यत उक्तम् ।। **शम्भुशासनादिति** ।। शम्भोर्महादेवस्य शासनाच्छासनरूपप्रमाणात् कर्तव्यानीति भावः।।

**उषसि द्वे तु कर्तव्ये प्रातर्माध्याह्निकक्रिये ।**
**भुजेर्यदाऽपकर्षः स्यात् तदन्तर्न्यायतो भवेत् ।।**

**स्मृ.कृष्णाचार्य**—तत्रैव व्यासवाक्यं पठति— **उषसि द्वे इति** ।। साधनद्वादश्यामुषसि । "पञ्च पञ्च उषःकालः सप्तपञ्चारुणोदयः" इत्युक्तोषःकाल एव । द्वे प्रातर्माध्याह्निकक्रिये प्रातःकाले कर्तव्योषःस्नानसन्ध्यावन्दनोपासनादिक्रियाः । तथा मध्याह्ने देवतार्चनवैश्वदेवादिक्रियाश्चेति द्वे क्रियासमुदाये कर्तव्ये । ते कुतः कर्तव्ये इत्यत आह— **भुजेरिति** ।। भुजेः स्नानसन्ध्यावन्दनमाध्याह्निक-देवतार्चनवैश्वदेवाद्यनन्तरं क्रियमाणस्य भोजनस्य यदापकर्षः प्रातःकाले द्वादश्यामेव कर्तव्यत्वेनापकर्षः । तदन्तस्तन्मध्य एव द्वादश्यामेव न्यायतः अङ्गकर्मणां प्रधानकर्माधीनत्वादिति न्यायाद्भवेत् । तदानीमेव तदर्थं कर्माणि कर्तव्यानीति भावः ।।

**कर्तुं सान्ध्यं यदा नालं द्वादश्यद्भिस्तु पारयेत् ।**
**क्रतावल्पाशिवत्पश्चाद्भुञ्जीतेत्यपरे जगुः ।।**

**स्मृ.कृष्णाचार्य**—ननु व्याध्याद्यातुरादीनां प्रातःकाल एव स्नानसन्ध्यादिकं कर्तुं यदा सामर्थ्यं नालं तदा तेषां पारणं कथमित्यत आह— **कर्तुं सान्ध्यमिति** ।। सान्ध्यं सन्ध्यावन्दनादिकर्मजातं कर्तुं यदा अशक्तानां नालं सामर्थ्यं नास्ति ।

तदानीमपि द्वादशी द्वादश्यामेव मन्त्रस्नानादिकं कृत्वा अद्भिरुदकैः पारयेत् । उदकपारणं कुर्यात् । ततो मध्याह्नात्पश्चात्काले स्वविहितं कर्म कृत्वा भुञ्जीत भोजनं कुर्यात् । तत्र दृष्टान्तः ।। **क्रताविति** ।। क्रतौ यज्ञविशेषे अल्पाशिवदन्न-भोजनरहितोदकाशियाज्ञिकपुरुषवत् । यज्ञे तत्काले भोजनं विहाय कालान्तर-भोजनकर्तृवत् । ननु मुख्यकाले भोजनं विना अन्यकाले भोजनं निषिद्धं कथं कार्यमित्यत उक्तम् । **अपरे जगुरिति** ।। अस्य कल्पस्य अमुख्यत्वादिति अभिप्रायेणोक्तम् ।। **अपरे जगुरिति** ।। केचित्पक्ष इत्यर्थः । तथाचाशक्तानामपि उदकपारणममुख्यमित्युक्तं भवति ।।

**कृष्णामृतमहार्णवः**

**अशितानशिता यस्मादापो विद्वद्भिरीरिताः ।**
**अम्भसो केवलेनैव करिष्ये व्रतपारणम् ।।**
**तद्वरिष्ठं मुनिप्रोक्तं अशितानशितञ्च यत् ।। १६९ ।।**

**ताम्रपर्णी**—कथं न दुष्यतीत्याशंकां परिहरन्नुदकपारणमन्त्रमाह— **अशितेति** ।। यस्मादापःअशितानशिताः अशिता अप्यनशितप्राया इत्यर्थः । विद्वद्भिरम्बरीषादिभिरीरिताः । अथ तस्मात्केवलेनाम्भसा व्रताङ्गपारणं करिष्य इत्यर्थः । तथाच भागवतेऽम्बरीषवाक्यम्—

आहुरप्भक्षणं विप्रा अशितं नाशितं च यत् ।
अम्भसा केवलेनाथ करिष्ये व्रतपारणम् ।। इति ।।

अशितानशिता यस्मादिति स्वोदाहतवचनं यदा पुराणान्तरे अम्बरीषवचनमिति भाति । तदा विद्वद्भिरित्यस्य नाम्बरीषाद्यैरित्यर्थः । किन्तु वसिष्ठवामदेवादिभिर्विप्रैरित्यर्थः । ननु कलामात्रद्वादश्यां पारणे उदयमारभ्य मध्याह्नविहितक्रियालोपः स्यादितीयमाशंका—

यदा तु द्वादशी स्वल्पा निशीथादूर्ध्वमेव तु ।
आमध्याह्नाः क्रियास्सर्वाः कर्तव्याश्शम्भुशासनात् ।।

इति वचनान्तरेण परिहर्तव्या । इदं च वचनं सत्यमेवेति केचित् ।। १६९ ।।

**उमर्जी—**पुनर्भोजने दोषः कुतो नेत्यत आह— **अशितानशिता इति** ।।अशिताः पारणफलहेतुत्वेन भुक्तप्रायाः । अनशिताः पुनर्भोजनदोषानापादकत्वेनाभुक्तप्रायाः। केवलेन पदार्थान्तरामिश्रितेन । करिष्य इति संकल्पविधिः ।

पत्नी पतिव्रता या स्यात्पराधीनोऽपि यो नरः ।
स तीर्थपारणं कृत्वा पश्चाद्भुक्त्वा फलं लभेत् ।।
ब्राह्मणादीन् भोजयित्वा तीर्थं प्राश्य स्वयं सुधीः ।
पश्चाद्भुञ्जन् फलं याति नात्र कार्या विचारणा ।। इति ।।

तदा व्रतस्यामुख्यत्वशंकां परिहरति— **तदिति** ।। यदुदकपारणं तत् तस्माद्वरिष्ठम्। श्रेष्ठमिति मुनिप्रोक्तम् । दशम्यादिदिनत्रये संकल्पवचनानि।

दशमेऽहनि सम्प्राप्ते व्रतस्थोऽहं जनार्दन ।
त्रिदिनं देवदेवेश निर्विघ्नं कुरु केशव ।।
प्रसीद सुमुखो भूत्वा ज्ञानदृष्टिप्रदो भव ।
अद्य मे द्वादशी पुण्या पवित्रा पापनाशनी ।।
पारणं च करिष्यामि प्रसीद गरुडध्वज ।। इति ।।
अद्य स्थित्वा निराहारः श्वोभूते परमेश्वर ।
भोक्ष्यामि पुण्डरीकाक्ष अस्मिन्नेकादशीव्रते ।।
एकादश्युपवासेन द्वादश्यां पारणेन च ।
यदर्जितं मया पुण्यं तेन प्रीणातु केशवः।।

—इति पञ्चसंस्कारसंग्रहे ।। १६९ ।।

**उपेन्द्र—**तत्र युक्तिं वदन्नुदकपारणप्रकारमाह— **अशिता इति** ।। अशिताः व्रतसमाप्तिहेतुत्वेन भुक्तप्रायाः, अनशिताः भोजनादूषकत्वेनाभुक्तप्रायाः, यस्मात्तस्मात्केवलेनाम्भसैव व्रतपारणं करिष्य इति सम्बन्धः । तदुक्तम्—

पत्नी पतिव्रता या स्यात्पराधीनोऽपि यो नरः ।
स तीर्थपारणं कृत्वा पश्चाद्भुक्त्वा फलं लभेत् ।। इति ।।

व्रतस्यामुख्यत्वशंकां परिहरति— **तदिति** ।। यदुदकपारणं तत् तस्माद्वरिष्टं इति वचनं मुनिभिः प्रोक्तम् ।

दशम्यादिदिनत्रये संकल्पवचनानि—

दशमेऽहनि सम्प्राप्ते व्रतस्थोऽहं जनार्दन ।
त्रिदिनं देवदेवेश निर्विघ्नं कुरु केशव ।।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ।
प्रसीद सुमुखो भूत्वा ज्ञानदृष्टिप्रदो भव ।
अद्य मे द्वादशी पुण्या पवित्रा पापनाशनी ।
पारणं च करिष्यामि प्रसीद गरुडध्वज ।।

पञ्चसंस्कारसंग्रहे इति । साधने प्राप्ते क्रियाकरणप्रकारवचनानि—

चतुर्यामास्तु यामिन्याः तत्राद्यौ सन्त्यजेद्बुधः ।
यामे तृतीये स्नात्वा तु नित्यकर्माणि कारयेत् ।
यदा सूर्योदयात्पूर्वं घटिका चावशिष्यते ।
स वै सूर्योदयो नाम मुनिभिः परिकीर्तितः ।।
तत्पूर्वघटिकैका तु प्रातःकाल इतीरितः ।
माध्याह्निकं ततः कुर्याद्धोमं सूर्योदये तथा ।।
वैश्वदेवं ततः कृत्वा ब्रह्मयज्ञं च तर्पणम् ।
आपोशनं विधायैव प्रतीक्षेद्द्विवदर्शनम् ।
साधनीया प्रयत्नेन चेतसा साधनी ततः ।। इति ।। १६९ ।।

**कोनेरी**—इममेवार्थं अम्बरीषवचनेन दृढयति— **अम्भस इति** ।। केवलेन मुख्येनाम्भसा तीर्थोदकेन व्रतपारणं करिष्ये । यदशितानशितं तत्तीर्थपारणं अत्युत्तममिति विशिष्टमुनिभिर्व्यासादिभिः प्रोक्तमिति ।। १६९ ।।

**स्मृ.कृष्णाचार्य**—अशक्तानामुदकपारणं कर्तव्यमित्युक्तं । तत्रोदकप्राशनमन्त्रः कः इत्यपेक्षायामाह स एव— **अशितानशिता इति** ।। आपः अशिताः भुक्तप्रायाः। अनशिताः उपोषितप्रायाः । विद्वद्भिर्यस्मादुदीरिताः अभिहितास्तस्मात् केवलेनाम्भसा द्रव्यान्तरं परित्यज्य उदकेनैव व्रतपारणं एकादशीव्रताङ्गवद्द्वादशीपारणं करिष्ये कुर्याम् इति मन्त्रेण अद्भिरशक्तः पारणं कुर्यादित्यर्थः ।। १६९ ।।

### कृष्णामृतमहार्णवः

**[४२]न काशी न गया गङ्गा न [१]रेवा नच [२]पुष्करम् ।**
**नचापि कौरवं क्षेत्रं तुल्यं भूप हरेर्दिनात् ।। १७० ।।**

**ताम्रपर्णी**—नन्वेकादश्युपवासस्यावश्यकत्वे वाराणस्यादिक्षेत्रतीर्थयात्राविलोपः स्यात् । मध्ये व्याधिचोराद्युपद्रववशेन गन्तव्यस्य दूरमार्गस्य यत्किञ्चिद्भक्षणेन विनाऽयोगात् अश्वमेधादियागवैश्वदेवादिकर्मविधिलोपश्च स्यादिति चेन्न । उपवासविधेर्देवानप्यधिकृत्य प्रवृत्तत्वात् । तदुक्तं विष्णुतीर्थीये—

रुद्रोऽपि सर्वदेवानामात्मनस्सर्वदेहिनाम् ।
एकादश्युपवासं च कर्तव्यत्वेन शंसति ।। इति ।।

किञ्च एकादश्युपोषणे "मृताहः समतिक्रम्य चण्डालः कोटिजन्मसु" इत्यादिविहितश्राद्धादिविधिलोपः स्यादित्याशंकां परिहर्तुं एकादश्युपवासस्यावश्यकत्वे श्रुत्यर्थवादमाह— **न काशीत्यारभ्य भास्कररिरित्यन्तैः सप्तभिः श्लोकैः** ।। गौतमी गोदावरी । तथाच उपवासाविरोधेनैव तीर्थाटनं कार्यं तद्विरोधे तत्त्याग एव कार्य इति भावः ।। १७० ।।

**उमर्जी**—एवं अनुष्ठितैकादश्याः सर्वस्मादुत्तमत्वमाह— **न काशीत्यादिना** ।। तुल्यं नेति नञः प्रत्येकमन्वयः ।। १७० ।।

**उपेन्द्र**—विष्णुव्रतत्वादेकादश्युपवासस्य तीर्थक्षेत्राधिकफलत्वं सर्वपापनिवर्तकत्वेन पापपरिहारकत्वं बहुप्रमाणैरुपपादयति— **न काशीत्यादिना** ।। तुल्यं न इतिप्रत्येकमन्वयः ।। १७० ।।

**कोनेरी**—अल्पाधिकारिणां प्रवृत्तिजननार्थं एकादश्युपवासस्य सर्वाधिक्यमाह— **न काशीति** ।। हे भूप ! युधिष्ठिर ! काशीगयापुष्करकुरुक्षेत्रादिक्षेत्राणि गङ्गा-

---

१. 'वेणी' इति क्वचित् पाठः ।
२. 'गौतमी' इति कोनेरी पाठः ।

४२. न गङ्गा न गया वैश्य न काशी नच पुष्करम् ।
नचाऽपि वैष्णवं क्षेत्रं तुल्यं हरिदिनेन तु ।। पाद्मे ३-३१.१६२ ।।

रेवाद्या नद्यश्च हरेर्दिनात् । पञ्चमी षष्ठ्यर्थे हरिदिनस्यैकादश्याः तुल्याः समानाः न भवन्ति । इयमेकादशीप्रशंसा

न तथा मे प्रियतमः आत्मयोनिर्न शंकरः ।
नच संकर्षणो न श्रीर्नैवात्मा च यथा भवान् ।। इति ।।

एकादशचतुर्दशाध्याये श्रीकृष्णेन कृतोद्धवप्रशंसावदल्पाधिकारिणामेकादश्युपवासस्य कर्तव्यत्वे रुच्युत्पादनार्थमिति ज्ञेयम् ।। १७० ।।

**स्मृ.कृष्णाचार्य**—एवमविद्धैकादश्यां उपोष्य द्वादश्यां पारणं कार्यम् । तत्र हरिवासश्चेद्धरिवासरघटिकानन्तरं पारणं कार्यम् । द्वादश्यां परदिने साधनद्वादश्यां पारणं कार्यम् । तथा श्रवणद्वादशीयोगे तथैवोपोष्य त्रयोदश्यां पारणं कर्तव्यम् । परमवैष्णवव्रतत्वात् इत्यभिप्रायेणाचार्यवर्यः उक्तार्थे प्रमाणान्युक्त्वा तत्र विश्वासजननाय एकादशीमाहात्म्यं प्रमाणैराह— **न काशीति** ।। काश्यादौ सर्वतीर्थेषु स्नानपानवासादिना बहुफलप्रदं काश्यादिकं हरिदिनाद्धरिदेवताकैकादशीदिनात्तुल्यं न । एकादश्युपवासफलेन तुल्यं समं न भवतीत्यर्थः । तथा सर्वतीर्थाद्यपेक्षया अधिकफलत्वादेकादशीव्रतं महदित्युक्तं भवति ।। १७० ।।

**कृष्णामृतमहार्णवः**

***अश्वमेधसहस्राणि वाजपेयशतानि च ।**
**एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ।। १७१ ।।**

**ताम्रपर्णी**—द्वितीयश्लोके वाजपेयेति वैश्वदेवादेरुपलक्षणम् ।। १७१ ।।

**उमर्जी**—एकादश्युपवासस्य । उप भगवत्समीपे जागरणादिना वासः । तदुक्तम्—

कन्यासहस्रं विधिवद्ददाति रत्नैरलंकृत्य सुवर्णतश्च ।
गवां सहस्रं कुरुजाङ्गलेश्च तेषां फलं जागरणेन विष्णोः ।।
—इति स्कान्दे ।। १७१ ।।

**उपेन्द्र**—एकादश्युपवासस्य उपवासजन्यपुण्यस्येत्यर्थः ।। १७१ ।।

* अयं श्लोकः नारदपुराणे १-१-१३ ।

**कोनेरी**—उक्तार्थदाढर्यार्थं अल्पाधिकारिभिरवश्यकरणार्थं चाश्वमेधसहस्राणीत्यारभ्य "न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासर" इत्यन्तेन बहुभिः श्लोकैः पुनरप्येकादश्युपवासप्रशंसां आपादयति— **अश्वमेधसहस्राणीति** ।। अल्पज्ञैराचरितानि अश्वमेधसहस्राणि वाजपेयशतानि च यानि फलानि दद्युः । तानि फलानि उत्तमेन्द्रादिभिः क्रियमाणैकादश्युपवासस्य षोडशीं कलां नार्हन्तीत्यन्वयः । इन्द्रादिदेवैरपि भगवदाज्ञया भक्तानुकरणार्थं एकादश्युपवासस्य क्रियमाणत्वात् ।।१७१।।

**स्मृ.कृष्णाचार्य**—अत्रैव वचनान्तरम् ।। **अश्वमेधेति** ।। अश्वमेधसहस्राणि विधिना कृताः सहस्राश्वमेधयज्ञाः । वाजपेयशतानि शतवाजपेययज्ञाश्च एकादश्युपवासस्य विध्युक्तप्रकारेण कृतैकादश्युपवासस्य कलां षोडशीं षोडशकलामध्ये एकामपि कलां नार्हन्ति तत्फलदाने न समर्था इत्यर्थः ।। १७१ ।।

**कृष्णामृतमहार्णवः**

***एकादशीसमुत्थेन वह्निना पातकेन्धनम् ।**
**भस्मीभवति राजेन्द्र अपि जन्मशतोद्भवम् ।। १७२ ।।**

**ताम्रपर्णी**—तृतीयश्लोके एकादशीसमुत्थेन पुण्याख्यवह्निना जन्मशतोद्भवमपि पातकलक्षणमिन्धनं भस्मीभवतीत्यर्थः ।। १७२ ।।

**उमर्जी**—एकादश्याः पापनिवर्तकत्वं अनुभवसिद्धमित्युपपादयति— **एकादशीसमुत्थेनेति**।। राजेन्द्रेति मान्धातृसम्बोधनम् । एकादश्युत्पन्नेन पुण्याख्यवह्निना ।। १७२ ।।

**उमर्जी**—कलार्धद्वादश्यां सकलनित्यनैमित्तिकादिक्रियाकरणप्रकारमाह— **कलार्धेति** ।। अत्र कलार्धः न सूर्यसिद्धान्तेन । किन्तु आर्यभटेनैव । अत एव दृष्टेत्युक्तम् । दैवज्ञैः शास्त्रतः सम्यक् विचार्य ज्ञात्वेत्यर्थः । वासरे ।

चतुर्यामस्तु यामिन्यास्तत्राद्यौ सन्त्यजेद्बुधः ।
यामे तृतीये स्नात्वा तु नित्यकर्माणि कारयेत् ।।
यदा सूर्योदयात्पर्वं घटिका चावशिष्यते ।

---

*अयं श्लोकः नारदपुराणे १-१-१० ।

स वै सूर्योदयो नाम मुनिभिः परिकीर्तितः ।।
तत्पूर्वं घटिकैका तु प्रातःकाल इतीरितः ।
माध्याह्निकं तदा कुर्याद्धोमं सूर्योदये तथा ।।
वैश्वदेवं ततः कृत्वा ब्रह्मयज्ञं च तर्पणम् ।
सर्वं समाप्य नित्यादि कर्म कृत्वा यथाविधि ।
परिवेषं ततः कृत्वा परिषेचनमप्युत ।
आपोशनं करे कृत्वा प्रतीक्षेद्रविदर्शनम् ।
शोधनीया प्रयत्नेन यतः सा साधनी तव ।। इति ।। १७२ ।।

**उपेन्द्र**—एकादशीसमुत्थेन एकादशीव्रतजन्येन पुण्याख्यवह्निना जन्मशतोद्भव-मपीत्यन्वयः। पातकेन्धनं पातकाख्यकाष्ठम् ।। १७२ ।।

**कोनेरी**—हे राजेन्द्र! धर्मराज! एकादश्युपवासजन्यपुण्यरूपवह्निना जन्मकोटि-समुद्भवमपि पातकेन्धनं पापाख्यकाष्ठनिचयं भस्मीभवति ।। १७२ ।।

**स्मृ.कृष्णाचार्य**—शतजन्मार्जितपापविनाशकत्वादेकादशीसमं व्रतं नास्तीत्यत्र दृष्टान्तमाह स एव— **एकादशीति** ।। यथा वह्निना अग्निना । इन्धनं वने स्थितमिन्धनं काष्ठजातं काष्ठसमुदायो भस्मीभवति । तथा एकादशीसमुत्थेन पुण्यरूपवह्निना जन्मशतोद्भवमपि शतजन्मसु कृतं नानाविधपातकरूपमिन्धनं भस्मीभवति । राजेन्द्रेति तस्यैव सम्बोधनम् । तथाच विध्युक्तैकादशीव्रतकरणस्य शतजन्मार्जितपापनिवर्तकत्वात्तस्य महामाहात्म्यमिति भावः ।। १७२ ।।

कृष्णामृतमहार्णवः

***नेदृशं पावनं किञ्चिन्नराणां भुवि विद्यते ।**
**यादृशं पद्मनाभस्य दिनं पातकहानिदम् ।। १७३ ।।**

**ताम्रपर्णी**—नन्वेकादश्युपवासेन शतजन्मार्जितपापहानिलाभे तत्र श्राद्धाकरणे कोटिजन्मसु चाण्डालयोनिप्राप्त्या सार्थादपि तस्करा बहव इति न्यायविषय इत्यत-श्चतुर्थश्लोकः ।। **नेदृशं पावनमिति** ।। पद्मनाभस्य दिनं यादृशं पुण्यं पावनं

---

*अयं श्लोकः नारदपुराणे २-१-११ ।

पुण्यवृद्ध्या पवित्रकरं पातकनाशनं च नेदृशं पावनं पुण्यप्रदं पातकनाशनं चेत्यन्वयः । मृताहातिक्रमवाक्यं तु सूतकमध्ये प्राप्तस्य श्राद्धस्य सूतकान्ते विधानेन सूतके मृताहत्याग एव यथा न भवति तथैकादशीश्राद्धस्य द्वादश्यां विहितत्वेन मृताहपरित्याग एव न भवतीत्यविरुद्धम् ।। १७३ ।।

**उमर्जी**—अन्वयव्यतिरेकाभ्यामस्यैव पापनिवर्तकत्वं नान्यस्येत्याह— **नेदृशमित्यादिना**।। भुवि विद्यमानं नाराणां यादृशं पातकहानिदं ईदृशं एतादृशं पावनं पवित्रकरमन्यत्किञ्चन नेत्यन्वयः ।। १७३ ।।

**उपेन्द्र**—अन्वयव्यतिरेकाभ्यामस्यैव पापनिवर्तकत्वमाह— **नेदृशमिति** ।। भुवि विद्यमाननराणां यादृशं यथा पातकहानिदं ईदृशं तथा पावनकरं किञ्चिन्नास्तीति सम्बन्धः । एकादशीव्रतस्य चेदृशं पापनिवर्तकत्वसामर्थ्यं तादृशसामर्थ्योपेतमन्यत् नास्तीत्यर्थः ।। १७३ ।।

---

४३. पुण्यार्द्धिणर्गार्दनादन्यन्नोपोष्यं वैष्णवैः सदा ।
तथा भागवतादन्यो नार्चनीयो हि कुत्रचित् ।। वृद्धहारीतस्मृतौ ७-३०५ ।।
शिवव्रतसहस्रैस्तु सौरैर्ब्राह्मैश्च कोटिभिः ।
यत्फलं कविभिः प्रोक्तं वासरैकेन तद्धरेः ।। स्कान्दे २-५-११-१९ ।।
दशम्याञ्चैव नक्तञ्च एकादश्यामुपोषणम् ।
द्वादश्यामेकभुक्तं च अखण्डा इति कथ्यते ।। २३ ।।
असकृज्जलपानं च हिंसाऽशौचमसत्यता ।
ताम्बूलं दन्तकाष्ठं च दिवाशयनमैथुने ।। २६ ।।
द्यूतक्रीडा निशिस्वापः पतितैः सह भाषणम् ।
एकादश्यां दशैतानि विष्णुभक्तस्तु वर्जयेत् ।। २७ ।। स्कान्दे २-५-१२ ।।
मध्याह्ने लघुभोजी यो दशम्यां स हरिप्रियः ।
मध्याह्नादूर्ध्वभोजी यो मध्यमः स तु कीर्तितः ।।
तृतीययामभोजी यः सोऽधमः परिकीर्तितः ।
सायंकाले दशम्यां यो भुङ्क्ते स व्रतहानिमान् ।।
दशम्यां रात्रिभोजी यो बहुज्ञोऽपि तु नारकी ।
दिनत्रयात्मकं ह्येतद्व्रतं मुक्त्यादिदायकम् ।। निर्णयरत्नोदाहृतस्कान्दवचनम् ।।
उपवासदिने यस्तु दन्तधावनकृन्नरः ।
स घोरं नरकं याति व्याघ्रभक्षश्चतुर्युगम् ।। ३३ ।। वाधूलस्मृतौ ।।

**कोनेरी**—पद्मनाभदिनं एकादशी यादृशं यथा नराणां पातकहानिदं पातकनाशकरं ईदृशं नराणां पावनं पवित्रकरं किञ्चिद्वस्तु भुवि न विद्यते ।। १७३ ।।

**स्मृ.कृष्णाचार्य**—ननु ग्रहणादिषु पुण्यतीर्थेषु विद्यमानेषु सत्सु एकादश्याः आधिक्यं कुत इत्यत तस्याः महापातकादिनाशकत्वात्तत्समं नास्तीत्याह— **नेदृशमिति** ।। जम्बूद्वीपे कर्मभूमौ सत्कर्मकर्तृणां नराणां यादृशं पद्मनाभस्य हरेर्दिनं एकादशीदिनं पातकहानिदं पञ्चमहापातकादिनाशकम् । ईदृशं महापातकहानिप्रदं पावनं परमपावित्र्यप्रदं किञ्चिन्न विद्यते किञ्चिदपि नास्ति । अतस्तस्यैवोत्तमत्वादाधिक्यमिति भावः ।। १७३ ।।

**कृष्णामृतमहार्णवः**

***तावत्पापानि देहेऽस्मिन्तिष्ठन्ति मनुजाधिप ।**
**यावन्नोपोषयेज्जन्तुः पद्मनाभदिनं शुभम् ।। १७४ ।।**

**ताम्रपर्णी**—पापनाशकत्वमेव प्रपञ्च्यते— **तावदिति पञ्चमषष्ठाभ्याम्** ।।१७४।।

**उमर्जी**—जन्तुः जीवः अधिकारी । यावत् यावत्कालं नोपोषयेत् । तावत्कालं देहे देहयुक्ते अस्मिन्नधिकारिणि पापानि तिष्ठन्तीत्यन्वयः ।। १७४ ।।

**उपेन्द्र**—जन्तुर्जीवः अधिकारीति यावत् । यावत्कालं नोपोषयेदुपासं न कुर्यात् । तावत्तावत्कालं देहे देहयुक्ते अस्मिन्नधिकारिणि पापानि तिष्ठन्तीत्यन्वयः ।।१७४।।

**कोनेरी**—जन्तुः नरः शुभे पद्मनाभदिने प्राप्ते सति यावन्नोपोषयेत् । तावत् तावत्कालपर्यन्तं अस्मिन्देहे पापानि तिष्ठन्ति । उपोषणे कृते नश्यन्ति । मनुजाधिपेति सम्बोधनम् ।। १७४ ।।

**स्मृ.कृष्णाचार्य**—ननु पुरुषैः क्रियमाणानां पापानामनन्तत्वात्कथमेकादश्युपवासस्य पुण्यफलप्रदत्वमित्यत आह— **तावदिति** ।। जन्तुर्नानाविधपापकृज्जीवः यावन्नोपोषयेद्यावत्कालपर्यन्तं शुभं पद्मनाभदिनं पद्मनाभस्य हरेर्दिनं नोपोषयेत्तन्माहात्म्यमविज्ञायोपवासनं न कुर्यात्तावत्कालपर्यन्तं अस्मिन्देहे पापानि तिष्ठन्ति। मनुजाधिपेति सम्बोधनम् । तथाच एकादशीव्रतकरणपर्यन्तमेवाधिकारिणां

---

* अयं श्लोकः नारदपुराणे २-१-१२ ।

नानाविधपापानि तिष्ठन्ति तत्करणे तु अस्य सर्वाणि पापानि नश्यन्तीति भावः ।। १७४ ।।

कृष्णामृतमहार्णवः

*एकादशेन्द्रियैः पापं यत्कृतं भवति प्रभो ।
एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् ।। १७५ ।।

**उमर्जी**—एकादश्याः पापनिवर्तकत्वप्रकारमाह— **एकादशेन्द्रियैरिति** ।। एकादशेन्द्रियैः एकादश्युपवासेन एकादश्यां उप भगवत्समीपे वासेन भगवद्विषयीकरणेनेत्यर्थः । तदुक्तम्—

उपावृतस्य पापेभ्यो यस्तु वासो गुणैस्सह ।
उपवासः स विज्ञेयः न शरीरस्य शोषणम् ।। इति स्कान्दे ।।

प्रभो इति मान्धातृसम्बोधनम् ।। १७५ ।।

**उपेन्द्र**—एकादश्याः पापनिवर्तकत्वप्रकारमाह— **एकादशेन्द्रियैरिति** ।। एकादश्युपवासेन एकादश्यामेकादशेन्द्रियैरुप भगवत्समीपे वासेन जागरणादिना इत्यर्थः। तदुक्तम्—

कन्यासहस्रं विधिवद्ददाति रत्नैरलंकृत्य सुवर्णतश्च ।
गवां सहस्रं कुरुजाङ्गले च तेषां फलं जागरणेन विष्णोः ।इति स्कान्दे।।
उपावृतस्य पापेभ्यो यस्तु वासो गुणैस्सह ।
उपवासः स विज्ञेयो न शरीरस्य शोषणम् ।। इति ।। १७५ ।।

**कोनेरी**—एकादश्युपवासेनेन्द्रियशुद्धिद्वारा मनोनैर्मल्यमाप्नोतीत्याह— **एकादशेन्द्रियैरिति** ।। एकादशेन्द्रियैः निरन्तरं यत्पापं कृतं भवति । तत्सर्वं एकादश्युपवासेन विलयं नाशं व्रजेत् गच्छति । हे प्रभो! तस्मादेकादशीसमं पापनाशकं अन्यद्वस्तु न विद्यते ।। १७५ ।।

**स्मृ.कृष्णाचार्य**—एकादश्याः एकादशेन्द्रियैः क्रियमाणपापनिवर्तकत्वात्तस्याधिक्यमित्याह— **एकादशेति** ।। एकादशेन्द्रियैश्चक्षुरादिपञ्चज्ञानेन्द्रियैः वागादिपञ्च-

---

* अयं श्लोकः नारदपुराणे २-१-१४ ।

कर्मेन्द्रियैः मनोरूपेन्द्रियेण अनेन पुरुषेण यद्दुर्विषयदर्शनस्पर्शनध्यानादिकं कृतं भवति तत्सर्वपापमेकादश्युपवासेन सम्यक्कृतेन विलयं व्रजेत् नाशं याति । तस्माद-स्याधिक्यमित्यर्थः ।। १७५ ।।

**कृष्णामृतमहार्णवः**

***एकादशीसमं किञ्चित् [1]पवित्रं नहि विद्यते ।**
**व्याजेनापि कृता राजन्न दर्शयति भास्करिम् ।। १७६ ।।**

**ताम्रपर्णी**—तदेव कैमुत्येनोच्यते सप्तमेन— **एकादशीति** ।। व्याजेन दारादि-व्याजेन दम्भव्याजेन वा । भास्करिं यमम् ।। १७६ ।।

**उमर्जी**—उपसंहरति— **एकादशीसममिति** ।। पापत्राणं पापाद्रक्षकम् । व्याजेनापि कार्यान्तरोद्देशेनापि । कृतं विधिवदनुष्ठितम् । राजन्निति मान्धातारं प्रति वसिष्ठसम्बोधनम् ।। १७६ ।।

**उपेन्द्र**—नराणामनिष्टनिवर्तकमिदमेवेत्याह— **एकादशीसममिति** ।। पापत्राणं पापाद्रक्षकम् । व्याजेन कार्यान्तरोद्देशेनाऽपि । यथाशास्त्रमित्यर्थः ।। १७६ ।।

**कोनेरी**—हे राजन्! व्याजेनापि सत्सङ्गतिव्याजेनापि कृता उपोषिता एकादशी भास्करिं यमं न दर्शयति यमलोकं न प्रापयति ।। १७६ ।।

**स्मृ.कृष्णाचार्य**—एकादश्याः परमपावित्र्येण एकादशीव्रतानुष्ठातॄणां यमदर्शन-नरकादिपरिहारकत्वात्तद्व्रतं महदित्याह— **एकादशीति** ।। हे राजन् । व्याजेनापि केनचित्रिमित्तेनापि कृता अनुष्ठिता एकादशी भास्करिं यमं न दर्शयति यममार्गं न दर्शयति । तस्मादेकादशीसमं किञ्चिदपि व्रतजातं न विद्यते । तत्कुत इत्यत उक्तम् ।। **पवित्रमिति** ।। पापत्राणमिति पाठे स एवार्थः । तथाच परमपवित्रत्वेन यमदर्शनादिपरिहारकत्वात्तस्याधिक्यमिति भावः ।। तस्मात्सर्वव्रताद्यपेक्षया-ऽधिकफलप्रदत्वेन महत्त्वात् एकादशीव्रतं सर्वैरनुष्ठेयमिति तात्पर्यमिति ।। १७६ ।।

---

* अयं श्लोकः नारदपुराणे २-१-१५ ।

१. 'पापत्राणं न विद्यते' इति उम. तथा उपे. पाठः ।

## कृष्णामृतमहार्णवः

व्यासः—

**स ब्रह्महा स गोघ्नश्च स स्तेनो गुरुतल्पगः ।**
**एकादश्यां तु भुञ्जानः पक्षयोरुभयोरपि ।। १७७ ।।**

**ताम्रपर्णी**—एकादशीभोजने निन्दार्थवादमाह— **स ब्रह्महेत्यादिभिर्हरिवासर इत्यन्तैश्चतुर्भिः** ।। गुरुतल्पगः गुरुदारगः । तल्पं शय्यादारेष्वित्यभिधानात् । ब्रह्महा इत्यादौ ब्रह्महत्यादिना यत्पापं तत्पापभागित्यर्थः ।। १७७ ।।

**उमर्जी**—एवं एकादशीव्रतस्य बहुप्रमाणैरवश्यकर्तव्यत्वमुपपाद्य अकरणे प्रत्यवायप्रतिपादकव्यासवाक्यानि पठति— **स इत्यादिना** ।। तुशब्द एवार्थे । यो भुञ्जानः स एव ब्रह्महा ब्राह्मणहन्ता । स एव गोघ्नश्च ।। १७७ ।।

**उपेन्द्र**—एवमेकादशीव्रतस्य कर्तव्यत्वं बहुप्रमाणैरुपपाद्याकरणे प्रत्यवायप्रतिपादकव्यासवाक्यानि पठति— **स इत्यादिना** ।। तुशब्द एवार्थे स एवेत्यन्वयः । ब्रह्माणं हन्तीति ब्रह्महा । स्तेनः स्वर्णतस्करः । एकादश्यन्नभोजनं ब्रह्महत्यादिपापसाधनमित्यर्थः ।। १७७ ।।

**कोनेरी**—एवं भवभवानीसंवादेनाम्बरीषसंवादं रुक्माङ्गदवचनं चोक्त्वा इदानीमकरणे प्रत्यवायमाह— **व्यास इति** ।। उभयोः पक्षयोः शुक्लकृष्णपक्षयोर्विद्यमानायामेकादश्यां न भुञ्जीत । यः भुञ्जीत स एव ब्रह्महत्यादिपञ्चमहापातकवान् भवति । तस्मादन्यो महापातकी न भवति ।। १७७ ।।

**स्मृ.कृष्णाचार्य**—एवं उपवासकर्तृणां विश्वासजननाय एकादशीमाहात्म्यं प्रमाणैरुक्त्वा सर्वथा सर्वैस्तत्रोपवासः कर्तव्य इत्युक्तम् । तादृशैकादश्यां भोजने दोषमाह व्यासः ।। **स ब्रह्महेत्यादिना** ।। उभयोः पक्षयोरपि शुक्लकृष्णपक्षयोरपि एकादशीव्रतमकृत्वा तत्र भुञ्जानः यः स ब्रह्मगोहत्यास्वर्णस्तेयगुरुतल्पादिमहापातककृत् । तस्मात्तत्र न भोक्तव्यमिति भावः ।। १७७ ।।

**कृष्णामृतमहार्णवः**

**वरं स्वमातृगमनं वरं गोमांसभक्षणम् ।**
**वरं हत्या सुरापानमेकादश्यन्नभोजनात् ।। १७८ ।।**

**ताम्रपर्णी**—न केवलं तत्पापभाक् । किन्तु ततोऽधिकपापानामप्येकादश्यन्न-भक्षणपापादल्पत्वमित्याह— **वरमिति** ।। हत्येति सामान्यवचनाद् ब्रह्मस्त्री-भ्रूणगुरुहत्यानां ग्रहणम् ।। १७८ ।।

**उमर्जी**—अशेषपापं स्वमातृगमनादिकं पुरुषस्य वरम् ।। १७८ ।।

**उपेन्द्र**—एकादश्यन्नभोजनात् व्रतानुष्ठानयोग्यैकादश्यन्नभोजनाद्वरं पुरुषस्य अल्प-दुःखसाधनत्वादिति ।। १७८ ।।

**कोनेरी**—अन्यपापेभ्यो एकादशीभोजनजन्यपापस्यैव वरिष्ठपापत्वमित्याह— **वरमिति** ।। एकादश्यन्नभोजनात् स्वमातृगमनं गोमांसभक्षणं ब्रह्महत्या सुरापानादि-दोषाः । वरमित्यनेन एकादशीभोजनजन्यपापस्य तदपेक्षया आधिक्यमुक्तमिति ज्ञेयम् । अन्नपदग्रहणेन एकादश्यामशक्तस्य सकृज्जलपानादिकं न दोषायेति स्वोक्तं सूचितम् ।। १७८ ।।

**स्मृ.कृष्णाचार्य**—एकादश्यामन्नभोजनात्पापान्मातृगमनादिकमेव वरमिति प्रमा-णेनाह— **वरं स्वमातृगमनमित्यादिना** ।। एकादश्यन्नभोजनापेक्षया स्वमातृ-गमनादिकमेव वरं श्रेष्ठम् । अतस्तदपेक्षया एतेषां स्वल्पपापत्वात्तत्र कार्यमिति भावः ।। १७८ ।।

**कृष्णामृतमहार्णवः**

**[1,2]एकादशीदिने [1]पुण्ये [2]भुञ्जते ये नराधमाः ।**
**अवलोक्य मुखं तेषामादित्यमवलोकयेत् ।। १७९ ।।**

**ताम्रपर्णी**—नेदं बहुपापवचनमौपचारिकं तन्मुखावलोकितुरपि प्रायश्चित्त-विधानादिति भावेनाह— **एकादशीदिन इति** ।। १७९ ।।

---

१. 'प्रामे' इति क्वचित् पाठः ।

२ 'यजन्त' इति क्वचित पाठ ।

**उमर्जी**—ये भुञ्जते ते नराधमाः मुखावलोकनयोग्या न भवन्तीत्यर्थः । यदृच्छया-अवलोकने किं कार्यमित्यत उक्तम् ।। **अवलोक्येति** ।। यदृच्छयावलोकनप्रायश्चित्तार्थं सूर्यमवलोकयेत् ।। १७९ ।।

**उपेन्द्र**—ये भुञ्जते ते नराधमाः मुखावलोकनयोग्या न भवन्तीत्यर्थः । यदृच्छया अवलोकने किं कार्यमित्यतआह— **अवलोक्येति** ।। प्रायश्चित्तमिति शेषः ।।१७९ ।।

**कोनेरी**—उक्तमेव दाढ्यार्थं पुनराह— **एकादशीदिन इति** ।। पुण्ये पुण्यप्रदैकादशीदिने ये भुञ्जते ते नराधमाः तमोयोग्या इत्यर्थः । तेषां मुखमवलोक्य तदवलोकनपरिहारार्थं आदित्यं सूर्यं अवलोकयेत् । तेन तद्दोषपरिहारो भवतीति ज्ञेयम् ।। १७९ ।।

**स्मृ.कृष्णाचार्य**—एकादशीभोजिनां अतिपापिष्ठत्वेन तन्मुखमवलोक्य तत्पापपरिहारार्थं सूर्यावलोकनं कर्तव्यम् । अत एकादश्यां भोजनं न कार्यमिति तद्वाक्यमेव पठति— **एकादशीदिन इति** ।। एकादश्यां ये प्राणिनः भुञ्जते भोजनं कुर्वन्ति ते नराधमास्तमोयोग्याः । तत्कुत इत्यत उक्तम् ।। **पुण्ये इति** ।। महापुण्यप्रदत्वात्तेषामेकादशीभोजिनां मुखमवलोक्य अदित्यावलोकनं कार्यम् । तस्मादेकादश्यां न भोक्तव्यमिति भावः ।। १७९ ।।

### कृष्णामृतमहार्णवः

*** ४५ [1]पृथिव्यां यानि पापानि ब्रह्महत्यादिकानि च ।**
**अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ।। १८० ।।**

---

* अयं श्लोकः नारदपुराणे २-२२-८ । स्कान्दे २-४ ३३-३३ ।

१. 'यानि कानि च पापानि' इति ताम्र. पाठः ।

<u>४४.</u> ब्राह्मणः कामतोऽन्नं च यो भुङ्क्ते हरिवासरे ।
त्रैलोक्यजनितं पापं सोऽपि भुङ्क्ते न संशयः ।। ब्रह्मवैवर्ते १-२७-७ ।।
वासरे कमलाभर्तुश्चाश्नीयाद्यो नराधमः ।
पुरीषं सोऽश्नियाद्राजन्नरयं याति दारुणम् ।। पाद्मे ४ ९७-२० ।।

<u>४५.</u> एकादश्यां द्विजश्रेष्ठ भुक्तिमाश्रित्य केवलम् ।
बहूनि विविधान्येव तिष्ठन्ति दुरितानि च ।। ९२ ।।

**ताम्रपर्णी**—कथमेकादश्यन्नभोजने ब्रह्महत्यादिप्राप्तिरित्यत आह— **यानीति**।। यानि कानि च पापानि क्षुद्रपापानि उपपातकानि च ब्रह्महत्यादिपातकानि च । तदभिमानिनोऽसुराः अन्नमाश्रित्य तिष्ठन्ति । तद्भोजने तज्जन्याद्दष्टत एवाभिमानिनो भवन्तीति भावः । यद्वा दशमीविद्धैकादश्यां भोजनं न कार्यमित्युक्तम् । तत्रापि हरिवासरप्राप्तेः पूर्वमेव भोजनं कार्यम् । हरिवासरदशायां न किमपि भक्षणीयम् । तथा द्वादश्यां पारणं कार्यमित्युक्तम् । तदपि तत्र हरिवासरप्राप्तौ तदतिक्रमणानन्तरमेव कार्यम् । नतु तत्काल इति भावेन अन्नस्य तदानीमशुचित्वमाह— **यानीति** ।। हरिवासरलक्षणमेतद्वचनस्य तद्विषयत्वं चोक्तं विष्णुतीर्थीये—

> एकादश्याः प्रान्तभागो द्वादश्याः पूर्व एव च ।
> हरिवासरनामाऽसौ सर्वकालोत्तमः स्मृतः ।।
> ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
> तस्मिंस्तु भुञ्जतः पापान्येकस्थानि भवन्त्युत ।।
> यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
> अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे ।। इति ।।

एकादश्याः प्रान्त्यभागस्य हरिवासरत्वं यथा **दशमीषट्पञ्चाशद्धटिका तद्विद्धैकादशी** परदिने सार्धपञ्चपञ्चाशद्धटिका यदा गण्यते । तदा दशम्यां प्रविष्टघटिकाचतुष्टयेन साकं विद्धैकादशी । अर्धोनषष्ठिघटिका एकैकभागस्यांशोऽष्टमांशोनपञ्चदशघटिकाः पादत्रयस्य पादपादार्धोनपञ्चचत्वारिंशद्धटिकाः । तत्र दशम्यां घटिकाचतुष्टयं एकादश्यां विद्धायामुदयानन्तरं साष्टमांशार्धाधिकचत्वारिंशद्धटिकानन्तरं एकादश्याः प्रान्त्यपादप्रवेश इति न तदा जलपानमपि कार्यम् । एवं समक्षयकाले

---

४५. रोगिणश्च तथा खञ्जकाससोदरकुष्ठकाः ।
भवन्ति प्राणिनस्ते वै तस्यामन्नस्य भक्षणे ।। १४ ।। पाद्मे ४-१५ ।।
स केवल्मघं भुङ्क्ते सम्प्राप्ते हरिवासरे ।
तस्मात्सर्वप्रयत्नेन कुर्यादेकादशीव्रतम् ।। ३४ ।।
न कुर्याद्यदि मोहेन उपवासं नराधमः ।
नरके नियतं वासः पितृभिः सह तस्य वै ।। ३५ ।। स्कान्दे २-५-२ ।।

द्रष्टव्यम्। अतिक्षये तु दशमी ५३ । विद्धैकादशी ४८ । आहत्यैकादशी ५४ । एकैकस्य भागस्य १३ । भागत्रयस्य ४१ । दशम्यां गतघटिकाः ६ । विद्धैकादश्यां उदयानन्तरं ३५ । अर्धाधिकपञ्चत्रिंशद्घटिकानन्तरं एकादशीप्रान्त्य-पादप्रवेश इति यत्तदा किञ्चिद्भक्षणं न कार्यं जलं च न पेयमित्येवमुदाहरणान्तरं द्रष्टव्यम् । द्वादशीपूर्वभागस्य यथा एकादशी ४८ । द्वादशी ५३ । आहत्य द्वादशीघटिकाः । सार्धपञ्चषष्ठी । प्रथमपादस्य पादपादार्धाधिकषोडशघटिकाः । एकादश्यां गतघटिकाः १२ । उदयानन्तरं पादपादार्धाधिकघटिकाचतुष्टयानन्तरं पारणं कार्यम् । न तत्पूर्वम् । एववमुदाहरणान्तरं द्रष्टव्यम् ।। १८० ।।

**उमर्जी**—ननु अदनयोग्यान्नस्य कथं पापसाधनत्वमित्यत आह— **पृथिव्यामिति**।। विद्यमानजनानाम् । अपिशब्दः समुच्चये । यावन्त्यपि पापानि हरिवासरे सम्प्राप्ते व्रतकर्तृजनेषु स्थित्यसम्भवादाश्रयाकांक्षया अन्नमाश्रित्य उपजीव्यमाना-निष्टानां अन्नाश्रयत्वसम्भवात् । अदनयोग्यं पदार्थम् । "अद्यमानं तु यत्सर्वं तदन्नमभिधीयते" इति पञ्चरात्रोक्तेः ।। १८० ।।

**उपेन्द्र**—सर्वपापाधिकत्वे निमित्तमाह— **पृथिव्यामिति** ।। विद्यमानानि अन्ने अदनयोग्ये "अद्यमानं तु यत्सर्वं तदन्नमभिधीयते" इति पञ्चरात्रवचनात् ।।१८०।।

**कोनेरी**—अन्नस्वीकारे को दोष इत्यत आह— **पृथिव्यामिति** ।। पृथिव्यां यानि ब्रह्महत्यादिपातकानि सन्ति । तानि सर्वाण्यपि हरिवासरे प्राप्ते तद्दिने अन्न-माश्रित्य तिष्ठन्ति तस्माद्धरिदिने अन्नं भुञ्जानः सर्वपातकालयो भवति । तस्मान्न भोक्तव्यमिति ।। १८० ।।

**स्मृ.कृष्णाचार्य**—एकादश्यां भोज्यान्नस्य सर्वपापाश्रयत्वात्तद्दिने भोजनं निषिद्ध-मित्याह— **पृथिव्यामिति** ।। कर्मभूमिस्थजनेषु यानि ब्रह्महत्यादिकानि स्वर्णस्तेय-गुरुतल्पादीनि लोके अपरिमितानि पापानि तानि सर्वाणि भोक्तृणामन्नमाश्रित्य वर्तन्ते । तस्मादेकादश्यामन्नं निषिद्धमिति न भोक्तव्यमिति भावः ।। १८० ।।

## कृष्णामृतमहार्णवः

रुक्माङ्गदः—

* [४६]अष्टवर्षाधिको यस्तु यस्याशीतिर्न पूर्यते ।
**यो भुङ्क्ते मानवः पापो विष्णोरहनि चागते ।। १८१ ।।**

**ताम्रपर्णी**—एवमेकादश्युपवासस्य कर्तव्यत्वस्तुतिनिन्दालक्षणार्थवादमुक्त्वा पुराकल्पपरकृतिलक्षणमर्थवादं वदन् वृद्धबालयोः कथमुपवासः अशक्ये विध्यनुपपत्तेरित्याशंकां परिहरति— **अष्टवर्षाधिक इति** ।। यस्तु य एवाष्टवर्षाधिकवयोयुक्तः यस्य चाशीतिर्न पूर्यते स मानवः । यदि विष्णोरहन्यागते भुङ्क्ते । तर्हि पापी भवतीत्यन्वयः ।। १८१ ।।

**उमर्जी**—ननु बालवृद्धातुराणां फलादिस्वीकाराभावे जीवनमेव न स्यादित्यतः रुक्माङ्गदकृतव्यवस्थाप्रकारमाह— **अष्टवर्षाधिक इति** ।। अष्टसङ्ख्याऽन्यूनसङ्ख्यावर्षवानित्यर्थः । यस्याशीतिः अशीतिसङ्ख्यावर्षाणि न पूर्यते । तत्पूर्ववयोवानित्यर्थः । यः फलादिकं भुङ्क्ते सः पाप इत्यन्वयः । तुशब्दः आतुरव्यतिरिक्तः ।

अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ।।

इति वचनात्सर्वेषामपि फलमूलादेर्व्रतादूषकत्वात्कथं इयं व्यवस्था इति चेन्न । वचनमिदं एकादशीव्रतव्यतिरिक्तव्रतविषयम् । तदुक्तम्—

अष्टौ तान्यव्रतघ्नानि ये न घ्नन्ति हरेर्दिनम् ।
गुडोदकैरिक्षुदण्डैः सुपक्वैः कदलीफलैः ।।
चूर्णोदकैरयःपिण्डैर्बाधन्ते यमकिंकराः ।
यत्किञ्चन न भक्षेत शुभेप्सुः सर्वथा व्रती ।।
असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् ।
उपवासफलं नश्येद्दिवास्वापाच्च सङ्गमात् ।। इति ।।

---

* अयं श्लोकः नारदपुराणे २-३-८ ।

[४६] उपवासासमर्थश्च फलमूलजलं पिबेत् ।
नष्टे शरीरे स भवेदन्यथा चात्मघातकः ।। ब्रह्मवैवर्ते १-२७-१२ ।।

नश्यत्येकादशीव्रतमिति पाठान्तरम् ।

अब्भक्षणं मुनिश्रेष्ठ कृत्वैको नरकं व्रजेत् ।
एकादश्यन्नकामस्तु पितृभिस्सह मज्जति ।।

—इति पञ्चसंस्कारसंग्रहे ।। १८१ ।।

**उपेन्द्र**—ननु बालवृद्धातुराणां फलाहारादिस्वीकाराभावे जीवनमेव न भवतीत्यतः रुक्माङ्गदकृतव्यवस्थामाह— **अष्टवर्षाधिक इति** ।। अष्टसंख्याकान्यूनवर्षवानित्यर्थः । अशीतिः अशीतिसंख्याकवर्षाणि न पूर्यते । तादृशो मानवो यो भुङ्क्ते फलादिकमित्यन्वयः । स पापः । तुशब्दः आतुरव्यतिरिक्तः इत्यन्वयः । तदुक्तं—

अष्टौ तान्यव्रतघ्नानि न लङ्घति हरेर्दिनम् ।
गुडोदकैरिक्षुदण्डैः सुपक्वैः कदलीफलैः ।।
पूर्णोदकैरयःपिण्डैर्बाधन्ते यमकिंकराः ।
यत्किञ्चिन्नैव भक्षेत शुभेप्सुस्सर्वथा व्रती ।।
असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् ।
उपवासफलं न स्याद्दिवास्वापाच्च सङ्गमात् ।। १८१ ।।

**कोनेरी**—इत्याशंक्य रुग्मांगदवचनेन व्रतनियमकालमाह— **रुक्माङ्गद इति** ।। यो मर्त्यः अष्टवर्षाधिकः प्राप्तनववर्षः । अशीतिः अशीतिवर्षपर्यन्तकालः यदि न पूर्यते । तावत्कालपर्यन्तं एकादशीव्रतं कुर्यादित्यर्थः । यः पापो मानवः तन्मध्ये आगते विष्णोरहनि हरिदिने भुङ्क्ते स एवातिपातकयुक्तो भवति ।। १८१ ।।

**स्मृ.कृष्णाचार्य**—ननु बालवृद्धातुरादीनां उपवासकरणस्याशक्यत्वात्तेषां कथमुपवास इत्यतस्तत्र व्यवस्थां दर्शयन् तत्र भोजने दोषमाह रुक्माङ्गदः— **अष्टवर्षेति**।। अष्टवर्षाधिक अष्टवर्षापेक्षया अधिकवर्षयुक्तो यः मानवः यस्य अशीतिः वर्षाणां अशीतिर्न पूर्यते एतादृशो मानवः विष्णोरहनि हरिदिने आगते सति भुङ्क्ते सः पापः सर्वपापकर्ता भवति । तथाच अष्टवर्षात्पूर्वं अशीतिवर्षानन्तरं भोजनां विशेषपापाभावेऽपि तन्मध्यजीवानां भोजने दोषश्रवणात्तत्र न कार्यमिति भावः ।। १८१ ।।

कृष्णामृतमहार्णवः

*पिता वा यदिवा पुत्रो भार्या वाऽपि सुहृज्जनः ।
पद्मनाभदिने भुङ्क्ते निग्राह्यो दस्युवद्भवेत् ।। १८२ ।।

**ताम्रपर्णी**—स च पापी पित्रादिरपि नोपेक्षणीयः । पापस्य प्रबलत्त्वात् । किन्तु "उत्तमे वचसा शिक्षा मध्यमेऽर्थापहारणम् । अधमे देहदण्डश्च" इत्युक्तरीत्या दण्ड्य एवेत्याह— **पितेति** ।। रुक्माङ्गदेन स्वयं कृतमिति परकृतिः । बहुभिः कारितमिति पुराकल्प इति ज्ञेयम् ।। १८२ ।।

**उमर्जी**—तत्र दण्ड्यादण्ड्यविवेको नेत्याह— **पितेति** ।। कुतो निग्राह्य इत्यत उक्तम् ।। **पद्मनाभेति** ।। १८२ ।।

**उपेन्द्र**—तत्र दण्ड्यादण्ड्यविवेको नेत्याह— **पितेति** ।। निग्राह्यत्वे हेतुमाह-- **पद्मनाभदिन इति** ।। १८२ ।।

**कोनेरी**—एकादशीव्रतं कृत्वा स्वबन्धून् प्रत्यपि निर्वन्धपूर्वकं उपवासं कारयेदित्याह— **पितेति** ।। यदि पित्रादिजनः पद्मनाभदिने भुङ्क्ते भोक्तुमुद्युक्तो भवति । तदा दस्युवन्निग्राह्यो भवति । निर्बन्धपूर्वकं उपवासं कारयेदित्यर्थः ।। १८२ ।।

**स्मृ.कृष्णाचार्य**—पित्रादीनामपि एकादशीभोजने चोरवद्दण्ड्यत्वश्रवणात्तत्र सर्वभोजनं न कार्यमिति प्रमाणमाह— **पिता वेति** ।।

जनिता चोपनीता च यस्तु विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ।।

इत्युक्तपञ्चविधपिता वा । पुत्रः औरसः दत्तः क्रीतः शिष्यो भृत्यादिर्वा । भार्या पुत्रवती अपुत्रवती च । सुहृज्जनः पितामहमातामहभ्रात्रादिस्वबन्धुजनो वा यदि पद्मनाभदिने हरिदिनं भुङ्क्ते व्याजेनापि । सः सर्वोऽपि दस्युवदर्थचोरवद्विष्णुभक्तैर्महात्मभिर्निग्राह्यः ।

उत्तमे वचसा शिक्षा मध्यमेऽर्थापहारणम् ।
अधमे देहदण्डश्च........................ ।।

* अयं श्लोकः नारदपुराणे २-३-१८ ।

इत्याद्युक्तरीत्या निग्राह्यो दण्ड्यो भवेदिति । तथाच सर्वैरपि तद्दिने न भोक्तव्यमिति भावः ।। १८२ ।।

## कृष्णामृतमहार्णवः

ब्रह्मा—

**[1]उपोष्य द्वादशीं पुण्यां सर्वपापक्षयप्रदाम् ।**
**न पश्यति यमं वाऽपि नरकाणि न यातनाम् ।। १८३ ।।**

**ताम्रपर्णी**—एवं द्वादश्युपवासफलश्रवणाच्च तदवश्यमनुष्ठेयमित्याह— **उपोष्येति** ।। **द्वादशीमिति** ।। एकादश्याः वेधे द्वादशीमित्यर्थः । श्रवणद्वादशीमतिरिक्तद्वादशीं वा । एकादशीमिति केचित्पठन्ति । न पश्यन्ति यममिति । ननु नारकाणां यमदर्शने किं प्रमाणमिति चेदेतदेवेति ब्रूमः । स्पष्टं विष्णुतीर्थीये—

ततो यमपुरीं प्राप्य प्रथमं तं प्रपश्यति ।
नानाकृतिं भीषयन्तं दृष्ट्वा स्थाणुसमो भवेत् ।। इति ।। १८३ ।।

**उमर्जी**—एवमकरणे प्रत्यवायात् करणे फलाधिक्यप्रतिपादकब्रह्मणो वाक्येन फलाधिक्यं प्रतिपादयति— **उपोष्येति** ।। उपोष्य न यातीत्युक्त्या उपासनस्य नरकनिवर्तकत्वमवगम्यते ।। १८३ ।।

**उपेन्द्र**—एवमकरणे प्रत्यवायात् करणे फलाधिक्यप्रतिपादकब्रह्मणो वाक्यं पठति- — **उपोष्येति** ।। उपोष्य न यातीत्युक्त्या उपवासस्य नरकनिवर्तकत्व-मवगम्यते ।। १८३ ।।

**स्मृ.कृष्णाचार्य**—पुनरप्येकादश्युपवासस्यानेकपापपरिहारकत्वात्स कर्तव्य इति व्यासवाक्येनाह— **उपोष्येति** ।। पुण्यप्रदैकादश्युपवासं कुर्वन् यो वर्तते स जनः यमं वा नरकयातनां वा न पश्यति । तत्कुत इत्यत उक्तम् । **सर्व-पापक्षयप्रदामिति** ।। एवमेकादश्युपवासेनैव सर्वपापक्षयात्पापफलं नरकादिकं न विन्दति । तस्मात्तत्रोपवासः कर्तव्य इति । द्वादशीपदेन एकादश्युच्यते । उभयोर्हरिवासरत्वादिति ।। १८३ ।।

---

१. 'उपोष्यैकादशीं' इति ताम्र. पाठ. ।

## कृष्णामृतमहार्णवः

शंकरः—

***रटन्तीह पुराणानि भूयोभूयो वरानने ।**
**न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ।। १८४ ।।**

**ताम्रपर्णी**—पुराणेषु एकादश्युपवासविध्यभ्यासाञ्चावश्यं तदनुष्ठेयमित्याह— **रटन्तीति** ।। हरिवासरे "न भोक्तव्यं न भोक्तव्यं यावदायुः प्रवर्तते । द्वादशी न प्रमोक्तव्या" इति पुराणानि भूयो भूय इहैकादश्यादिविषये रटन्ति उद्घोषयन्ति । रट परिभाषण इति धातोः । यावदायुरित्यस्य उत्सर्गवाक्यत्वात् अष्टवर्षाधिकः इत्यशक्तविषयेन अपवादवाक्येन न विरोधः ।। १८४ ।।

**उमर्जी**—अशेषपापानामन्नाश्रयणं अप्रामाणिकमिति शंकां शंकरवाक्येन परिहरति- — **रटन्तीति** ।। इह मम अर्थमुद्दिश्य पुराणानि रटन्ति प्रतिपादयन्ति । तत्रैव तात्पर्यमिति द्योतनाय द्विरुक्तिः । वराननेति पार्वतीं प्रति सम्बोधनम् । किं प्रतिपादयतीत्यत उक्तम् ।। **न भोक्तव्यमिति** ।। यावत्पापानामन्नाश्रयणा-त्सर्वथा न भोक्तव्यमित्यादरादिद्विरुक्तिः ।। १८४ ।।

**उपेन्द्र**—स्वोक्तार्थस्याप्रामाण्यशंकां परिहरति— **रटन्तीति** ।। इह अस्मिन्नर्थे पुराणानि रटन्ति प्रतिपादयन्ति । किं प्रतिपादयन्तीत्यत उक्तम् ।। **नेति** ।। तत्रैव तात्पर्यमस्तीति द्योतनाय द्विरुक्तिः ।। वरानने इति मोहिनीं प्रति व्याससम्बोधनम् ।। १८४ ।।

**कोनेरी**—एवमुक्तप्रकारेण एकादशीमाहात्म्यमुक्त्वा रुद्रवचनेनोपसंहरति— **शंकर इति** ।। हे वरानने ! पार्वति ! पुराणानि अष्टादशपुराणानि भूयोभूयो पौनःपुन्येन रटन्ति कूजन्ति । किमिति । हरिदिने प्राप्ते तस्मिन् दिने न भोक्तव्यं न भोक्तव्य-मिति । द्विर्वचनमादरार्थं ।। १८४ ।।

**स्मृ.कृष्णाचार्य**—एकादश्यामुपवासकरणस्य बहुप्रमाणेष्वभिधानादित्युक्त्वा एकादश्यां सर्वथा न भोक्तव्यमित्यत्र व्यासवाक्यमेव पठति— **रटन्तीति** ।। हे

---

* अयं श्लोकः नारदपुराणे २-३-३० ।

वरानने इति मोहिनीं प्रति व्याससम्बोधनम् । हरिवासरे सम्प्राप्ते सति न भोक्तव्यम् । केनचिद्व्याजेनापि भोजनं सर्वथा न कार्यम् । तत्कुत इत्यत उक्तम् ।। **रटन्तीह पुराणानीति** ।। पुराणानि—

वैष्णवं नारदीयं च तथा भागवतं शुभम् ।
वाराहं च तथा पाद्मं सात्विकानि निबोध मे ।।

इत्युक्तसात्विकपुराणानि । इह एकादश्युपवासविषये रटन्ति भोजनं न कार्यमिति उद्घोषयन्ति । यतः अतः एकादश्यां न भोक्तव्यमिति भावः ।। १८४ ।।

## कृष्णामृतमहार्णवः

ब्रह्मा—

**द्वादशी न प्रमोक्तव्या यावदायुः प्रवर्तते ।**
**अर्चनीयो हृषीकेशो विशुद्धेनान्तरात्मना ।। १८५ ।।**

**ताम्रपर्णी—**ननु किं भक्त्या । ग्रन्थोपक्रमेऽर्चितोऽमृतत्वं ददातीत्युक्तम् । तदयुक्तम् । न कर्मणा मोक्षयोगः । "तमेवं विद्वानमृत इह भवति" भक्तिरेवैनं मोचयतीत्यादि-श्रुतेरित्यत आह— **अर्चनीय इति** ।। विशुद्धेन कामक्रोधाद्यकलुषेण। भक्त्या विशुद्धेन पूतेन वा अन्तरात्मना । हृषीकाणां इन्द्रियाणां ईशः अर्चनीयः। "निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किञ्चनारे महामकं मघवं चित्रमर्च" इति श्रुत्युक्तरीत्या भगवान् मदिन्द्रियेषु स्थित्वा स्वयमेव स्वात्मानं अर्चयति । अहं तु तद्दत्तकर्तृत्ववानिति बुद्ध्या अर्चनीय इति भावः। यद्वा भक्तिपूतेन अन्तरात्मना मानसपुष्पादिभिरर्चनीयः।

बुद्ध्या विहितपुष्पैर्वा प्रणवेन समर्चयेत् ।
वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ।।

—इति गीतातात्पर्योदाहृतवचनात् ।।

"**अष्टभिर्भावपुष्पैः**" इति वचनात् ।। १८५ ।।

**उमर्जी—**उक्तार्थमुपसंहरति— **द्वादशीति** ।। एकादशीव्रतमित्यर्थः । यावदायुरिति उत्तरत्रापि सम्बन्धः ।। १८५ ।।

**उपेन्द्र**—पूर्वोक्तधर्माणां यावज्जीवमनुष्ठेयत्वमाह— **द्वादशीत्यादिना** ।। न प्रमोक्तव्या व्रतानुष्ठानमन्तरेणेत्यर्थः । अर्चनीयमित्यत्रापि यावदायुरित्यत्र सम्बद्ध्यते ।। १८५ ।।

**कोनेरी**—एकादश्युपवासफलमुक्त्वा ब्रह्मवचनेन द्वादश्युपवासफलमाह— **ब्रह्मेति** ।। सर्वपापक्षयप्रदां पुण्यां पुण्यप्रदां द्वादशीं श्रवणद्वादशीं अतिरिक्तद्वादशीं च उपोष्य नरकाणि यातनां च यममपि न पश्यति ।। १८५ ।।

**कोनेरी**—उपोषणफलमुक्त्वा पारणफलमाह— **द्वादशीति** ।। द्वादशी साधनद्वादशी यावदायुः प्रवर्तते । तावत्कालपर्यन्तं न प्रमोक्तव्या न त्याज्या । द्वादश्यामेव पारणं कुर्यात् । अतिरिक्तश्रवणद्वादश्योरुपवासविषयत्वेन हरिवासरशब्देनैव गृहीतत्वात्र चोद्यावकाशः ।। १८५ ।।

**स्मृ.कृष्णाचार्य**—एकादशीव्रतानुष्ठानस्य बहुप्रमाणेष्विष्टानिष्टप्राप्तिपरिहारफलप्रदत्वश्रवणाद्यावज्जीवनमुपोषणं कार्यमिति प्रमाणेनाह— **द्वादशीति** ।। द्वादशी **शुद्धै**कादशी **विद्धै**कादश्याः परतो द्वादशी वा अतिरिक्तद्वादशी पुच्छद्वादशी वा न प्रमोक्तव्या न त्याज्या। कियत्कालमित्यत उक्तम् ।। **यावदायुरिति** ।। अष्टवर्षा-नन्तरमशीतिवर्षपर्यन्तं यावदायुस्तावत्पर्यन्तं **सर्वैः**सर्वथोपवासः कर्तव्य इति भावः । एकादशीदिने विशेषकर्तव्यमाह— **अर्चनीय इति** ।। विशुद्धेनान्तरात्मना मनसा **हृषीकेशः** अर्चनीयः **सर्वैः** पूजासाधनद्रव्यैः सम्यक्पूजनीय इति । तथाच भक्त्या हरिपूजनपूर्वकं यावदायुः कृतैकादश्युपवासस्य मोक्षफलप्रदत्वश्रवणात्सर्वैरेकादश्युपवासः कर्तव्य इति स्थितम् ।। १८५ ।।

**कृष्णाचार्य**—एकादशीव्रतानुष्ठानस्य बहुप्रमाणेषु इष्टानिष्टप्राप्तिपरिहारकत्वश्रवणाद्यावज्जीवमुपोषणं कार्यमिति प्रमाणेनाह— **द्वादशीति** ।। द्वादशी **शुद्धै**कादशी । **विद्धै**कादश्याः परतो द्वादशी वा । अतिरिक्तद्वादश्याः परतो द्वादशी वा । न **प्रमोक्तव्या** न त्याज्या । कियत्कालमित्यत उक्तम् ।। **यावदायुरिति** ।। अष्टवर्षानन्तरं **अशीति**वर्षपर्यन्तं यावदायुः तावत्पर्यन्तं **सर्वैः**रुपवासः कर्तव्य इति भावः । एकादशीदिने कर्तव्यविशेषमाह – **अर्चनीय इति** ।। विशुद्धेनान्तरात्मना **मनसा हृषीकेशः** अर्चनीयः सर्वैः पूजासाधनद्रव्यैः सम्यक् पूजनीय इति । तथाच

भक्त्या हरिपूजनपूर्वकं यावदायुः कृतैकादश्यु-पवासस्य मोक्षफल-प्रदत्वश्रवणा-त्सर्वैरेकादश्युपवासः कर्तव्य इति स्थितम् ।। १८५ ।।

**कृष्णामृतमहार्णवः**

***भक्त्या ग्राह्यो हृषीकेशो न धनैर्धरणीसुराः ।**
**भक्त्या सम्पूजितो विष्णुः फलं धत्ते [1]समीहितम् ।। १८६ ।।**

**ताम्रपर्णी**—मणिमयकिरीटकटकादिभिः स्वर्णपुष्पैरर्चनसम्भवादित्यत आह- – **भक्त्येति** ।। ग्राह्यो वश्यः । "भक्तिवशः पुरुषः" इत्यादेः । तद्रहितैः धनैर्न वश्यः । "न कर्मणा न प्रजया धनेन" इत्यादेरिति भावः । ततश्च किमित्यत आह—**भक्त्येति** ।। एवं पूजने तदुद्रिक्तया भक्त्या कर्मणा विशुद्धेनान्तरात्मना मनसा विजिज्ञास्यः । ततश्चोद्रिक्तया भक्त्या ग्राह्यः परोक्षतो ज्ञेयः । ततश्चोद्रिक्तया भक्त्या अपरोक्षतो ज्ञेयः । अव्यक्तस्वभावस्यापरोक्षज्ञानं चेन्द्रियनियामकेन प्रसन्नेन भगवतैवेत्यभिप्रायेणापि हृषीकेश इत्युक्तम् । तथाच सूत्रम् । अतोऽनन्तेन तथाहि लिङ्गमिति । तत्प्रसादसम्पादनं भक्त्यैव न धनादिभिरित्याह— **भक्त्येति** ।। ग्राह्यः प्रसाद्यः । ततश्च किमित्यत्राह— **भक्त्या सम्पूजित इति** ।। ततश्चापरोक्ष-ज्ञानेनोद्रिक्तयाऽपि पक्वया भक्त्यैव सम्पूजित आराधितो विष्णुः समीहितमिष्टं फलं मोक्षाख्यं धत्ते ददातीत्यर्थः । एवमर्थविवक्षयोपक्रमेऽर्चितो मोक्षं ददाती-त्युक्तमिति भावः ।। १८६ ।।

**उमर्जी**—भक्त्या ग्राह्यः वशीकरणीयः । धनादेः कुतो न साधनत्वं इत्यत उक्तम् ।। **भक्त्येति** ।। समीहितम् इच्छाविषयम् । फलं यतो धत्ते ददाति ।। १८६ ।।

**उपेन्द्र**—अर्चनादिकं भक्तिपूर्वकं कार्यमिति भक्तेः प्राधान्यमाह— **भक्त्येति** ।। ग्राह्यः वशीकरणीयः । धरणीसुरा इति शौनकादीनां सम्बोधनम् । यतस्समीहितं इच्छाविषयं फलं धत्ते ददाति । अतो ग्राह्य इति पूर्वेणान्वयः ।। १८६ ।।

**कोनेरी**—दशम्यादितिथित्रयकर्तव्यमुक्त्वा सिंहावलोकनन्यायेन पुनर्भगवत्पूजा-प्रकारं निरूपयति— **अर्चनीय इति** ।। धरणीसुराः ! विप्राः ! शौनकाद्याः ! हृषी-

---

* अयं श्लोकः नारदपुराणे २-३-३ । १ 'समीहितं' इति म्मु क. तथा कृ. पाठः ।

केशः इन्द्रियनियामको हरिः । विशुद्धेन निर्मलेनान्तरात्मना भक्तियुक्तेन मनसा अर्चनीयः । अर्चितः हृषीकेशो भक्तैर्भक्त्यैव ग्राह्यः । भक्ताधीनो भवति । न धना-दिभिः निरपेक्षत्वात् । भक्त्या सम्पूजितो विष्णुः समाहितमपेक्षितं फलं धत्ते ददाति ।। १८६ ।।

**स्मृ.कृष्णाचार्य**—पूर्वोक्तवैष्णवधर्मः भक्तिपूर्वकं एव कार्यः । तदभावे सर्वोऽपि व्यर्थं इति वक्तुमाह स एव— **भक्त्या ग्राह्येति** ।। हे धरणीसुराः इति ऋषिसम्बो-धनम् । हृषीकेशः हृषीकाणां चक्षुरादिविषयेन्द्रियाणां ईशो नियामको हरिः । भक्त्या माहात्म्यज्ञानपूर्वकसुदृढस्नेहेन ग्राह्यः वशीकर्तव्यः । अन्येन साधनेन ग्राह्यः किन्नेत्याह— **न धनैरिति** ।। धनैः द्रव्यादिभिः तत्साध्ययज्ञादिभिः सः ग्राह्यः न भवति । किन्तु भक्त्यैवेत्यर्थः । भक्त्या किं फलं ददातीत्यपेक्षायामाह- — **भक्त्येति** ।। विष्णुः भक्त्या सम्पूजितः सम्यक् पूजितः तस्य पूजकस्य समाहितं यदभीष्टं तत्सर्वदा ददातीति । तस्माद्भक्तेराधिक्यात्कर्तव्येति ।। १८६ ।।

**कृष्णामृतमहार्णवः**

***जलेनापि जगन्नाथः पूजितः क्लेशनाशनः ।**
**परितोषं प्रयात्याशु तृषार्तस्तु यथा जलैः ।। १८७ ।।**

**ताम्रपर्णी**—पूजायां भक्तिरेवावश्यकी न धनादिकम् । अत्यल्पबाह्यसामग्री-सद्भावेऽपि तत्सम्भवादिति भावेनाह— **जलेनापीति** ।। भक्तिपूर्वमिति शेषः ।। **तृषार्त इति** ।। यथा पुंसः सलिलैः परितोषे तृषाकृतार्तिः प्रयोजिका । वितृ-षस्य जलेन परितोषाभावात् । तथा जलेन हरेः परितोषे भक्तिपरवशस्य भक्तानुग्रह-कातर्यमेव प्रयोजकम् । पूर्णस्य भक्तानुग्रहकातर्यातिरेकेण स्वाधीनेनात्यल्पेन जलेन तोषं प्राप्तस्य प्रयोजकस्यादर्शनादिति भावः । तथाच श्रुतिः— "गौरो न तृषितः **पिब**" इति ।। १८७ ।।

**उमर्जी**—भक्तेरेव प्राधान्यं उपपादयति— **जलेनेति** ।। जलमात्रेणापि भक्त्या पूजितः । ननु पूर्णस्य कथं प्राकृतपुरुषवद्धोतृत्वं विरुद्धत्वादिति चेन्न । अचिन्त्य-

---

* अयं श्लोकः नारदपुराणे २-३-४ । स्कान्दे २-७-११-४४ ।

शक्त्या पूर्णस्यापि तदुपपत्तेः पूर्णस्य भोक्तृतानित्यतृप्तस्याप्यतुष्टता । "युक्तैवाश्चर्य-रूपस्य ह्यचिन्त्यैश्वर्यवारिधेः" इति वचनात् । भक्तानुग्रहार्थं भगवान् दृष्ट्यादिना तत्तद्योग्यतानुसारेण स्थूलसूक्ष्मपदार्थगताशेषविशिष्टसारविशेषं स्वीकरोतीति भावः । "शुभं पिबति" इति स्मृतेः शुभसारभोक्तृत्वं ज्ञातव्यम् ।। १८७ ।।

**उपेन्द्र**—इतोऽपि भक्तेरेव प्राधान्यमुपपादयति— **जलेनेति** ।। अपिशब्देन भक्तिं समुच्चिनोति । भक्तिपूर्वकं जलेनेत्यर्थः । ननु प्राकृतपुरुषवद्भोक्तृत्वं कथं पूर्णस्येति चेन्न । अचिन्त्यशक्त्या पूर्णस्यापि भोक्तृत्वोपपत्तेः । "पूर्णस्य भोक्तृता नित्यतुष्ट-स्याप्यतुष्टता । युक्तैवाश्चर्यरूपस्य ह्यचिन्त्यैश्वर्यवारिधेरि"ति वचनात् । भक्तानुग्रहार्थं स्वीकरोतीत्यर्थः ।। १८७ ।।

**कोनेरी**—पूजाकरणे द्रव्याद्यभावेन निष्किञ्चनानां कथमित्यत आह— **जलेनेति** ।। भक्तानां क्लेशनाशनः जगन्नाथः जलेनापि भक्तैः पूजितः आशु शीघ्रं परितोषं प्रयाति । यथा तृषार्तः पुरुषः । तुशब्दः एवार्थे । निर्मलोदकैरेव यथा तृप्तो भवति तथेति ।। १८७ ।।

**स्मृ.कृष्णाचार्य**—भक्त्या भगवदभ्यर्चनस्यैव तत्प्रीतिकरत्वादवश्यं तत्कर्तव्यमि-त्यत्र पुनः प्रमाणमाह— **जलेनापीति** ।। जलेनापि "पत्रं पुष्पं फलं तोयम्"इत्युक्त-रीत्या तन्मात्रेण दरिद्रेण भक्तेन पूजितो जगन्नाथः सज्जनवर्गस्वामी परितोषमाशु प्रयाति सन्तुष्टो भवति । तत्र दृष्टान्तः ।। **तृषार्त इति** ।। तृषार्तो जलपानार्थी पुरुषः जलैः जलपाने सति यथा सन्तुष्टो भवति तथा भक्तकृतार्चनेन सन्तुष्टो भवतीत्यर्थः । ततः किं प्रयोजनमित्यत आह— **क्लेशनाशन इति** ।। क्लेशनाशनः भक्त्यार्चनेन सन्तुष्टस्तस्य भक्तस्य क्लेशनाशनः नानाविधाध्यात्मिकादिसंसार-क्लेशनाशको भवति। अतस्तस्य पूजनं कार्यमिति ।। १८७ ।।

कृष्णामृतमहार्णवः

**आसीनस्य शयानस्य तिष्ठतो व्रजतोऽपि वा ।**
**रमस्व पुण्डरीकाक्ष नृसिंह हृदये मम ।। १८८ ।।**

**ताम्रपर्णी**—एवमर्चनाया मोक्षहेतुत्वमुपपाद्य यत्स्मरणध्यानकीर्तनानां कर्तव्य-त्वमुक्तं तत्कथं कार्यमित्यतस्तत्प्रकारं लेशेन वदन् अप्रमेयो भगवान्कथं तद्वशो

भविष्यतीत्यतः शरणागत्या प्रसन्नस्तद्वशो भविष्यतीत्यभिप्रायेण शरणप्रार्थनामन्त्रं पठति— **आसीनस्येत्यादिना** ।। आसीनस्य वा शयानस्य वा तिष्ठतो वा व्रजतोऽपि मम हृदये सर्वदा रमस्व । रमणस्य नित्यसिद्धत्वात्तथा मत्स्मृतिगोचरो भवेति भावः ।। १८८ ।।

**उमर्जी**—"स्मरणं सर्वदा योग्यम्" इत्युक्तेः स्मरणं सर्वदा कार्यम् । स्मरणासमर्थं मन्दं प्रति स्वनियामकतया स्मरणप्रकारं दर्शयति— **आसीनस्येति** ।। मम नियामकतया रमस्वेत्यन्वयः ।। १८८ ।।

**उपेन्द्र**—स्मरणासमर्थं मन्दं प्रति सर्वदा स्मरणप्रकारं दर्शयति— **आसीनस्येति** ।। त्वं रमस्वेति सम्बन्धः ।। १८८ ।।

**कोनेरी**—पूजानन्तरं पूजाङ्गतया प्रार्थयेदित्याह— **आसीनस्येति** ।। हे पुण्डरीकाक्ष आसीनस्य शयानस्य तिष्ठतः व्रजतः गच्छतो वापि मम हृदये सर्वदा रमस्व क्रीडां कुरुष्व ।। १८८ ।।

**स्मृ.कृष्णाचार्य**—नित्यं षोडशोपचारैः भगवत्पूजनं सर्वैः सर्वप्रकारेणापि कृत्वा नमस्करादिकं कृत्वा तत्प्रीत्यर्थं हृद्यावासादिरूपं तत्प्रार्थनं स्वाभीष्टसिद्ध्यर्थं कार्यमित्याह उत्तरश्लोकैः ।। तत्र तावत्स्वहृदयेऽवस्थानं प्रार्थयते— **आसीन-स्येति** ।। मनुष्यदेहस्य मम एकप्रकारत्वाभावेन आसीनस्य क्वचिदवस्थितस्य, शयानस्य क्वचिच्छयितस्य, कदाचित्तिष्ठतः, कदाचिद्यत्रकुत्रचिद्व्रजतो, विषयाद्यर्थं सञ्चरतोऽपि वा विषयासक्तस्य मम समस्तदुःखपरिहारार्थं हृदये रमस्व । ततश्च—

> सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
> येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ।।

इत्युक्तरीत्या सर्वमङ्गलरूपत्वेन मम हृदये रमणं कुरु । हे पुण्डरीकाक्षेति भक्तकृतसम्बोधनम् ।। १८८ ।।

**कृष्णामृतमहार्णवः**

> **करावलम्बनं देहि श्रीकृष्ण कमलेक्षण ।**
> **भवपंकार्णवे घोरे मज्जतो मम 'सर्वदा ।। १८९ ।।**

**ताम्रपर्णी**—दयोदयाय दैन्येन प्रार्थनीयो भगवानिति तत्प्रकारमाह द्वाभ्याम् ।। **करेति** ।। कमलेक्षण श्रीकृष्ण शाश्वते प्रागनन्तकालमनुवृत्ते घोरे भवपंकार्णवे मज्जतो मम करावलम्बनं अभयहस्तलक्षणमवलम्बनं देहि ।। १८९ ।।

**उमर्जी**—भवपंकार्णवे भवरूपपंकार्णवे । अत एव घोरे करावलम्बनस्यावलम्बनं आश्रयम् । करेण अवलम्बनमिति वा । एवं सर्वावस्थासु स्मरणं कार्यम् । सर्वदा इति भावः ।। १८९ ।।

**उपेन्द्र**— ।। **करावलम्बनमिति** ।। भवपंकार्णवे संसाराख्यपंकार्णवे ।। १८९।।

**कोनेरी**—हे कृष्ण! घोरे भयंकरे भवपंकार्णवे मज्जतः मग्नस्य मे करावलम्बनं शीघ्रं देहीत्यन्वयः ।। १८९ ।।

**स्मृ.कृष्णाचार्य**—पुनः प्रार्थनाप्रकारमाह— **करावलम्बनमिति** ।। हे कमलेक्षण कमलायताक्ष कृष्ण हे स्वामिन् त्वमेव करावलम्बनं देहि भव । कुतः करावलम्बनं दातव्यमित्यत आह— **भवपंकेति** ।। संसाराख्यपंकात्मकमहासमुद्रे मज्जतो निमग्नस्य मम उद्धारार्थं करावलम्बनं देहि । भवस्य पंकार्णवत्वं च जले निमग्नस्य शीघ्रमुत्थानवत् पंके निमग्नस्य शीघ्रमुत्थनासम्भवात्संसारादुत्थानमत्यशक्यमिति ज्ञापनाय पंकेत्युक्तम् । भवपंकार्णवस्य तादृशत्वं कुत इत्यत उक्तम् ।। **घोरेति** ।। जननमरणाद्यतिदुःखप्रदत्वात् । तस्मात्तादृशदुःखसंसारनिवर्तकत्वात्करावलम्बनं देहीति भक्तैः प्रार्थनं कार्यमिति ।। १८९ ।।

## कृष्णामृतमहार्णवः

**सर्वगश्चैव सर्वात्मा सर्वावस्थासु चाच्युत ।**
**रमस्व पुण्डरीकाक्ष नृसिंह हृदये मम ।। १९० ।।**

**ताम्रपर्णी**—न केवलं जाग्रदवस्थायां अपि तु सर्वावस्थासु रमस्वेत्याह— **सर्वग इति** ।। हे अच्युत चतुर्विधनाशशून्य पुण्डरीकाक्ष नृसिंह सर्वगः सर्वान्तर्गतः सर्वात्मा सर्वव्यापकस्त्वं मम हृदये सर्वावस्थासु जाग्रत्स्वप्नसुषुप्तिमरणमोक्षावस्थासु रमस्व तथा मत्स्मृतिविषयो भव ।। १९० ।।

---

१. 'शाश्वते' इति ताम्र. पाठः ।—श्लोक १८९

**उमर्जी**—सर्वगः व्याप्त एवं सर्वान्तर्यामी च । न केवलं जाग्रदवस्थाप्रेरकः । किन्तु सर्वावस्थासु प्रेरकः सर्वात्मा ।। १९० ।।

**उपेन्द्र**— ।। **सर्वगश्चेति** ।। सर्वगः व्याप्त एवं सर्वात्मा सर्वान्तर्यामी च।।१९०।।

**कोनेरी**—हे नृसिंह! हे पुण्रीकाक्ष! हे अच्युत! त्वं सर्वगः चेतनाचेतनसर्ववस्तुगः सर्वावस्थासु जाग्रदादिसर्वावस्थासु सर्वात्मा सर्वनियन्ता । एतादृशस्त्वं मम हृदये रमस्वेत्यन्वयः ।। १९० ।।

**स्मृ.कृष्णाचार्य**—पुनरपि प्रार्थनाप्रकारमाह— **सर्वगश्चेति** ।। हे पुण्डरीकाक्ष, हे नरसिंह, स्वामिन् सर्वगः सर्वव्यापी सर्वात्मा सर्वान्तर्यामी, सर्वस्वामी सर्वनियामकः । त्वं सर्वावस्थासु मरणजाग्रत्स्वप्नसुषुप्त्याद्यवस्थासु मम हृदये वस आवासं कुरु । सर्वदा ध्यानविषयो भवेत्यर्थः ।। १९० ।।

**कृष्णामृतमहार्णवः**

**त्राहि त्राहि जगन्नाथ वासुदेवाच्युताव्यय ।**
**मां समुद्धर गोविन्द दुःखसंसारसागरात् ।। १९१ ।।**

**ताम्रपर्णी**—जगन्नाथ बन्धकप्रकृत्यादिजगन्नाथ । अच्युत पदच्युतिरहित । अव्यय नाशरहित। गोविन्द एवमेव सकलवेदप्रतिपाद्य । वासुदेव वासनात्स्वपरगताखिलविशेषाणां ज्ञानात् वा सुतेरशेषप्रसवकर्तृत्वात्सुष्ठुत्वाच्च तत्र क्रीडनाद्देवः तस्य सम्बुद्धिर्वासुदेवेति । तदुक्तम् "वानात्सुतेर्देवनाद्वासुदेव" इत्यादि । मां त्राहि त्वद्विषयकज्ञानादिप्रदानेन त्रायस्व । आदरात् क्लेशसहिष्णुत्वादभ्यासः । ततश्च दुःखसंसारसागरात्समुद्धर उद्धृत्य चानन्दप्रदानेन त्राहीति वा द्वितीयस्य सम्बन्धः ।। १९१ ।।

**उपेन्द्र**— ।। **त्राहीति** ।। त्राहि त्रायस्व ।। १९१ ।।

**कोनेरी**—हे जगन्नाथ! हे वासुदेव! हे अच्युत! हे अव्यय! हे गोविन्द! मां त्राहि । दुःखप्रदसंसारसागरात् मामुद्धरेति प्रार्थयेदित्यन्वयः ।। १९१ ।।

**स्मृ.कृष्णाचार्य**—पुनः प्रार्थनाप्रकारमाह— **त्राहीति** ।। हे जगन्नाथ त्राहि त्राहि सांसारिकनानाविधदुःखाद्रक्ष रक्ष । आदराद् द्विरुक्तिः । वासुदेवेत्यादिविशेषणत्रय-

कथनं भक्त्याधिक्येन वा, तस्य स्वोद्धारे सामर्थ्यज्ञापनाय वा इति ज्ञेयम् । कथं रक्षणं कार्यमित्यत आह— **मां समुद्धरेति** ।। हे गोविन्द दुःखात्मकसंसारान्मां समुद्धर नानाविधसांसारिकदुःखसमुद्रादुद्धरस्व । तेन मां रक्षेति भावः ।। १९१ ।।

**कृष्णामृतमहार्णवः**

**एतत्पुण्यं परं गुह्यं पवित्रं पापनाशनम् ।**
**आयुष्यं च यशस्यं च [1]धन्यं दुःस्वप्ननाशनम् ।। १९२ ।।**

**ताम्रपर्णी**—एवं स्मरणध्याननामसंकीर्तनहेतुभूतं भगवत्प्रार्थनारूपं मन्त्रं पठित्वा एतदवश्यं ज्ञातव्यं जप्यं चेति भावेन स्तौति— **एतदिति** ।। एतत् श्लोकचतुष्टयम्। पुण्यं पुण्यसाधनम् । परं गुह्यं परमगोप्यम् । पवित्रं शरीरपावित्र्यकरम् । पापनाशनं अपावित्र्यापादकपापनाशनम् । आयुष्यं आयुःप्रदम् । यशस्यं यशःप्रदम् । धन्यं धनप्रदम् । दुःस्वप्ननाशनं दुःस्वप्ननाशकम् । कलिदुःस्वप्ननाशनमिति पाठे कलिसान्निध्यदुःस्वप्ननाशकमिति योज्यम् ।। १९२ ।।

**उमर्जी**—स्मरणकर्तृणां फलमाह— **एतदिति** ।। पूर्वोक्तमन्त्रं पुण्यं पुण्यकरं परं मन्त्रोत्तमम् । नायोग्यायोपदेष्टव्यमित्याह— **गुह्यमिति** ।। कलिदुःस्वप्ननाशनम्। कलिदुष्कर्मदुःस्वप्रयोर्नाशकरम् ।। १९२ ।।

**उपेन्द्र**—स्मरणफलमाह— **एतदिति** ।। पूर्वोक्तरीत्या स्मरणं पुण्यं पुण्यकारणं परं मन्त्रोत्तमम् । नायोग्यायोपदेष्टव्यमित्याह— **गुह्यमिति** ।। कलिः कलहः दुःस्वप्ननाशकरम् ।। १९२ ।।

**कोनेरी**—इदानीं स्वकृतग्रन्थस्य प्रशंसामाह— **एतदिति** ।। एतदस्मदुक्तं शास्त्रं पुण्यं पुण्यकरं परं उत्तमं गुह्यं गोप्यं पवित्रं शृण्वतां पवित्रकरं पापनाशनं आयुष्यं आयुष्यप्रदम् धन्यं धनादिप्रदं दुःखप्रनाशनं च अध्येतृणामिति शेषः ।। १९२ ।।

**स्मृ.कृष्णाचार्य**—एतद्ग्रन्थस्य माहात्म्यं वदन् ग्रन्थधारणपाठनार्थावधारणादिना सर्वपापविनिर्मुक्तिद्वारा भगवत्प्राप्तेः अवश्यं पठनीयमित्याह— **एतत्पुण्यमिति श्लोकद्वयेन** ।। एतच्छास्त्रं पुण्यं अध्येतृणां पुण्यप्रदमत एव परं गुह्यं गोप्यार्थकम् ।

---

१. 'कलिदुःस्वप्ननाशनम्' इति ताम्र., उम. तथा उप. पाठः ।

पवित्रं पावित्र्यप्रदम् । पापनाशनं च आयुष्यप्रदं यशस्यं च कीर्तिप्रदं अत एव धन्यं दुःस्वप्ननाशनं चेति । अनेन ग्रन्थस्य माहात्म्यमुक्तं भवति ।। १९२ ।।

**कृष्णामृतमहार्णवः**

**[1]कलौ पापं कियन्मात्रं हत्यास्तेयादिसम्भवम् ।**
**स्मृते मनसि गोविन्दे दह्यते तूलराशिवत् ।। १९३ ।।**

**ताम्रपर्णी**—ननु कथमेतन्मन्त्रोक्तप्रकारेण हरिस्मरणादिमतां पापहानिः कथञ्चित् क्षुद्रपापहानिसद्भावेऽपि कलिकालोपोद्बलितब्रह्महत्यास्वर्णस्तेयादिमहापातकानामनिवृत्तेरित्यत आह— **कलाविति** ।। कलौ युगे मनसि हत्यास्तेयसुरापानादिभिः बाह्यकर्मभिः सम्भवं उत्पन्नं पापं कियन्मात्रम् । तत्र परिगणनीयमिति भावः । कुतः यतो मनसि तस्मिन्नेव मनसि गोविन्देति स्मृते तूलराशिवद्दह्यत इत्यर्थः। यत्र पापान्युत्पन्नानि तत्रैव तद्विरुद्धे स्मरणे जाते स्वसमानाधिकृतेनाग्निना तूलराशिवत्तन्नाशसम्भवात्कियन्मात्रमिति भावः ।। १९३ ।।

**उमर्जी**—एवं स्मरणकर्तॄणां फलं सामान्यतोऽभिधाय सर्वदा तत्पराणां कलौ फलाधिक्यं वक्ति— **कलाविति** ।। स्मृते इत्यादिनान्वयः । कियदल्पमित्यर्थः । कुत इत्यत उक्तम् ।। **तूलराशिवदिति** ।। अग्निसम्बद्धकार्पासराशिवत् दह्यते ।। १९३ ।।

**उपेन्द्र**—एवं स्मरणकर्तॄणां लौकिकपापभयं नेत्याह— **कलाविति** ।। कियत् अल्पमित्यर्थः । तत्र हेतुमाह— **स्मृत इति** ।। अग्निसम्बन्धात्तूलराशिवद्दह्यते ।। १९३ ।।

**कोनेरी**—इदानीं हरिस्मृतिफलमाह— **कलाविति** ।। कलौ हत्यास्तेयाद्युत्पन्नं पापं कियन्मात्रं अत्यल्पमेव यस्माद्गोविन्दे वेदप्रतिपाद्ये हरौ मनसि स्मृते स्मृतिगोचरे जाते अपरोक्षीकृते इति यावत् । अग्निना तूलसमुदायः यथा दग्धो भवति तद्वत् पापसमुदायः दग्धो भवति । तस्माद्धरिः कीर्तितव्य इति ।। १९३ ।।

---

१. 'पातकं तु' इति स्मृ.कृ. तथा कृ. पाठः ।

**स्मृ.कृष्णाचार्य**—नानाविधभगवत्प्रार्थनेनापि कथमुद्धारः । कलियुगे ब्रह्महत्यादि-महापातकानां सदा नरैः क्रियमाणत्वादित्यतः भगवत्स्मरणस्य सर्वपापनिव-र्तकत्वात्संसारोद्धारप्रार्थनं युक्तमेवेति प्रमाणेनाह— **पातकं त्विति** ।। कलियुगे हत्यास्तेयादिसम्भवं ब्रह्महत्यास्वर्णस्तेयगुरुतल्पगमनसुरापानादिकर्तुः पापिष्ठस्य सम्भवमुत्पन्नं कियत् यथेष्टं पातकं गोविन्दे मनसि स्मृते सति दह्यते तत्सर्वं नाशमाप्नोति । तत्र दृष्टान्तः ।। **तूलराशिवदिति** ।। यथा तूलराशिरग्निना दह्यते, तद्वद्भगवत्स्मरणेन सर्वपापानि नश्यन्ति । अतः भक्तस्य स्वोद्धारप्रार्थनं युक्तमिति भावः ।। अनेन भगवत्स्मरणस्य एतादृशमहामहिमत्वात्सर्वदा तत्कार्यमित्युक्तं भवतीति ।। १९३ ।।

**कृष्णामृतमहार्णवः**

**कलौ केशवभक्तानां न भयं विद्यते क्वचित् ।**
**स्मृते संकीर्तिते ध्याते सङ्क्षयं याति पातकम् ।। १९४ ।।**

**ताम्रपर्णी**—ननु कल्युपोद्बलितेषु प्रबलेषु पापेषु जागरूकेषु स्मृतिरेव नोदेति। कथं स्मृत्यादिना तद्विनाश इत्यतः योग्यताप्राबल्यादनादिभक्ति कदाचित्सत्सङ्गाद-भिव्यक्तां निमित्तीकृत्य तदुपमर्दं कृत्वा स्मृतिविषयो भवति भगवानिति भावेनाह- — **कलाविति** ।। धर्मज्ञानविवर्जिते कलावपि केशवभक्तानां पापभयं क्वचिदपि नास्ति । "भक्त्या ज्ञानं ततो भक्तिस्ततो दृष्टिः" इत्यादेरनादिभक्त्याख्योत्तेजकेन पापोपमर्दे हरिस्मरणसम्भवात्ततः क्वचित्कदाचिदपि भक्तिपूर्वं स्मृते संकीर्तिते ध्याते पातकं सम्यक् क्षयं याति तस्मात्स्मरणादि कार्यमिति भावः ।। १९४ ।।

**उमर्जी**—भक्तानामेव पापनिवृत्तिरित्याह— **कलाविति** ।। संकीर्तिते इत्यादिना अन्वयः । कलौ स्मृत्यादिसाधनेनैव याति ।। १९४ ।।

**उपेन्द्र**—भक्तिपूर्वकस्मरणमेव पापनिवर्तकमित्याह— **कलाविति** ।। स्मृत इत्यादिनान्वयः ।। १९४ ।।

**कोनेरी**—यस्माद्धरौ स्मृते संकीर्तिते ध्याते पातकं संक्षयं याति । तस्मात्केश-वभक्तानां क्वचिदपि भयं न विद्यत इत्यन्वयः ।। १९४ ।।

**स्मृ.कृष्णाचार्य—**एवं भगवत्स्मरणस्य महामाहात्म्यमुक्त्वा तथा तत्कीर्तन-ध्यानादेर्महामाहात्म्यं पुनः प्रमाणेनाह— **कलाविति** ।। कलौ युगे हरौ स्मृते माहात्म्यज्ञानपूर्वकं सम्यक्स्मृते। संकीर्तिते कृष्णरामादिनाम अर्थानुसन्धानपूर्वकं सम्यक् नाम कीर्तिते सति । तथा ध्याते चिदानन्दाद्यात्मकत्वादियथायोग्यगुणै-रुपासने क्रियमाणे सति । केशवभक्तानां पातकं ब्रह्महत्यादिसमस्तपातकं संक्षयं याति । अतः केशवभक्तानां भयं जननमरणादिसांसारिकभयं न विद्यते । अतो भगवत्स्मरणवत्कीर्तनध्यानादेस्तादृशमहामहिमत्वात्कीर्तनध्यानादि स्वस्वरूपोद्धा-रार्थं सर्वैः कार्यमिति ।। १९४ ।।

कृष्णामृतमहार्णवः

[४७]अध्येतव्यमिदं शास्त्रं श्रोतव्य[१]मनसूयया ।
भक्तेभ्यश्च प्रदातव्यं धार्मिकेभ्यः पुनःपुनः ।। १९५ ।।

**ताम्रपर्णी—**उपक्रमे कथितः श्रुतः यो ददात्यमृतत्वं हीति शास्त्रश्रवणं व्याख्यानं च कर्तव्यमित्युक्तम् । किं तच्छास्त्रं श्रोतव्यं व्याख्येयं चेत्यतोऽस्मद्विरचितस्य प्रस्तुतस्य ग्रन्थस्यैव शास्त्रस्य सर्वशास्त्रनिर्णयात्मकत्वादवश्यमिदं शास्त्रं श्रोतव्यं व्याख्येयं च मुमुक्षुणेति सेत्थंभावमाह— **अध्येतव्यमिति** ।। इदं शास्त्रं कर्तरि गुरौ प्रतिपाद्ये चानसूयया अतिशयासहिष्णुत्वलक्षणासूयात्यागेन पुनःपुनः पुस्तकमुखेनाध्येतव्यम् । तटस्थतया श्रोतव्यं च । धार्मिकेभ्यः स्ववर्णाश्रमविहित-धर्मानुष्ठानभक्त्यादिमद्भ्यो "भक्तिमान् परमे विष्णौ यस्त्वध्ययनवान्नरः" इत्यादिनो-क्ताधिकारिभ्यां अनसूयया उपदेशेऽस्यापि ज्ञानं भविष्यतीत्यनसूयया पुनःपुनः प्रदातव्यं अनुग्रहपूर्वं दातव्यं व्याख्येयं च । "ॐ आवृत्तिरसकृदुपदेशात् ॐ" "ॐ प्रदानवदेव हि तदुक्तम् ॐ" इत्यादेरिति भावः ।। १९५ ।।

**उमर्जी—**स्वकृतग्रन्थं समापयन् इदमुपादेयमेव मुमुक्षूणामित्याह— **अध्येतव्य-मिति**।। इदं समापितं प्रकरणं अध्येतव्यम् । कुत इत्यत उक्तम् ।। **शास्त्रमिति**।। शास्त्रमुख्यार्थत्वाच्छास्त्रसंग्रहरूपत्वाद्वा । कथमस्याध्ययनं घटत इत्यत उक्तम् ।।

१. 'अनसूयुना' इति कासंरी पाठः ।

**श्रोतव्यमिति** ।। श्रवणं सर्वदा योग्यमित्युक्तेः । गुरुणेति शेषः । अनसूयया असूयादिदोषरहितया । भक्तिपूर्वकेणेति यावत् । चोऽवधारणे । भक्तेभ्य एव प्रदातव्यम् । भक्ता कीदृशा इत्यत उक्तम् ।। **धार्मिकेभ्य इति** ।। भगवत्प्रीतिकरधर्मानुष्ठानेभ्यः ।। १९५ ।।

**उपेन्द्र**—फलसाधनत्वात्स्वकृतग्रन्थ एवोपादेय इत्याह— **अध्येतव्यमिति** ।। इदं कृष्णामृतमहार्णवाख्यं शास्त्रं "पुराणं चैतदात्मकम्" इति शास्त्रत्वेनोक्तेः । शास्त्रमुख्यार्थत्वाद्वा । अध्येतव्यं आवर्तनीयम् । तत्कथं घटत इत्यत उक्तम् ।। **श्रोतव्यमिति** ।। गुरुणेति शेषः । अनसूयया दोषराहित्येन भक्त्येति यावत् । गुरुदेवभक्तेभ्य एव प्रदातव्यं उपदेष्टव्यम् । भक्तिमत्त्वं केन ज्ञेयमित्यत उक्तम् ।। **धार्मिकेभ्य इति** ।। भगवद्धर्मानुष्ठानेन भक्तिमत्त्वं ज्ञेयमित्यर्थः ।। १९५ ।।

**कोनेरी**—इदं कृष्णामृतमहार्णवनामकं शास्त्रं पौनःपुन्येनाभ्यसनीयमित्याह— **अध्येतव्यमिति** ।। इदं कृष्णामृतमहार्णवाख्यं ग्रन्थं शास्त्रं त्रिविधाधिकारिभिः गुरुमुखेन श्रोतव्यम् । श्रुत्वा वारं वारमध्येतव्यमभ्यसनीयमित्यर्थः । केनेत्यत उक्तम् ।। **अनसूयुनेति** ।। स्वोत्तमेष्वसूयारहितेन स्वयमभ्यस्य धार्मिकेभ्यो स्वावरेभ्यो भगवद्भक्तेभ्यो पुनःपुनः दातव्यमित्यन्वयः ।। १९५ ।।

**स्मृ.कृष्णाचार्य**—एवमनेकप्रमाणजालैर्भगवद्विषयकाचंनसंस्पर्शनध्यानकीर्तनादिकं, तथा भगवत्सालग्रामसन्निहितविष्ण्वभिषिक्ततीर्थप्राशनं नैवेद्यभक्षणादिकं, एकादशीव्रतानुष्ठानेन कालनिर्णयं, दशमीवेधे द्वादश्युपवासं, अतिरिक्तद्वादश्युपवासश्रवणद्वादश्युपवसकरणं, तदकरणे प्रत्यवायं, करणे फलाधिक्यं, एकादश्यधिकारिनिर्णयादिकं, पुनरनेकवैष्णवधर्मादिकं च सप्रपञ्चं अभिधाय स्वकृतग्रन्थं

---

४७. धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा ।
तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ।। ४ ।।
विद्या वै ब्राह्मणमाजगाम गोपाय मां शेवधिस्तेऽहमस्मि ।
असूयकायाऽनृजवेऽयताय न मां ब्रूया वीर्यवती तथा स्याम् ।। ५ ।।
यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्तेन द्रुह्येत्कतमांश्च नाह तस्मै मां ब्रूया निधिपाय ब्रह्मन् ।। ६ ।।विष्णुस्मृतौ अ.२९.

समापयिषुराचार्यवर्यः स्वकृतग्रन्थस्य विषये स्वभक्तैः कर्तव्यमाह— **अध्येतव्यमिति** ।। इदं शास्त्रमनेकप्रमाणोदाहरणपूर्वकं कृतं शास्त्रं भक्तानां शिक्षारूपं कृष्णामृतमहार्णवाख्यं सर्वैर्मुमुक्षुभिरध्येतव्यं सम्यगुपनिषदादिवद्गुरुमुखेनाध्ययनमर्थावधारणं च कर्तव्यम् । इदं शास्त्रं श्रोतव्यं नियमेन गुरुमुखात् श्रवणं कर्तव्यम् । कथमित्यत उक्तम् ।। **अनसूययेति** ।। किञ्च भक्तेभ्यः प्रदातव्यं भक्तेभ्यः हरिभक्तेभ्यः इदं शास्त्रं अनेकधा लिखित्वा पठनाद्यर्थं प्रदातव्यम् । तथा व्याख्यात्रा गुरुणा स्वभक्तेभ्यः स्वशिष्येभ्यः प्रदानं कर्तव्यम् । धार्मिकेभ्यः केवलनिवृत्तवैष्णवधर्मनिष्ठेभ्यः महात्मभ्यश्च प्रदातव्यम् । पुनःपुनरनसूययेति अध्येतव्यं श्रोतव्यं प्रदातव्यमिति सर्वत्र सम्बद्ध्यते । इदं सर्वैर्भक्तैर्धार्यमिति ।। १९५ ।।

**कृष्णामृतमहार्णवः**

**[४८]अधीयान इदं शास्त्रं विष्णोर्माहात्म्यमुत्तमम् ।**
**सर्वपापविनिर्मुक्तः प्राप्नोति च परं पदम् ।। १९६ ।।**

**ताम्रपर्णी**—शास्त्रस्य स्वविषयत्वे तच्छ्रवणव्याख्यानमात्रेण कथं विष्णुरमृतत्वं दद्यात् । प्रतिबन्धकपापानां भावाच्चेत्यत आह— **अधीयान इति** ।। माहात्म्यप्रतिपादकत्वान्माहात्म्यम् ।। १९६ ।।

**उमर्जी**—अध्येतृफलमाह— **अधीयान इति** ।। कथमध्ययनमात्रेण मुक्तिरित्यत उक्तम् ।। **विष्णोरिति** ।। यतो माहात्म्यं माहात्म्यप्रतिपादकम् । अतः सर्वपापनिवृत्तिः सम्भवतीति भावः ।। १९६ ।।

**उपेन्द्र**— अध्येतृफलमाह— **अधीयान इति** ।। अध्ययनकर्तरि माहात्म्यप्रतिपादकम् ।। १९६ ।।

**कोनेरी**—एतच्छास्त्राध्येतुः फलमाह— **अधीयान इति** ।। इदं कृष्णामृतमहार्णवाख्यं शास्त्रं तथा तत्र प्रतिपादितं विष्णोर्माहात्म्यं चाधीयानः पुमान् सर्वपापैर्विनिर्मुक्तः सन् परमं पदं मोक्षं प्राप्नोतीत्यन्वयः ।। १९६ ।।

---

४८. प्रकाशयितुमात्मानं भक्तानां हितकाम्यया ।
अवतीर्णो जगन्नाथः शास्त्ररूपेण वै प्रभुः ।। शाण्डिल्यस्मृतौ ४-१९३ ।।

**स्मृ.कृष्णाचार्य**—तथा इदं शास्त्रं कृतं कृष्णामृतमहार्णवाख्यं अधीयानः अध्ययनार्थावधारणपठनादिकं कुर्वन् भक्तः सर्वपापविनिर्मुक्तः मनोवाक्कायकृतपापैः सञ्चितपापैर्विनिर्मुक्तस्सन् परमं सर्वोत्तमपदं विष्णोः स्थानं प्राप्नोति । अत इदं शास्त्रं वेदादिवदध्येतव्यमिति। अस्य शास्त्रस्यैतादृशफलदातृत्वं कुत इत्यत उक्तम् ।। **विष्णोर्माहात्म्यमुत्तममिति**।। विष्णोर्माहात्म्यमस्मिन्मुख्यतया प्रतिपाद्यं यतः अतः उत्तममिदं विष्णोः शास्त्रं महामहिमप्रतिपादकत्वेन सर्वशास्त्रेषु उत्तमत्वेन सर्वपापविमुक्तिद्वारा विष्णुलोकप्रापकत्वात्सदा भक्तैरिदमध्येतव्यमिति भावः ।। १९६ ।।

### कृष्णामृतमहार्णवः

**श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम् ।**
**श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षं च [1]विन्दति ।। १९७ ।।**

**ताम्रपर्णी**—श्रवणावृत्तिः कर्तव्येत्युक्तम् । तत्कुतः । सकृदनुष्ठानेन फलसम्भवात् । किञ्चापरोक्षज्ञानस्यैव मोक्षहेतुत्वात् श्रवणस्य कथमित्यत आह— **श्रुत्वेति** ।। श्रुत्वा अन्तःकरणशुद्ध्यापादकं निवृत्तधर्मं विजानाति । श्रुत्वा दुर्मतिं संशयविपर्ययलक्षणां त्यजति । श्रुत्वा ज्ञानं परोक्षज्ञानमवाप्नोति श्रुत्वा अपरोक्षज्ञानं च प्राप्नोति । श्रुत्वा मोक्षं लिङ्गभङ्गं आनन्दाभिवृद्धिं च विन्दतीत्यर्थः । ननु—

श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ।। इति अनुव्याख्याने ।।

इत्यत्र श्रुत्वा विपर्ययं संशयं त्यजति । ध्यात्वा ब्रह्मदर्शनं लभत इत्युक्तत्वात् "तमेवं विद्वान्" इत्यादौ अपरोक्षेणैव मोक्ष इत्युक्तत्वाच्च विरोध इति चेन्न । श्रवणनिवर्त्ययोः संशयविपर्यययोः उपक्रमोपसंहारेषु युक्त्यनुसन्धानेन निवर्त्यत्वात् । श्रुत्वा परोक्षज्ञानानन्तरं च चतुर्मुखोपदेशेन लिङ्गभङ्गोक्तेश्च विरोधाप्रतिभासात् ।। १९७ ।।

---

१. 'गच्छति' इति कोनेरी पाठः ।

**उमर्जी**—एवं प्रसङ्गात्साधनविशेषाणां कर्तव्यत्वमुक्त्वा क्रमप्राप्ताद्यपद्योक्तश्रवणस्य कर्तव्यत्वमाह— **श्रुत्वेति** ।। धारकत्वाद्धर्मो भगवान् तं । विजानाति परोक्षतो जानाति । श्रुत्वा निश्चिततत्त्वः दुर्मतिं दुःखसाधनरूपदुःशास्त्राभ्यासमतिं दुर्विषयमतिं वा । स्वातन्त्र्यादिबुद्धिम् । स्वोपास्यं गुरुणा श्रुत्वा अपरोक्षज्ञानं अवाप्नोति श्रुत्वा मोक्षं च विन्दति ।। १९७ ।।

**उपेन्द्र**—एवं प्रासङ्गिकमुक्त्वा क्रमप्राप्ताद्यपद्योक्तश्रवणस्य फलसाधनत्वमाह— **श्रुत्वेति** ।। धारकत्वाद्धर्मो भगवान् तं विजानाति अपरोक्षतो जानाति । श्रुत्वा निश्चिततत्त्वः दुर्मतिं दुष्टशास्त्रमतिं त्यजति । स्वोपास्यं नियतगुरुणा श्रुत्वा अपरोक्षरूपं ज्ञानमवाप्नोति । गम्यं भगवन्तं श्रुत्वा मोक्षं च विन्दति ।। १९७ ।।

**कोनेरी**—उक्तमेव विशदयति— **श्रुत्वेति** ।। श्रुत्वा श्रवणमात्रेण धर्मं जानाति । श्रुत्वा दुर्मतिं त्यजति । श्रुत्वा ज्ञानमपरोक्षज्ञानमवाप्नोति । श्रुत्वा मोक्षं च गच्छति । एतच्छास्त्रमिति सर्वत्र सम्बन्धः ।। १९७ ।।

**स्मृ.कृष्णाचार्य**—स्वकृतग्रन्थस्य श्रवणादिमात्रेणानिष्टनिवृत्तीष्टप्राप्तिरूपफलदत्वादवश्यं श्रवणादिकं कार्यमित्याह— **श्रुत्वेति** ।। स्वकृतमिदं शास्त्रं श्रुत्वा धर्मं प्रवृत्तिनिवृत्तिरूपधर्मं विजानाति विशेषेण जानाति । तथा इदं शास्त्रं श्रुत्वा दुर्मतिं नानाविधदोषदुष्टबुद्धिं त्यजति । इदं श्रुत्वा ज्ञानं श्रवणमनननिदिध्यासनादिजन्यं भगवदपरोक्षज्ञानं चावाप्नोति । भक्तस्तेन मोक्षं च स्वस्वरूपानन्दाविर्भावलक्षणं मोक्षं च विन्दति प्राप्नोति । तस्मादुक्तचतुर्विधफलसाधनत्वात्तच्छ्रवणं सदा कार्यमिति ।। १९७ ।।

कृष्णामृतमहार्णवः

**तस्मादिदं [1]सदा श्राव्यं श्रोतव्यं च सदैव हि ।**
**कुतर्कदावदग्धेभ्यो न दातव्यं कदाचन ।। १९८ ।।**

**ताम्रपर्णी**—श्रवणाद्यावृत्तेः कर्तव्यत्वमुपसंहरति— **तस्मादिति** ।। यत एवं श्रवणाद्यभ्यासेनैव फलपर्यवसानम् । तस्मादिदं भक्तानां सकाशात्सदा श्रोतव्यम्।

---

१. 'सदासेव्यं' इति स्मृ.कृ. तथा कृ. पाठ. ।

भक्तानां भक्तेभ्यस्सदैव दातव्यं पुनःपुनर्व्याख्येयम् । यद्वा सदा भक्तानामनादिभक्तानामेव दातव्यम् । नतु प्रयोजनाय आगन्तुकभक्तिमताम् । सदैव निरन्तरं कुतर्कदावदग्धेभ्यो भगवद्द्वेषिभ्यश्च कदाचन कदापि न दातव्यम् ।। १९८ ।।

**उमर्जी**—उक्तार्थमुपसंहरति— **तस्मादिति** ।। पुरुषार्थसाधनत्वादिदं कृष्णामृतमहार्णवाख्यं शास्त्रं सेव्यं भजनीयम् ।। न स्वबुद्ध्येत्याह— **श्रोतव्यमिति** ।। चोऽवधारणे । नायोग्यायोपदेष्टव्यमित्याह— **कुतर्कदावदग्धेभ्य इति** ।। आगमविरुद्धतर्कः कुतर्कः स एव वनवह्निः सतां मनस्तापकरत्वात्तेन दग्धेभ्यः मृतप्रायेभ्यः हिताहितज्ञानशून्येभ्य इति यावत् ।। १९८ ।।

**उपेन्द्र**—पुरुषार्थसाधनत्वादिदमेव सेव्यमित्युपसंहरति— **तस्मादिति** ।। फलसाधनत्वादिदं कृष्णामृतमहार्णवाख्यं शास्त्रं सेव्यमभ्यसनीयं न स्वबुद्ध्येत्याह— **श्रोतव्यमिति** ।। चोऽवधारणे । श्रोतव्यमेव । नायोग्यायोपदेष्टव्यमित्याह— **कुतर्कदावदग्धेभ्य इति** ।। आगमादिविरुद्धस्तर्कः स एव दावो वह्निस्तेन दग्धेभ्यः दुःशास्त्राभ्यसनेनैव स्वरूपहानिं प्राप्तेभ्यः ।। १९८ ।।

**कोनेरी**—फलितमाह— **तस्मादिति** ।। यस्मादिदं शास्त्रं चतुर्विधपुरुषार्थप्रदं तस्मात्सदा सेव्यं सेवनीयम् । "श्रोतव्यं च सदैव हि" इति हिशब्दः प्रसिद्धिद्योतकः । कुतर्कदावदग्धेभ्योऽनधिकारिभ्यो न दातव्यं नोपदेष्टव्यमित्यर्थः ।। १९८ ।।

**स्मृ.कृष्णाचार्य**—उक्तमुपसंहरन् अयोग्येभ्यो न दातव्यमित्याह— **न दातव्यमिति** ।। तस्माच्छ्रवणादिना बहुफलवत्त्वादिदं शास्त्रं सदा सेव्यम् । सद्भिः सदा आसेव्यं आ सम्यक् सेव्यं पठनादिना सदासेव्यम् । श्रोतव्यं गुरुद्वारा तदर्थादिकं श्रोतव्यम् । किन्तु कुतर्कदावदग्धेभ्यः कुत्सिततर्कशास्त्रोक्तकुतर्काभ्यासरूपदावाग्निदग्धेभ्यो हेतुवादिभ्यो दुष्टेभ्यः कथञ्चन केनापि प्रकारेण न दातव्यम् ।

---

४९. अभक्तानामनर्हाणां सच्छास्त्रं श्रूयतेऽपि वा ।
अन्यथा प्रतिभात्येव विषाक्तानां यथा पयः ।। शाण्डिल्यस्मृतौ ४-१९२ ।।
अयोग्येषु वदञ्छास्त्रं सन्मार्गात्प्रच्युतो भवेत् ।
ऊषरे निपतद्बीज षण्ढे कन्यां प्रयोजयन् ।। शाण्डिल्यस्मृतौ ४-२८५ ।।

श्रद्धारहिततामसजनेभ्यो न दातव्यम् । किन्तु सात्विकजनेभ्य एव दातव्यमिति भावः ।। १९८ ।।

- कृष्णामृतमहार्णवः

**संसारविषपानेन ये मृताः प्राणिनो भुवि ।**
**अमृताय [१]स्मृतस्तेषां कृष्णामृतमहार्णवः ।। १९९ ।।**

**ताम्रपर्णी**—कुतः स्वाभाविकभक्तेभ्यो दातव्यं नान्येभ्य इत्यतः स्वग्रन्थस्योक्ता-न्यधिकारिविषयप्रयोजनानि स्मारयति— **संसारेति** ।। मृता 'विमुक्तश्च विमुच्यत' इति श्रुतेर्बन्धस्यानाद्यभिमानहेतुकत्वादस्वरूपत्वान्मृताः । प्राणिनः प्राणानुग्रहकारिणः येऽधिकारिणः । संसारविषपानेन । "विषयान्विषसन्निभान्" इत्यादेः सांसारिकदुर्विषयाख्यविषपानेन स्वीयत्वाभिमानेन तदनन्तरं तस्य पानेनोपभोगेन च स्वातन्त्र्यानुभवेन संसरत्यनेनेति संसारो देहो मनश्च । भूतबंधो हि बन्धः । "मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इत्यादेस्तदेव विषं स्वरूपतिरस्कार-कत्वात् तस्य पानेन स्वीयत्वाभिमानेन देहादावहंममाभिमानो भ्रमः । "अतो मनोऽ-भिमानेन दुःखी जीवो नचान्यथे"त्यादेः ततश्च तत्कृतदुःखादिरूपविषयस्य पानेन सुखी दुःखीत्याद्यनुभवेन "नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयत" इति वचनात् दुःखादिकृतनीचोच्चतालक्षणभोगेन च स्वरूपतिरस्कारं प्राप्ताः प्राणिनः प्राणाश्चक्षुरा-दीन्द्रियाणि तद्वन्तः ममैतानीन्द्रियाणीति करणाभिमानवन्तो जीवाः तेषाममृताय अमृतत्वाय स्वरूपाभिव्यक्तये । कृष्ण एवामृतः स्मरणमात्रेण स्वरूपोज्जीवनहेतुत्वा-त्तेन प्रतिपाद्येन महार्णव इति क्षीरसागर इव विद्यमानः । कृष्णामृतमहार्णवाख्यो ग्रन्थः स्मृतः कृतः "समाधिनाऽनुस्मर यद्विचेष्टितम्" इत्यत्र "स्मरणं ग्रन्थकृतिः"

---

१. 'कृतः' इति ताम्र. पाठः ।

<u>४९.</u> नापृष्टः कस्यचिद्ब्रूयान्नचान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ।। ११० ।।
अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वाऽधिगच्छति ।। १११ ।।
विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना ।
आपद्यपि हि घोरायां नत्वेनामिरिणे वपेत् ।। ११२ ।। मनुस्मृतौ अ.२ ।।

इति भगवत्पादोक्तेः । कृत इति क्वचित्पाठः । तथाच मोक्षयोग्याधिकारित्वान्ना-योग्येभ्यो दातव्यमिति भावः ।। १९९ ।।

**उमर्जी**—नन्वस्य ग्रन्थस्य कथममृतमहार्णवरूपत्वमित्यतः तदुपपादयति— **संसारेति** ।। संसारे विद्यमानविषयरूपविषस्य पानेन सेवया । मृताः हिताहित-ज्ञानशून्या इति यावत् । कृष्णेन व्यासेन प्रतिपादितवाक्यरूपाणि अमृ-तानि यस्मिन् तत्कृष्णामृतमहार्णवम् । अत्र लिङ्गव्यत्ययः छन्दस्तुल्यत्वज्ञापनार्थः। अमृतांय अमृतवत्स्वभक्तभूत्यै स्मृतः । "श्रीकृष्णामृतपरमार्णवाभिधानां चक्रे सद्वचनततिं स्वभक्तभूत्यै" इति मध्वविजयोक्तेः ।। १९९ ।।

**उपेन्द्र**—ग्रन्थनाम्नः सार्थक्यमुपपादयति— **संसारविषपानेनेति** ।। सांसारिक-विषवद्वर्तमानविषयानुभवेन मृताः मृतप्रायाः हिताहितज्ञानशून्या इति यावत् । कृष्णेन प्रतिपादितामृतरूपवाक्यानि यस्मिन्तत् कृष्णामृतमहार्णवं । शास्त्रवाचक-त्वादर्णवशब्दस्य नपुंसकत्वम् । कृतग्रन्थस्य छन्दस्तुल्यत्वज्ञापनाय वा लिङ्ग-व्यत्ययः । "श्रीकृष्णामृतपरमार्णवाभिधानां चक्रे सद्वचनततिं स्वभक्तभूत्यै" इति मध्वविजयोक्तेः ।। १९९ ।।

**कोनेरी**—कृष्णामृतमहार्णवकरणप्रयोजनमाह— **संसारविषपानेति** ।। संसार-लक्षणविषपानेन मृताः मृतप्रायाः । येऽल्पाधिकारिणो भक्ताः तेषाममृताय मोक्षप्राप्तये स्मृतम् । स्मृत्यादिष्वित्यर्थः । एतादृशकृष्णामृतमहार्णवं कृतवानिति शेषः ।। १९९ ।।

**स्मृ.कृष्णाचार्य**—एवं शिक्षामभिधाय स्वकृतग्रन्थस्य प्रयोजनमाह— **संसा-रेति** ।। संसरत्यस्मिन्निति संसारे मनुष्यदेहादौ पुत्रमित्रकलत्रादिष्वभिमानरूप-विषपानेन अनुभवेन ये मृताः स्वात्मोद्धारविषये इतिकर्तव्यतारूपज्ञानराहित्येन मृताः मृतप्राया ये प्राणिनः । तथा संसारे गर्भवासजननमरणनरकदुःखरूपविष-पानेन ये मृताः जीवन्मृता ये प्राणिनो नानाविधसज्जनप्राणिनो भुवि वर्तन्ते । तेषां अमृतयोग्यजीवानाममृतत्वाय मृतिराहित्याय । यद्वा संसारे नानाविधविषया-नुभवरूपविषपानेन ये मृताः जीवन्मृताः । प्राणिनः मुख्यप्राण एव स्वामित्वेन येषामस्ति ते भगवद्भक्ताः मुख्यप्राणसम्बन्धिनः भुवि कर्मभुवि स्वविहितभगव-

च्छ्रवणमननादिना वर्तन्ते तेषां अमृताय संसारलक्षणमृतिराहित्याय तेषां स्वरूपानन्दाविर्भावरूपमोक्षाय कृष्णामृतमहार्णवं श्रीकृष्णस्य अमृतरूपमहागुणार्णवप्रतिपादकं कृष्णामृतमहार्णवाख्यः ग्रन्थोऽस्माभिः कृतः । तस्माद्भक्तानां मोक्षार्थं कृतत्वादयं ग्रन्थः सद्वैष्णवैः सर्वैस्सेव्य इति भावः ।। १९९ ।।

**कृष्णामृतमहार्णवः**

**क्लिन्नं पादोदकेनैव यस्य नित्यं कलेवरम् ।**
**तीर्थकोटिसहस्रैस्तु सेवितैः किं प्रयोजनम् ।**
**तोयं यदि पिबेन्नित्यं शालग्रामशिलाच्युतम् ।। २०० ।।**

**ताम्रपर्णी**—एवमर्चनादिना षण्णां मोक्षहेतुत्वमुपपाद्य तदर्चनशेषपादोदकधारणं कार्यमिति भावेन त्रिरात्रफलदा नद्य इत्यादिना पादोदकमाहात्म्यमुक्तम् । तदुपसंहारव्याजेन प्रमाणान्तरेणोपपादयति— **क्लिन्नमिति** ।। न केवलं पादोदकस्नानमात्रमपेक्षितं किन्तु पानं चेत्याह— **तीर्थकोटीति** ।। २०० ।।

**उमर्जी**—समापितग्रन्थोऽपि भगवानाचार्यः—

पुनःपुनः कथां प्राहुरभ्यासादुत्तमं फलम् ।
विज्ञापयितुकामास्ते विद्वांसः शिष्टसम्मताः ।।

इति तत्र तत्र प्रमाणानुसारात् सिंहावलोकनन्यायेन सिद्धावलोकनन्यायेन वा पादोदकनिषेवणरूपसाधनस्य फलमाह— **क्लिन्नमिति** ।। अत्र एवशब्दः प्रधानार्थकः । "सामीप्ये च प्रधाने च एवशब्दोऽवधारणे" इत्युक्तेः । सर्वतीर्थप्रधानपादोदकेनेत्यर्थः । यस्य कलेवरं क्लिन्नं यस्तोयं पिबेत्तस्येति सम्बन्धः ।। १९७ ।।

**उपेन्द्र**—समापितग्रन्थोऽपि भगवानाचार्यः—

पुनःपुनः कथां प्राहुरभ्यासादुत्तमं फलम् ।
विज्ञापयितुकामास्तु विद्वांसस्तत्र तत्र हि ।।

इति प्रमाणं मनसि निधाय आदरात्पदाम्बुजनिषेवणादिसाधनविशेषस्य कर्तव्यत्वं स्मारयति— **क्लिन्नमिति** ।। अत्र एवशब्दः प्रधानार्थकः । "सामीप्ये च प्रधाने च एवशब्दोऽवधारणे" इत्युक्तेः । सर्वतीर्थाधिकपादोदकेनेत्यर्थः । यस्य कलेवरं शरीरं क्लिन्नं सिक्तम् । यस्तोयं पिबेत् तस्येति पूर्वेण सम्बन्धः ।। २०० ।।

**कोनेरी—**ग्रन्थकरणप्रयोजनमुक्त्वा पुनः शालग्रामोदकमाहात्म्यं वक्ति—**क्लिन्नमिति** ।। यस्योत्तमाधिकारिणो कलेवरं हरिपादोदकेन सालग्रामोदकेन वा क्लिन्नं हरिचरणारविन्दोदकमिति भक्त्या स्नातं पीतं च तस्योत्तमाधिकारिणः तीर्थकोटिसहस्रैः सलिलैः गङ्गासलिलातिरिक्तसलिलैरित्यर्थः । गङ्गसलिलस्य रुद्रादिभिः शिरसा ध्रियमाणत्वेन तदन्यतीर्थजलैः किं प्रयोजनम् । न किमपि । तदुक्तं—

प्रायेण तीर्थाधिगमोपदेशैः स्वयं हि तीर्थानि पुनन्ति सन्तः ।
तीर्थीकुर्वन्ति तीर्थानि स्वात्मस्थेन गदाभृता ।। इति भागवते ।।

यस्याल्पाधिकारिणः कलेवरं पादोदकेन सालिग्रामोदकेनैव क्लिन्नं स्नातं तथा सः अल्पाधिकारी सालिग्रामशिलाच्युतं तोयं च नित्यं पिबेत् । तस्य तीर्थकोटिसहस्रैर्देवैरभिमन्यमानैः सलिलैः किम् । न किमपि प्रयोजनमिति । अयमाशयः अल्पाधिकारी देहशुद्ध्यर्थं यात्रां कुर्वन् तीर्थेषु स्नात्वा तत्सलिलैः सालग्रामसहितं हरिं सम्पूज्य तोयं पिबन् शिरसि धारयेत् । तदान्तःकरणशुद्धिद्वारा अपरोक्षज्ञानमाप्नोति । यदि एवं न कुर्यात् तदा तीर्थसलिलैः किमपि प्रयोजनं नेत्यर्थः ।। २०० ।।

**कृष्णामृतमहार्णवः**

**[५०]शालग्रामशिलास्पर्शं ये कुर्वन्ति दिनेदिने ।**
**वाञ्छन्ति करसंस्पर्शं तेषां देवाः सवासवाः ।। २०१ ।।**

---

५०. न जपो नाधिवासश्च नच संस्थापनक्रिया ।
शालग्रामार्चने विष्णुः तस्मिन्सन्निहितस्तथा ।। १७८ ।।
अर्चनं वन्दनं दानं प्रणामं दर्शनं नृणाम् ।
शालग्रामशिलायां तु सर्वं कोटिगुणं भवेत् ।। १८१ ।।
सः स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
यो वहेच्छिरसा नित्यं सालग्रामशिलाजलम् ।। १८२ ।।
शालग्रामशिलायां तु पूजयेत्पुरुषोत्तमम् ।
पूजितस्तुलसीपत्रैर्दद्यादिह मवन्ने हरि ।। १९१ ।।
यः श्राद्धं कुरुते विप्र शालग्रामशिलाग्रतः ।
पितृणां तत्र तृप्तिः स्याद्वयाश्राद्धादनन्तरम् ।। १९२ ।।वृद्धहारीतस्मृतौ अ.५ ।।

**ताम्रपर्णी**—शालग्रामस्यातिशयमुपपादयति— **शालग्रामेति** ।। यथा श्रीरङ्गादिक्षेत्रस्य भगवत्प्रतिमासंस्पृष्टत्वेन तत्स्पर्शं वाञ्छन्ति । यथा वा हर्यर्पिततुलसीस्पर्शं वाञ्छन्ति । तथा सवासवा: देवा: शालग्रामशिलास्पर्शिकरसंस्पर्शं वाञ्छन्ति। करस्यापि क्षेत्रतुल्यत्वाद्भगवत्यर्पितत्वाञ्चेति भावः । एतत्करसंस्पर्शं वाञ्छन्ति इत्यर्थः । तेषामभयप्रदानाय स्वकरस्पर्शं वा ते वाञ्छन्तीत्यर्थः ।। २०१ ।।

**उमर्जी**—सालग्रामतीर्थमेव पादोदकमित्यभिप्रायेण तत्स्पर्शफलमाह— **सालग्रामेति** ।। स्पर्शं तत्स्थभगवत्पादयोः षोडशोपचारपूजार्थमिति शेषः । अत एव शिलायां भगवतः स्थितत्वादेव भगवत्पादस्थितचक्राख्यचिह्नदर्शनात् चक्रविशिष्टशिलायां पूजितायां भगवानपि पूजितो भवति । मन्दाधिकारिणां हि प्रतीकस्थितत्वेनैव पूज्यत्वात् । अत एवोक्तम्— "न प्रतीके नहि सः" इति सूत्रे भाष्ये च। तेषां करस्पर्शं वाञ्छति । अङ्गीकुर्वन्तीत्यर्थः । तेषामनुग्रहार्थं एते भगवदर्चां कृत्वा मदीया इति हस्तावलम्बनं कुर्वन्तीति भावः ।। २०१ ।।

**उपेन्द्र**—सालग्रामशिलास्पर्शम् । पूजनार्थमिति शेषः । तेषामिति कर्तरि षष्ठी । सालग्रामशिलास्पर्शकर्तृपुरुषैः क्रियमाणकरस्पर्शं वाञ्छन्ति अङ्गीकुर्वन्तीत्यर्थः ।। २०१ ।।

**कोनेरी**—निरन्तरं सालग्रामशिलास्पर्शं कुर्वतां मन्दाधिकारिणां फलमाह— **सालग्रामशिलास्पर्शमिति** ।। ये मन्दाधिकारिणः सालग्रामशिलास्पर्शं दिनेदिने प्रतिदिनं भक्त्या कुर्वन्ति । तानुद्धर्तुं वासवेन सहिताः देवाः तेषां करस्पर्शं वाञ्छन्ति । एते हरिभक्ता इति तान् स्वकरैर्धृत्वोद्धरिष्याम इति । यद्वा तेषां करस्पर्शाद्दीयमानस्य वैश्वदेवादिरूपेण दीयमनस्य करस्य स्पर्शं स्वीकारं वाञ्छन्ति ।। २०१ ।।

**कृष्णामृतमहार्णवः**

**दुःसहो नारको वह्निर्दुःसहा यमकिंकराः ।**
**विषमश्चान्तकपथः प्रेतत्वं चातिदारुणम् ।। २०२ ।।**

**ताम्रपर्णी**—एवं शालग्रामस्यार्चनीयत्वं तत्तीर्थस्य सेव्यत्वं चोपपाद्य संस्मृतः कीर्तित इत्युक्तयोः स्मरणकीर्तनयोः विषयवैराग्यं साधनम् । वैराग्ये च संसारा-

सारत्वपरिज्ञानं कारणमिति भावेनाह— **दुःसह इति** ।। प्रेतत्वं प्रेतशरीरावस्थानम् ।। २०२ ।।

**उमर्जी**—श्रवणस्य पुरुषार्थसाधनत्वप्रकारमाह— **दुःसह इति** ।। नारकः नरकसम्बन्धी वह्निः वह्निवत्तापपकरत्वात् यातना । आकृतिस्वरादिना दुःसहाः। अन्तकपथः यममार्गः विषमः दुर्गमः ।। २०२ ।।

**उपेन्द्र**—स्वकृतग्रन्थस्य वैराग्यसाधकत्वप्रकारमुपपादयति— **दुःसह इति** ।। नारकः नरकसम्बन्धी वह्निः दुःसहः सोढुमशक्यः । यमकिंकराः आकृतिस्वरादिना दुःसहाः । अन्तकपथः यममार्गः विषमः निम्नोन्नतत्वादिना दुर्गमः । अर्चनाद्यकरणे एवमनर्थः ।। २०२ ।।

**कोनेरी**—अधिकारिणा एवं ज्ञात्वानुष्ठेयमित्याह— **दुस्सह इति** ।। नरकसम्बन्धिलोको दुस्सहः सोढुमशक्यः । यमकिंकराः दुस्सहाः । यममार्गोऽपि विषमः अतिदुस्तरः । प्रेतभावोऽप्यतिदारुणः ।। २०२ ।।

**स्मृ.कृष्णाचार्य**—भगवच्चिन्तनस्य नरकादिसर्वदुःखनिवर्तकत्वात्तत्कारणमहापातकनिवर्तकत्वाच्च तत्सदा कार्यमिति श्लोकद्वयेनाह— **दुःसहो नारक इति** ।। नारकः तप्तवालुकादिवह्निः दुःसहः अनुभोक्तुर्दुःसहः यमकिंकराश्च मार्गे बहुताडनादिकर्तृत्वेन उग्ररूपत्वेन च दुःसहाः । अत एव यममार्गो विषमः कण्टकादिनानाकष्टप्रदत्वेन । तथा प्रेतत्वं देहत्यागानन्तरं प्राप्तं यत्प्रेतत्वं तददतिदारुणं अतिदुःख-प्रदत्वादिति ।। २०२ ।।

कृष्णामृतमहार्णवः

**विचिन्त्य 'मनसाऽप्येवं पातकाद्विनिवर्तयेत्'[2] ।**
**स्मरणं कीर्तनं विष्णोस्सदैव न परित्यजेत् ।। २०३ ।।**

**ताम्रपर्णी**—एवं शास्त्रानुगृहीतेन मनसा विचिन्त्य पातकात्पापसाधनात् दुर्विषयान्मनो विनिवर्तयेत्। ततश्च किमित्यतः प्रतिबन्धापगमे स्मरणावृत्तिः

---

१. 'मनसा देवं' इति स्मृ.कृ. तथा क. पाठः ।
२. 'विनिवर्तते' इति स्मृ.क. तथा क. पाठः ।

कर्तव्येत्याह— **स्मरणमिति** ।। उक्तरीत्या दुःखसाधनानुसन्धानेन मनसि विषये-ष्वसक्ते सति अप्रतिबन्धेन शुद्धेन मनसा स्मरणं कीर्तनं च विष्णोस्सदैव न परित्यजेदित्यर्थः ।। २०३ ।।

**उमर्जी**—अतः निवर्तयेन्निवृत्तिं कुर्यात् । उपसंहरति— **स्मरणमिति** ।। २०३ ।।

**उपेन्द्र**—एवं पूर्वोक्तरीत्या भगवन्तं सञ्चिन्त्य पातकात्स्वकृतपातकाद्विनिवर्तयेत् निवृत्तो भवेत् । अतः स्मरणकीर्तनादिकं सदा कार्यमित्याह— **स्मरणमिति** ।। २०३ ।।

**कोनेरी**—एवंप्रकारेण मनसा विचिन्त्य सम्यग्विचार्य मनः पातकाद्विनिवर्तयेत् । पातकान्मनः निवृत्त्य विष्णोः स्मरणं कीर्तनं च सदा कुर्यात् । कदापि नैव परित्यजेत् ।। २०३ ।।

**स्मृ.कृष्णाचार्य**—एवं जनः विचिन्त्य एतत्सर्वदुःखनिवृत्त्यर्थं देवं क्रीडादिगुण-विशिष्टं हरिं मनसा भक्तियुक्तमनसा विचिन्तयेत् विशेषेण सच्चिदानन्दाद्या-त्मकत्वेन ध्यानादिकं कुर्यात् । एवं विचिन्त्य पुरुषः पातकाद्विनिवर्तते नरकादि-साधनभूत-पातकसमुदायाद्विनिवर्तते । तस्माद्धरिचिन्तनं कार्यमिति । तस्माद्विष्णोः पूर्वोक्तरीत्या स्मरणं कीर्तनं च सदा प्रतिक्षणं न परित्यजेदिति पूर्वेण सम्बन्धः ।। २०३ ।।

**कृष्णामृतमहार्णवः**

*** [५१]अच्युतानन्तगोविन्दनामोच्चारण[१]भेषजात् ।।**
**नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ।। २०४ ।।**

**ताम्रपर्णी**—ननु—

जन्मप्रभृति यत्पापं स्त्रियो वा पुरुषस्य वा ।
पुष्करे स्नानमात्रेण तदशेषं प्रणश्यति ।।

---

* अयं श्लोकः नारदपुराणे १-३४-६१ । विष्णुधर्मोत्तरे १-१९६-३१ ।

१. 'भीषिताः' इति स्मृ.कृ. तथा कृ. पाठः ।

५१ अच्युतानन्तगोविन्द इति नामत्रयं हरेः ।
यो जपेत्प्रयतो भक्त्या प्रणवाद्यं नमोऽन्तिकम् ।।
विषभोगाग्निजं तस्य नास्ति मृत्योर्भयं तथा ।। पाद्मे ४-९-८ ।।

इत्यारण्यपर्वभारतवाक्येषु सकृत्पुष्करादितीर्थसेवामात्रेण सर्वपापनिवृत्त्युक्तेः सदा किमर्थं स्मरणं कीर्तनं चानुष्ठेयमित्यत आह— **अच्युतेति** ।। अच्युतानन्तगोविन्देति नाम्नामुच्चारणभेषजादौषधात्सकला बहुजन्मार्जिताः रोगाः रोगहेतवो दोषाः। तथा सकलराजयक्ष्मप्रभृतयो रोगाः नश्यन्ति । अहं यद्वदामि तत्सत्यं सत्यम् । अतस्तीर्थकोटिसहस्रैः सेवितैः किं प्रयोजनं न किमपीति पूर्वेणान्वयः । अल्पस्वे निःस्वप्रयोगदर्शनादल्पप्रयोजनमित्यर्थः । तीर्थस्नानादीनां स्मरणकीर्तनप्रतिबन्धकपापनिवर्तन एव व्यापृतत्वात्स्मरणादेश्च बहुतरपापनिवर्तकत्वादपरोक्षहेतुत्वाच्च तीर्थसेवयाऽल्पप्रयोजनमिति भावः । अत एव भारते—

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ।।

इत्यादिना वैराग्यपूर्वं हरिस्मृतिमननकीर्तनवतः तीर्थसेवाफलप्राप्तिरुक्ता । तीर्थसेवायाः अन्तःकरणशुद्धिद्वारा वैराग्यमुत्पाद्य स्मरणफलकत्वादिति बोध्यम् ।। २०४ ।।

**उमर्जी**—दयालुर्भगवान् अर्चनादिप्रतिबन्धकरोगाद्यरिष्टनिवृत्तये व्यासप्रोक्तमन्त्रविशेषं पठति— **अच्युतेति** ।। उच्चारणरूपभेषजादौषधात् । मन्त्रे अनाश्वासपरिहाराय सत्यमित्युक्तम् ।। स्वस्य अनाप्तत्वशंकापरिहाराय सत्यं वदामीत्युक्तम् ।। २०४ ।।

**उपेन्द्र**—एवं भगवन्नामकीर्तनेनैहिकानिष्टनिवृत्तिरपि भवतीति व्यासवाक्यं पठति— **अच्युतेति** ।। नामविशेषाणम् । नामोच्चारणाख्यभेषजादौषधात् अनाश्वासपरिहाराय सत्यं वदामीत्युक्तम् ।। २०४ ।।

**कोनेरी**—संकीर्तनादवश्यम्भाविफलं व्यासवचनेनाह— **व्यास इति** ।। अच्युतानन्तगोविन्द इति नामोच्चारणादिना रोगशब्दोपलक्षितनरकाद्यनर्थाः नश्यन्तीति, सत्यं सत्यं वदामीति द्विवारोक्त्या शपथपूर्वकं वदामीति भावः । सकलाः रोगाः नश्यन्ति । एतस्मिन् संशयो नास्तीत्याह— **सत्यमिति** ।। २०४ ।।

**स्मृ.कृष्णाचार्य**—भगवद्रूपचिन्तनं तन्नामोच्चारणस्य रोगोपलक्षितसर्वदुःखनिवर्तकत्वात्तत्कर्तव्यमिति व्यासवाक्यं पठति— **अच्युतानन्तेति** ।। अच्युतः चतुर्विध-

नाशरहितः । अनन्तः देशकालाद्यपरिच्छिन्नः । गोविन्दः वेदप्रतिपाद्यः । अच्युतानन्तगोविन्द इति त्रिरूपात्मकहरेः नामत्रयोच्चारणरूपौषधवन्तः ये सकला रोगास्ते नश्यन्ति । भीषिताः इति पाठे सकलरोगनामोच्चारणेन भीषिताः भयं प्रापिताः नश्यन्तीत्यर्थः। मयोक्तमौपचारिकं न भवतीत्याह व्यासः— **सत्यमिति** ।। यद्भगवन्नामोच्चारणस्य सर्वरोगनिवर्तकत्वं तत्सत्यं सत्यं सत्यमेव । यद्वा नश्यन्ति सकला रोगा इति अहं सत्यमेव वदामि नानृतम् । द्विरुक्तिरादरात् । तस्मादच्युतादिनामत्रयोच्चारणं कार्यमिति ।। २०४ ।।

**सत्यं सत्यं पुनस्सत्यं उद्धृत्य भुजमुच्यते ।**
**वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ।।**

**उमर्जी**—ननु विष्णोः सर्वोत्तमत्वे सिद्धे तद्विषयकार्चादेः फलसाधनत्वं स्यात्तदेव कुत इत्यत तदुपपादकं भारतस्थं शपथरूपं व्यासवाक्यं पठति— **सत्यमिति** ।। उक्तार्थदृढीकरणाय सत्यमिति त्रिरुक्तिः । शपथः क्रियत इति ज्ञापनाय भुजमुद्धृत्येत्युक्तम् । किमुच्यत इत्यतः शपथविषयं दर्शयति— **वेदशास्त्रादिति** ।। वेदाः शास्त्राणि इति द्वन्द्वैकवद्भावः । वेदरूपाच्छास्त्रादिति वा । परं उत्तमं प्रमाणं नास्ति । विष्णोः सर्वोत्तमस्य शास्त्रैकसमधिगम्यत्वात्तत्सिद्ध्यर्थमेव शास्त्रस्य सर्वोत्तमप्रामाण्ये शपथः क्रियत इति भावः ।

**उपेन्द्र**—ननु विष्णुसर्वोत्तमत्वे सिद्धे तद्विषयकार्चनादिकमेव फलसाधनं स्यादित्यतः तदुपपादकं शपथरूपं भारतवाक्यं पठति— **सत्यमिति** ।। उक्तार्थे दार्ढ्यज्ञापनाय सत्यमिति त्रिरुक्तिः । शपथः कृत इति ज्ञापनाय भुजमुद्धृत्ये-त्युक्तम् । किमुच्यत इत्यतः शपथविषयं दर्शयति— **वेदशास्त्रादिति** ।। वेदाः शास्त्राणीति द्वन्द्वैकवद्भावः । वेदरूपाच्छास्त्रादिति वा । परमन्यत्सर्वोत्तमत्वज्ञापकं नेत्यर्थः । विष्णोः सर्वोत्तमत्वस्य शास्त्रैकसमधिगम्यत्वात्तत्सिद्ध्यर्थमेव शास्त्रस्य सर्वोत्तमत्वप्रामाण्ये शपथः क्रियत इत्यर्थः ।। २०२ ।।

**कृष्णामृतमहार्णवः**

***सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।**
**बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ।। २०५ ।।**

**ताम्रपर्णी**—पुष्करादितीर्थाटनापेक्षया लाघवं फलाधिक्यं च नामोच्चारणे उपपादयति— **सकृदिति** ।। येन सकृदेकवारमेव हरिरित्यक्षरद्वयमात्रमुच्चारितम् । तेन मोक्षाय मोक्षार्थं गमनं प्रति परिकरः पाथेयलक्षणः साधनविशेषो बद्धः । यद्वा परिकरः वस्त्रदानलक्षणः बद्ध इत्यर्थः ।। २०५ ।।

**उमर्जी**—अतः सर्वोत्तमत्वात्तद्भजनमेव पुरुषार्थसाधनमित्याह— **सकृदिति** ।। येन शास्त्रमुख्यार्थं जानता । परिकरः गमनसाधनभूतः । बद्धः सम्पादितः । अशेषसदागमानां सर्वोत्तमे विष्णौ मुख्यतात्पर्यमिति ।। २०५ ।।

**उपेन्द्र**—अतो भगवद्भजनमेव पुरुषार्थसाधनमित्याह— **सकृदिति** ।। मोक्षाय मोक्षार्थं गमनं प्रति परिकरः पाथेयः बद्धः सम्पादितः ।। २०५ ।।

**कोनेरी**—ज्ञानिभिः सकृदुच्चरितं हरिरित्यक्षरद्वयं मोक्षप्रदमित्याह— **सकृदिति** ।। हरिशब्दप्रवृत्तिनिमित्तपूर्वकं हरिशब्दं ज्ञात्वा हरिरित्यक्षरद्वयं येनाधिकारिणा सकृदुच्चरितं तेन मोक्षाय गमनं प्रति परिकरः कटिबन्धनवस्त्रं मोक्षगमनार्थं कटिबन्धनं करोति । संशयो नास्तीति भावः ।। २०५ ।।

**स्मृ.कृष्णाचार्य**—हरिनामोच्चारणस्य मोक्षसाधनत्वाभिधानात्सदा कार्यमित्याह— **सकृदुच्चरितमिति** ।। येनाधिकारिणा हरिरित्यक्षरद्वयं सकृदेकवारं उच्चरितमभिहितम् । तेनाधिकारिणा मोक्षाय मोक्षार्थं गमनं प्रति ध्यानादिद्वारा मोक्षगमनमुद्दिश्य परिकरः अन्तरङ्गसाधनं बद्धः बद्धो भवति । यतः अतः हरिरित्यक्षरद्वयमुच्चारणीयम् ।। २०५ ।।

कृष्णामृतमहार्णवः

**एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।**
**कीर्तयन्ति [1]सुरश्रेष्ठं देवं नारायणं [2]प्रभुम् ।। २०६ ।।**

---

*अयं श्लोक स्कान्दे २-५-१५-५२ ।— श्लोक २०५

१. 'परं श्रेष्ठं' इति कोनेरी पाठः ।

२. 'विभुम' इति कोनेरी पाठः ।

**ताम्रपर्णी**—भगवन्नामकीर्तने आचारोऽप्यस्तीत्याह— **एवमिति** ।। सुरश्रेष्ठं देवं कीर्तयन्तीत्यर्थः । यद्वाऽच्युतानन्तेति कीर्तयन्तीत्यर्थः ।। २०६ ।।

**उमर्जी**—व्यासोक्तरीत्या भगवद्भजनकर्तारः के इत्यपेक्षायां भगवद्भजने मुख्याधिकारिणो देवा एवेत्याह— **एवमिति** ।। शास्त्रतत्त्वं ज्ञात्वा । ब्रह्मादिभजनीयत्वोपपादकानि देवमित्यादीनि विशेषणानि । कीर्तयन्तीत्युपलक्षणम् । अर्चनध्यानादिकं कुर्वन्तीत्यर्थः ।। २०६ ।।

**उपेन्द्र**—अत्रोक्तरीत्या भजने मुख्याधिकारिणः आह— **एवमिति** ।। शास्त्रोक्तरीत्या चशब्दान्मनुष्योत्तमाः ब्रह्मादिपूज्यत्वज्ञापनाय सुरश्रेष्ठमित्यादीनि विशेषणानि ।। २०६ ।।

**कोनेरी**—अस्मिन् ग्रन्थे प्रतिश्लोकेषु अधिकारिभेदेन त्रिविधोऽप्यर्थो कथित इति सूचनाय ब्रह्मादयोऽपि स्तुवन्तीत्याह— **एवमिति** ।। ब्रह्मादयो देवाः तपोधनाः ऋषयः चशब्दान्मनुष्योत्तमाश्च एवं त्रिविधाधिकारिणोऽपि परं चेतनाचेतनजगद्विलक्षणम् । श्रेष्ठं जगत्सृष्ट्यादिप्रधानम् । देवं क्रीडादिगुणविशिष्टं विभुं व्याप्तम् । नारायणं मुक्ताश्रयम् । कीर्तयन्ति स्वाभीष्टसिद्धये स्तुवन्तीत्यर्थः ।। २०६ ।।

**स्मृ.कृष्णाचार्य**—ब्रह्मादिदेवैरपि भगवत्कीर्तनस्य कृतत्वात्सर्वैरधिकारिभिः तत्कीर्तनं सदा कार्यमित्याह स एव— **एवमिति** ।। ब्रह्मादयो मुक्ताः मुक्तब्रह्मादयः । तपोधनाः कृच्छ्रचान्द्रायणादिभगवदालोचनादितपोरूपधनवन्तः ऋषयो वसिष्ठाद्याः एवं शास्त्रोक्तप्रकारेण सुरश्रेष्ठं देवं प्रभुं नारायणं कीर्तयन्ति तन्नामकीर्तनं कुर्वन्ति । एतन्नामकीर्तनं कृतः कुर्वन्तीत्यतः विशेषणत्रयम् । तस्माद्ब्रह्मादिभिः क्रियमाणत्वात्तत्कीर्तनं सदा कार्यमिति ।। २०६ ।।

### कृष्णामृतमहार्णवः

***किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ।**
**यो नित्यं ध्यायते देवं नारायणमनन्यधीः ।। २०७ ।।**

---

* अयं श्लोकः विष्णुस्मृतौ ९९ ।

**ताम्रपर्णी**—ननु "त्यागेनैके अमृतत्वमानशुः"

ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा ।
अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ ।।
जयन्ती समुपोषेण विष्णुदेहे लयं गताः ।
वालखिल्यादयो विप्राः.............. ।।

"अपाम सोमममृता अभूम" इत्यादौ दानतीर्थतपोयज्ञैर्मोक्षोक्तेः किं ध्यानेनेत्याशंक्य दानादीनामन्तःकरणशुद्धिद्वारा ध्यानसम्पादन एव व्यापृतत्वात्परम्परया साधनं दानादि । ध्यानस्य असम्प्रज्ञातसमाधिलक्षणस्यापरोक्षस्थत्वेन मोक्षन्तरङ्गत्वात्तदनुष्ठितवतः किं परम्परया साधनैर्दानादिभिरित्याशयेनाह— **किं तस्येति** ।। योऽनन्यधीः विषयाद्व्यावृत्तचित्तः नारायणं देवं नित्यं ध्यायते । "खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते" इत्युक्तरीत्या अखण्डध्यानेन विषयीकरोति । तस्य तुलापुरुषादिदानैर्गङ्गादितीर्थैः "न तपोऽनशनात्तुल्यमि"त्युक्तत्वादनशनादितपोभिः । **अश्वमेधाद्यध्वरैः** किं प्रयोजनमिति पृथक् सम्बन्धः । तेषामन्तःकरणशुद्धिं दत्वा ध्यानादिद्वारा मोक्षहेतुत्वाभिप्रायेण वचनानां प्रवृत्तत्वात् । ध्यानाभावदशायां तदर्थं तदनुष्ठानसम्भवेऽपि तदवस्थायां तैः किं प्रयोजनम् । न किमपीत्यर्थः । यदा तु ध्यानपदेन "अप्रयत्नात्समाधिस्तु दर्शनं चिरयाऽनया" इति असम्प्रज्ञातसमाधिरुच्यते । तदा योऽनन्यधीः "यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः" इत्युक्तरीत्या अन्यदर्शनरहितो योऽधिकारी नारायणं नित्यं चिरं ध्यायते तस्यारूढमोक्षान्तरङ्गसमाधियोगस्य तत्साधनैर्दानादिभिः किं प्रयोजनम् । न किमपि ।

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ।।
नैव तस्य कृतेनार्थः ..... ।। इत्यादेरिति भावः ।। २०७ ।।

**उमर्जी**—ध्यानाधिकारिणः ध्यानमेव मुख्यमित्याह— **किं तस्येति** ।। पूर्वोक्तप्रमाणं स्मारयति । किंशब्दः आक्षेपार्थः । अनन्यधीः अन्यविषयकधीरहितः ।।२०७।।

**उपेन्द्र**—स्मरणाद्यपेक्षया ध्यानस्याधिक्यज्ञापनाय पूर्वोक्तप्रमाणं स्मारयति-- **किं तस्येति** ।। किंशब्दः आक्षेपार्थः ।। २०७ ।।

**कोनेरी**—कीर्तनफलमुक्त्वा ध्यानफलमाह— **किमिति** ।। योऽनन्यधीः हरावर्पितबुद्धिः पूर्वं दानतपोयज्ञादीन् कृत्वा तत्फलमपरोक्षज्ञानं सम्पाद्य स्वामिनं श्रीनारायणं नित्यमपरोक्षीकृत्य ध्यायते । तस्य पुनर्दानादिभिः किं मोक्षप्राप्तये न किमपि प्रयोजनमस्ति । एवमल्पाधिकारिणापि तपोतीर्थाद्याचरणेनापरोक्षज्ञान-मासाद्य हृदि हरिं ध्यायेदिति भावः ।। २०७ ।।

**स्मृ.कृष्णाचार्य**—एवं भगवत्कीर्तनं कर्तव्यमित्यभिधाय पूर्वोक्तभगवद्ध्यानस्य कर्तव्यत्वे पुनरपि वचनमाह स एव— **किं तस्येति** ।। यः अधिकारी अनन्यधीः तदैकनिष्ठबुद्धिः नारायणं देवं नित्यं ध्यायते ध्यानं करोति । तस्याधिकारिणः दानैः गोभूम्यादिदानैः किं प्रयोजनं, तीर्थैः किं प्रयोजनं, तपोभिः चान्द्रायणादिभिः किं किं प्रयोजनम् । अध्वरैः ज्योतिष्टोमादियज्ञैश्च किं किं प्रयोजनम् । तदपेक्षया भगवद्ध्यानस्यैवाधिकफलत्वात्तीर्थादिफलस्य तेनैव लाभाच्चेति भावः ।। तस्मात्तद्ध्यानं कार्यमिति ।। २०७ ।।

**कृष्णामृतमहार्णवः**

**नित्योत्सवो [1]गृहे तेषां नित्यश्रीर्नित्यमङ्गलम् ।**
**येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः ।। २०८ ।।**

**ताम्रपर्णी**—ऐहिकामुष्मिकाशेषकल्याणप्रदत्वाद्ध्यानमवश्यं कार्यमित्याह— **नित्येति** ।। मङ्गलायतनं परममङ्गलानां गुणानामाश्रयः । भक्तानां मङ्गलप्रदतया तदाश्रयो वा हृदिस्थः हृदयपद्मकर्णिकायां स्थितो भगवान् हरिः येषां हृदि मनसि विषयतया स्थितो ध्यातः । तेषां नित्योत्सवः पुत्रोत्सवाद्युत्सवः । नित्यं श्रीरैश्वर्यं नित्यमङ्गलम् श्रेयःप्रतिबन्धकपापनिवर्तकं विप्राशीर्वादादिमङ्गलं च भवेत्। तथा "या निर्वृतिस्तनुभृतां तव पादपद्मध्यानादि"त्यत्र भेरीताडनादावपि परमानन्दमग्नत्वादित्यादौ चोक्तरीत्या स्वरूपसुखादिव्यक्त्या नित्योत्सवस्वरूपभृतः उन्नत्वाख्यस्तत्कालव्यक्तो भवेत् । नित्यश्रीरपरोक्षज्ञानाख्यकान्तिः प्रकाशो भवेत् । नित्यमङ्गलं मोक्षप्रतिबन्धकसकलपापध्वंसलक्षणं कल्याणं च भवेत् । तदनन्तरं आवरणाविद्यानिवृत्त्या स्वरूपानन्दाभिव्यक्त्योत्सव उन्नत्वलक्षणो भवेत् । नित्यश्रीः

---

१. 'भवत्तेषां' इति ताम्र. पाठः । 'हर्षाकाणां' इति स्म.क. तथा क. पाठः ।

"स्त्रीभिर्वा यानैर्वा" इत्युक्तमैश्वर्यं च भवेत् । नित्यश्रीः ज्ञानकान्तिश्च भवेत् । "तदा हि ब्रह्मज्ञानं सदोदितमि"त्युक्तत्वात् । नित्यमङ्गलं स्रक्चन्दनवनितावाद्यघोषादिकं आनन्दवैचित्र्यापादकं च भवेदित्यर्थः ।। २०८ ।।

**उमर्जी**—ध्यानेन अपरोक्षिणः किं फलं भवतीत्याह— **नित्योत्सव इति** ।। साक्षात्कारविषयत्वेन हृदिस्थः । ननु साक्षात्कारमात्रेण कुतो नित्योत्सव इत्यत उक्तम् ।। **मङ्गलायतनमिति** ।। हरिमुद्दिश्य मङ्गलायतनत्वविधानान्नपुंसकलिङ्गप्रयोगः । नित्यनपुंसकं वा आयतनम् ।। २०८ ।।

**उपेन्द्र**—ध्यानफलमाह— **नित्योत्सव इति** ।। एषां ध्यानकर्तृणां हृदिस्थः साक्षात्कारविषयत्वेन तेषाम् । इदंशब्दस्य षष्टिबहुवचनमिदम् । नतु यच्छब्दस्य। मङ्गलायतनम् । हरिमुद्दिश्य मङ्गलायतनत्वविधानान्नपुंसकलिङ्गप्रयोगः सम्भवति ।। २०८ ।।

**कोनेरी**—एवं हरिध्यातुः फलमाह— **नित्योत्सव इति** ।। मङ्गलायतनं मङ्गलस्यायतनमावासस्थानीयो भगवान् येषां ज्ञानिनां हृदिस्थः ध्यानेनापरोक्षीकृतः तेषां गृहे नित्योत्सवः नित्यश्रीर्नित्यमङ्गलं भवतीति भावः ।। २०८ ।।

**स्मृ.कृष्णाचार्य**—हरेर्भगवतो ध्यानं सदा कार्यमिति तत्करणे शुभाधिक्यादिति प्रमाणेनाह— **नित्योत्सव इति** ।। एषां भक्तानां भगवान् षड्गुणैश्वर्यसम्पन्नो हरिः मङ्गलायतनं मङ्गलानां समस्तकल्याणानां आयतनं आश्रयः । एतादृशोऽपि हरिः येषां भक्तानां हृदिस्थः ध्येयतया सदा हृदि विद्यमानो भवति । तेषां भक्तानां हृषीकाणां भगवद्विषयकेन्द्रियाणां नित्योत्सवो नित्यसन्तोषः, नित्यश्रीः शाश्वतमैश्वर्यम् । अत एव नित्यं मङ्गलं प्रतिदिनं कल्याणं भवति । तस्मात्सन्तोर्षन्द्रियेण हृदिस्थो भगवतः नित्यं ध्यानं कार्यमिति ।। २०८ ।।

**कृष्णामृतमहार्णवः**

**°जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु ।**
**स्त्री वाऽप्यनूनदशकं देहं मानुषमार्जयेत्'** ।। २०९ ।।

**चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः ।**
**अविदित्वा परं देवं [2]मोक्षाशा का महामुने ।। २१० ।।**

**ताम्रपर्णी**—नतु कर्मणां भोगेन क्षयात् मोक्षसम्भवात् किमपरोक्षाय ध्यानादि-नेत्याशंकां प्रमाणेन परिहरति— **जीवन्निति** ।। चतुर्दशाद्वर्षादूर्ध्वं जीवन् पुरुषो वा चतुर्दशोर्ध्वजीवीनि जीविनी स्त्री अपि नियमेन । स्वरव्यत्ययस्तु छान्दसः । अनूनदशकं च दशकादनूनं । मानुषं देहं तदापादककर्माण्यार्जयेत् । एवंविधः संसारः आदिवर्जितः अतो भोजनकाल एव पुनरार्जनात् प्रागनादिकालापादित-कर्मणां भावाञ्च परं देवमविदित्वा का मोक्षाशेत्यर्थः ।। २०९-२१० ।।

**उमर्जी**—"किं तस्य दानैः" इति श्लोके सत्कर्मापेक्षया ध्यानस्याधिक्यमुक्तम् । तच्च मोक्षसाधनत्वेनेति वक्तव्यम् । प्रकारान्तराभावात् । स च मोक्षः सत्कर्मा-नुष्ठानेनैव भवति । किं ध्यानेन । नच वाच्यं ध्यानाभावे भगवदपरोक्षाभावेन निवर्तकाभावात् दुष्कर्मणां मोक्षप्रतिबन्धकानां भावात् न तन्मात्रेण मोक्षो भवतीति। प्रायश्चित्ताद्यनुष्ठानेन भोगेन वा प्रतिबन्धकीभूतकर्मक्षयसम्भवात् इत्यतः प्राय-श्चित्तादिरूपकर्मानुष्ठानकालेऽपि बहूनां दुष्कर्मणामपि अनिवार्यतया प्रसक्तेरनन्तत्वाद्भोगेन क्षयासम्भवाञ्च न तन्मात्रेण कर्मक्षयः । किन्तु ध्यानमपे-क्षितमित्यभिप्रेत्य कर्मबाहुल्ये प्रमाणद्वयमाह— **जीवन्निति** ।। चतुर्दशाद्वर्षादनून-दशकं यस्येति बहुव्रीहिः । कर्मधारयत्वे दशाधिकदेहनिषेधप्रतीत्या तत्सद्भाव-प्रमाणविरोधापत्तेः । ह्रस्वदीर्घव्यत्ययेन चतुर्दशोर्ध्वजीविनीति स्त्रीविशेषणम्। "संसारश्चादिवर्जितः" इति कर्मणामनादित्वोपपादनम् । ततश्चायमर्थः । चतुर्दशा-द्वर्षादूर्ध्वं जीवन् पुरुषः । तथा चतुर्दशोर्ध्वजीवीनि स्त्री वा । अनूनदशकं मानुषं देहमार्जते सम्पादयति । तत्र मानुषे देहे कर्माकरणमसम्भावितम् । अतो भोगेन क्षयासम्भवात्परं देवं नारायणं अविदित्वा स्थितस्य अधिकारिणो का नाम मोक्षाशा । महामुने इति ऋषिसम्बोधनम् । ननु सादिभूते संसारे क्रियमाण-

---

* अनयोः श्लोकयोः आकरः ब्रह्मपुराणमिति गीताभाष्ये (३-४) उदाहृतः ।

१. 'आर्जते' इति उम पाठः ।

२. 'मोक्षाद्या.' इति कोनेरी पाठः ।

कर्मणां बहुत्वेऽपि बहुकालीनभोगेन क्षयः सम्पादयितुं शक्यते । धान्यराशिवदित्यत उक्तम् ।। **संसारश्चादिवर्जित इति** ।। चो यस्मादित्यर्थे । यस्मात्संसारो अनादिः तत्र कृतानि कर्माणि न धान्यराशिवद्बहु, किन्त्वनन्तानि । अतो भोगेन क्षयासम्भवान्मोक्षाशा केति सम्बन्धः ।। २०९-२१० ।।

**उपेन्द्र**—ननु "किं तस्य दानैः" इत्यादिपूर्वश्लोके कर्मापेक्षया ध्यानस्याधिक्य-मुक्तम्। तच्च मोक्षसाधनत्वेनेति वक्तव्यम् । प्रकारान्तराभावात् । स च मोक्षः कर्मानुष्ठानेनैव भविष्यति किं ध्यानेन । नच वाच्यं ध्यानाभावे भगवदपरोक्षाभावेन निवर्तकाभावाद्दुष्कर्मणां मोक्षप्रतिबन्धकानां भावात् न तन्मात्रेण मोक्षो भवतीति । प्रायश्चित्ताद्यनुष्ठानेन भोगेन वा प्रतिबन्धकीभूतकर्मक्षयसम्भवादित्यतः प्रायश्चित्ता-दिकर्मानुष्ठानकालेऽपि बहूनां दुष्कर्मणामनिवार्यतया प्रसक्तेरनन्तत्वाद्भोगेन क्षयासम्भवाच्च न तन्मात्रेण कर्मक्षयः । किन्तु ध्यानमपेक्षितमित्यभिप्रेत्य कर्म-बाहुल्यप्रतिपादकप्रमाणद्वयमाह— **जीवन्निति** ।। चतुर्दशाद्वर्षादनूनं दशकं यस्येति बहुव्रीहिः । कर्मधारयत्वे दशाधिकदेहनिषेधप्रतीत्या तत्सद्भावप्रतिपादकप्रमाण-विरोधापत्तेः । ह्रस्वदीर्घव्यत्ययेन चतुर्दशोर्ध्वजीवीनीति स्त्रीविशेषणम् । "संसार-श्चादिवर्जितः" इति कर्मणामनादित्वोपपादनम् ।। ततश्चायमर्थः । चतुर्दशाद्वर्षादूर्ध्वं जीवन्पुरुषः। तथाच चतुर्दशोर्ध्वजीवीनि स्त्री वा अनूनदशकं मानुषं देहमार्जते सम्पादयति । तत्र मानुषे देहे कर्माऽकरणमसम्भावितम् । अतो भोगेन क्षयासम्भवात् । परं नारायणं देवमविदित्वा स्थितस्याधिकारिणो का नाम मोक्षाशा महामुने इति ऋषिसम्बोधनम् । ननु सादिभूते संसारे क्रियमाणकर्मणां बहुत्वेऽपि बहुकालीनभोगेन क्षयः सम्पादयितुं शक्यते । धान्यराशिवदित्यत उक्तम् ।। **संसारश्चादिवर्जित इति** ।। चो यस्मादित्यर्थे । यस्मात्संसारो अनादिः तत्र वृत्तानि कर्माणि न धान्यराशिवद्बहु, किन्त्वनन्तानि । अतो भोगेन क्षयासम्भवान्मोक्षाशा केति सम्बन्धः ।। २०९-२१० ।।

**कोनेरी**—कृतस्य कर्मणो भोगेन नाशात् कर्मनाशानन्तरं स्वत एव मोक्षो भवि-ष्यति किं श्रवणादिसाधनैः किमपरोक्षज्ञानेनेत्याशंक्यापरोक्षज्ञानमन्तरेण कर्मनाशो दुर्वार इत्याह— **जीवन्निति** ।। जीवन् पुरुषः स्त्री वा । चतुर्दशात् चतुर्दशवर्षादूर्ध्वं अनूनदशकं दशकनूनं न भवतीति अनूनदशकं मानुषं मनुष्यसम्बन्धिनं देहं

देहप्रापकं कर्म नियमेनार्जयेत् करोति । नियमेनेत्यनेन प्रतिदिनमित्यर्थ उक्तो भवति ।। २०९ ।।

चतुर्दशोर्ध्वजीवानां संसारः तत्सम्भवः क्लेशश्चानादिः एवं सति परं सर्वोत्तमं देवं प्रकाशमानं बिम्बरूपं हरिं । अविदित्वा अनपरोक्षीकृत्य मोक्षाद्याः काः केत्यर्थः । महामुने इति सम्बोधनम् । मोक्षशब्देनागामिसञ्चितकर्मणः सकाशादेव मोक्षः न स्वरूपानन्दानुभवरूपः । तस्य च प्रारब्धक्षपणानन्तरं भगवत्प्रसादैकलभ्यत्वात् । अत्राद्यपदेनास्यार्थस्य सङ्ग्रहः । अत्र मोक्षाद्या इति बहुवचनं त्रिविधाधिकारिमोक्षविवक्षयेति ज्ञातव्यम् । ननु आचतुर्दशाद्वर्षादित्यत्र चतुर्दशवर्षमारभ्येति टीकाचार्यैर्व्याख्यातम् । अत्र चतुर्दशादूर्ध्वमित्युच्यते । तत्कथमिति चेत् सत्यम्। चतुर्दशवर्षमारभ्येत्यस्य चतुर्दशवर्षमारभ्य तदूर्ध्वजीवानामित्यर्थाङ्गीकारे उभयोरेकार्थत्वेन न विरोध इति भावः ।। २१० ।।

**स्मृ.कृष्णाचार्य**—नन्वधिकारिणां मुक्त्यर्थं भगवत्स्मरणध्यानकीर्तनादिकं तथा वैषणवधर्मसालग्रामतीर्थस्नानगोपीचन्दनतप्तमुद्राधारणदिकं कार्यमिति । एतावता ग्रन्थसन्दर्भेणाभिहितम् । एतत्सर्वं किमर्थम् । "अपाम सोमममृता अभूम" इति श्रुत्यादिना स्वकृतयागादिकर्मभिः तीर्थयात्रास्नानादिभिश्च स्वकृतानेकपापानां क्षयेण मुक्तिसम्भवादित्यतः केवलपुण्यकर्मभिः मानुषदेहे प्रतिदिनं दशावरदेहसम्पादकानेकपापकर्मणां क्षयायोगेन मुक्तेरसम्भवादिति प्रमाणेनाह— **जीवंश्चतुर्दशादिति** ।। पुरुषः कलियुगे कर्मभूमौ विद्यमानः चतुर्दशाद्वर्षादूर्ध्वं जीवन् पापकर्मसञ्चयैरनूनदशकं दशजन्मापेक्षया अनूनं तदधिकाष्टादशजात्याक्रान्तं मनुष्यसम्बन्धितद्भोगायतनं शरीरं आर्जते सम्पादयति नियमेन । न केवलं पुरुषः स्त्री वापि दशाधिकमानुषशरीरं कर्मभिः प्राप्नोति । अतः कर्मक्षयान्मुक्तिर्न युक्तेति भावः ।। २०९-२१० ।।

**कृष्णामृतमहार्णवः**

**आचतुर्दशमाद्वर्षात्पुरुषो नियमेन तु ।**
**दशावराणां देहानां कारणानि करोत्ययम् ।**
**अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति ।। २११ ।।**

**ताम्रपर्णी—**उक्तार्थ एव प्रमाणान्तरमाह— **आचतुर्दशादिति** ।। आचतुर्दशवर्षादित्यत्र चतुर्दशवर्षमारभ्येति तत्वप्रकाशिकायां व्याख्याततत्वात्तद्विरोध इति चेन्न। परिहृतश्चायं विरोध स्मार्तविरोधोद्धारे तथा च तत्रस्थः संग्रहश्लोकः ।

आचतुर्दशवाक्यं स्यात् ज्ञानलोपविवक्षया ।
चतुर्दशादूर्ध्ववचस्त्वविवेकविवक्षया ।। इति ।। २११ ।।

**उमर्जी—**उक्तार्थे स्पष्टं संवत्सरपरं प्रमाणं उदाहरति— **आचतुर्दशमादिति** ।। अभिविधावियमाङ् । चतुर्दशवर्षमारभ्येत्यर्थः। दश अवराः येषु देहेषु ते तथा। उपसंहरति— **अत इति** ।। कर्मणामनन्तत्वात् कर्मक्षयं प्राप्येति ल्यब्लोपनिमित्ता पञ्चमी । मुक्तिः संसारात् । तस्मात्संसारनिवर्तकज्ञानार्थं ध्यानमावश्यकमिति भावः ।। २११ ।।

**उपेन्द्र—**उक्तार्थे स्पष्टं संवत्सरपरं प्रमाणमुदाहरति— **अत इति** ।। कर्मणामनन्तत्वात्कर्मक्षयं प्राप्येति ल्यब्लोपनिमित्ता पञ्चमी । मुक्तिः संसारात्तस्मात्संसारनिवर्तकज्ञानार्थं ध्यानमावश्यकमिति भावः ।। २११ ।।

**कोनेरी—**कर्मणां बहुत्वात् ज्ञानं विना तन्नाशो न भवतीत्याह— **आचतुर्दशमादिति** ।। चतुर्दशवर्षमारभ्य दशजन्मानि अवराणि येषां ते दशावराः तेषां देहानां कारणानि कर्माणि नियमेनालं सम्यक्करोति । अतो कर्मक्षयान्मुक्तिः कुत एव भविष्यति । ज्ञानं विना न कुतोऽपीत्यर्थः ।। २११ ।।

**स्मृ.कृष्णाचार्य—**पुनस्तत्रार्थं वचनमाह— **आचतुर्दशमादिति** ।। चतुर्दशवर्षमारभ्य पुरुषः पापकर्मो पुरुषः दशावराणां दशजन्मापेक्षया अधिकदेहानां कारणानि पापानि प्रतिक्षणं करोति । अतः कर्मक्षयात्केवलपुण्ययज्ञकर्मभिः स्वकृतपापक्षयान्मुक्तिः कुत एव कथं भविष्यति । अयं भावः । एकैकमानुषदेहप्राप्त्या दशावरदेहप्रापककर्मकर्तृत्वात्ततः प्राप्यदेहान्तरेष्वपि पुनर्मानुषदेहप्रापककर्मणामनेकत्वाद्भगवदपरोक्षज्ञानं विना केवलपुण्यकर्मभिः सर्वकर्मक्षयायोगात्कर्मक्षयान्मुक्तिरिति न युक्तमिति । तत्रैव समाख्यावचनम्—

जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु ।
दशावराणां देहानां कारणानि करोत्ययम ।। इति ।। २११ ।।

**कृष्णामृतमहार्णवः**

**[५२]समानां विषमा पूजा विषमानां समा तथा ।**
**क्रियते येन देवोऽपि स्वपदाद् भ्रश्यते हि सः ।। २१२ ।।**

**ताम्रपर्णी**—प्राक् "तद्विघाताय जायन्ते शक्राद्याः परिपन्थिनः" इत्यादौ भगवत्परि-वारत्वेन देवाद्यपूजनेऽनर्थोक्त्या तत्पूजा कार्येत्यपेक्षितम् । पूजा च गुणानुसारेण कार्येति वक्तुमन्यथाऽनर्थं तावदाह— **समानामिति** ।। गुणैः समानां विषमा तारतम्यवती । विषमाणां गुणतारतम्योपेतानां समा एकप्रकारा । देवोऽपि स्वप- दाद् भ्रश्यते किमुपदेवादि । मानुषस्तु रौरवादिनरकभागेवेति भावः ।। २१२ ।।

**उमर्जी**—एवं मुमुक्षोः भगवद्भक्तार्चनस्यावश्यकत्वं विषमपूजायाः पापसाधन-त्वमाह— **समानामिति** ।। एकप्रकारेण पूजार्हाणामित्यर्थः । विषमा न्यूनाधिकतया पूजा । विषमाणां एकप्रकारपूजानर्हाणां समा पृजा येन क्रियते । सः पुरुषः देवः अपि देवपदं प्राप्तोऽपि । स्वपदाद्भ्रश्यते भ्रष्टो भवति । किमु मानुषः ।।२१२।।

**उपेन्द्र**—गुणानुसारिणीं पूजामिति मुमुक्षोरपेक्षितं इत्थंभावं विवक्षुस्तदुपयुक्तं प्रमाणद्वयेनाह— **समानामिति** ।। एकप्रकारेण पूजार्हाणामित्यर्थः ।। २१२ ।।

**कोनेरी**—ज्ञानं च सेवादिसन्तुष्टगुरुप्रसादजन्यं गुरुसेवादिकं च तारतम्यज्ञानपूर्वकं कृतमेव सफलम् । अन्यथा निष्फलमित्याह— **समानामिति** ।। मा ज्ञानं तया सहिताः समाः ज्ञानिनः तेषां पूजा विषमा अज्ञजनसाम्येन क्रियते चेत् तथा विषमानां विषसदृशं मा ज्ञानं विषमं अज्ञानं एषां ते विषमाः अज्ञानिनः तेषां पूजा ज्ञानिजनसाम्येन क्रियते स देवोऽपि पूज्योऽपि सदा स्वयोग्यतया प्राप्तपदाच्च्युतो भवति ।। २१२ ।।

**स्मृ.कृष्णाचार्य**—भगवदर्चनादिवद्भगवद्भक्तार्चनादिकमपि भक्तैः कार्यमित्य-भिप्रेत्य तेषां पूजादिकमपि तत्तद्गुणानुसारेण कर्तव्यमिति वक्तुमन्यथाकरणे दोषं

---

५२. वैष्णवेष्वन्यभक्तेषु ब्राह्मणेष्वितरेषु च ।
करोति समतां यो हि ब्रह्महत्यां लभेत्त सः ।। ब्रह्मवैवर्त १-३० ।।

प्रमाणेनाह आचार्यः— **समानामिति** ।। समानामनेकेषां विदुषां मध्ये समानां ज्ञानभक्ति-वैराग्यादिभिस्समानानां महात्मनां विषमा पूजा वैषम्येण मनोवैषम्येण विषमा न्यूनाधिकतया वा पूजा अर्चनादिकम् । तथा विषमानां ज्ञानभक्तिसदा-चारादिभिः न्यूनाधिकवतां भागवतानां समा एकप्रकारेण पूजा येन भक्तेन क्रियते । स देवोऽपि स्वपदात्स्वस्थानाच्च्युतो भवति ।। २१२ ।।

**कृष्णामृतमहार्णवः**

***वित्तं बन्धुर्वयः कर्म विद्या चैव तु पञ्चमी ।**
**एतानि मान्यस्थानानि गरीयो ह्युत्तरोत्तरम् ।। २१३ ।।**

**ताम्रपर्णी**—ननु के के पूज्याः के च तेषां पूज्यत्वप्रयोजकधर्माः । यैः साम्यं वैषम्यं च जानीमः । तेषु च धर्मेषु पूज्यतायां प्रयोजकत्वं किमेकप्रकारमुत तार-तम्यादित्यत आह— **वित्तमिति** ।। बन्धुरिति बन्धुत्वमुच्यते । बन्ध बन्धन इति धातोर्भावे उप्रत्ययः । वित्तादिशब्दैस्तद्वन्त उपलक्ष्यन्ते । मान्यानि च तानि स्थानानि च मान्यस्थानानि अधिष्ठानानि । यद्वा वित्तं बन्धुत्वमित्येतानि मान्यत्वे निमित्तानि निग्रहस्थानानीतिवत् । तान्युत्तरोत्तरं गरीय इत्यर्थः ।। २१३ ।।

**उमर्जी**—ननु एकप्रकारेण पूजार्हत्वानर्हत्वज्ञानं दुर्घटमित्यतः पूज्यत्वप्रयोजक-धर्मानाह— **वित्तमिति** ।। बन्धुपदेन बन्धुत्वं लक्ष्यते । वित्तवयःकर्मादिसहपाठात्। अत्र स्थानशब्दो निग्रहस्थानमित्यादाविव निमित्तार्थः । मान्यशब्दश्च भाव-प्रधानः। तत्पुरुषसमासः । ततश्च वित्तबन्धुत्वादीनि पूजानिमित्तानीत्यर्थः । तेषु विशेषं दर्शयति— **गरीय इति** ।। २१३ ।।

**उपेन्द्र**—बन्धुपदेन बन्धुत्वं लक्ष्यते। वित्तवयःकर्मादिसहपाठात् अत्र स्थानशब्दो निग्रहस्थानमित्यादाविव निमित्तार्थः । मान्यशब्दश्च भावप्रधानः तत्पुरुषसमासः । ततश्च वित्तबन्धुत्वादीनि निमित्तानीत्यर्थः । तेषु विशेषं दर्शयति— **गरीय इति** ।। २१३ ।।

---

* अयं श्लोकः कूर्मपुराणे १२·४९ । विष्णुस्मृतौ ३२ ।

**कोनेरी**—पूज्यस्थानानि दर्शयति– **वित्तमिति** ।। वित्तशब्देन तद्वन्त आचक्षन्ते । वन्धुः बन्धुत्वं । भावप्रधाननिर्देशः । यः स्वकुले स्वापेक्षया पूर्वोत्पत्तिरूपं वयः । कर्म सत्कर्म । विद्या ब्रह्मविद्या । सर्वत्रापि तद्वन्तो लक्ष्यन्ते । एतानि मान्यस्थानानि एतेषामुत्तरोत्तरं गरीयः श्रेष्ठम् ।। २१३।।

**स्मृ.कृष्णाचार्य**—तारतम्येन पूजास्थानान्याह पूर्वश्लोकेन ।। **वित्तं बन्धुरिति** ।। एतानीति वक्ष्यमाणरीत्या बन्धुशब्देन बन्धुत्वमुच्यते । यद्वा वित्तं वित्तवान् बन्धुः बन्धुत्ववान् वयः वयोवान् कर्म सत्कर्मवान् पञ्चमी विद्या विद्यावान् । एतानि मान्यस्थानानि । एते बहुमानपात्रभूताः । यद्वा बन्धुत्वविशिष्टानि एतानि वित्तादीनि पञ्च मान्यस्थानानि वित्तादिमतः बहुमानज्ञापकस्थानानि । यद्वा एतानि तद्वतः बहुमानावासभूतानि साम्येन मान्यस्थानानि किन्नेत्याह– **उत्तरोत्तरमिति** ।। वयःकर्मविद्यादीनि गरीयः गरीयांसि । अत्र पुरुषमान्यत्वेन तस्य वित्तापेक्षया प्रियबन्धुत्वमधिकं तत्सर्वापेक्षया पञ्चमी विद्या भगवदपरोक्षज्ञानं अधिकमिति भावः ।। २१३ ।।

**कृष्णामृतमहार्णवः**

**[53]गुणानुसारिणीं पूजां [1]समां दृष्टिं च यो नरः ।**
**सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति ।। २१४ ।।**

**ताम्रपर्णी**—ननु समादीनां विषमादिपूजा कार्या न चेत्कथं कार्येत्यत आह– - **गुणेति** ।। यदि गुणानुसारिणी पूजा तर्हि "समबुद्धयः" "ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः" इति भगवद्गीतोक्त्या सर्वभूतेषु समबुद्धिः किं त्याज्ये-त्यतस्साऽप्यनुष्ठेयेत्याह ।। २१४ ।।

---

१. 'समदृष्टिं' इति स्मृ.कृ. पाठः ।

५३. विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणान्तु वीर्यतः ।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ।। विष्णुस्मृतौ अ.३२ ।।
यस्य यस्याधिकं दृष्टा भक्तिज्ञानक्रिया अपि ।
तं तं समर्चयेत्पूर्वं यथार्हं क्रमयोगतः ।। शाण्डिल्यस्मृतौ ४-८५ ।।

**उमर्जी**—वित्ताद्यनुसारिपूजायाः फलमाह— **गुणानुसारिणीमिति** ।। वित्तरूप-धर्मानुसारिणीं पूजाम् । समां दृष्टिं पित्रादिना समबुद्धिम् । सर्वभूतेषु तत्तत्कर्मविशिष्टेषु ।। २१४ ।।

**उपेन्द्र**—गुणानुसारिणीं वित्तादिरूपधर्मानुसारिणीमित्यर्थः । समदृष्टिं पित्रादिना समबुद्धिम् ।। २१४ ।।

**कोनेरी**— ।। **गुणानुसारिणीमिति** ।। योऽधिकारी गुणानुसारिणीं गुणतारतम्यानुसारिणीं पूजां सर्वभूतेषु सर्वप्राणिषु विद्यमानं श्रीहरिं ज्ञात्वा एषु स्थितः एवं पूज्य इति समदृष्टिं च कुरुते । तस्य विष्णुः प्रसीदति प्रसन्नो भवति ।। २१४ ।।

**स्मृ.कृष्णाचार्य**—अन्यथापूजाकरणे एवं दोषमुक्त्वा गुणानुसारेण पूजाकरणे विशेषफलमस्तीत्याह व्यवहितोत्तरश्लोकेन— **गुणानुसारिणीमिति** ।। यः नरः भक्तः सर्वभूतेषु सर्वप्राणिषु मध्ये वरिष्ठानां गुणानुसारिणीं तत्तत्पुरुषनिष्ठ भक्त्यादि-गुणानुसारिणीं महात्मनां पूजां यः कुरुते । तथा सर्वभूतेषु समां दृष्टिं च ।

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डितास्समदर्शिनः ।।

इति गीतोक्तरीत्या समदृष्टिं समस्य लक्ष्मीसहितस्य विष्णोर्दृष्टिं सर्वनियामकत्वेन तत्र विद्यमानत्वदृष्टिं तथा

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ।।

इत्युक्तरीत्या समदृष्टिमेकप्रकारदृष्टिं च यः कुरुते तस्य भक्तस्य विष्णुः प्रसीदति प्रसन्नो भवतीति । तस्माद्वैष्णवानां महात्मनां भगवत्प्रीत्यर्थं गुणानुसारिणी पूजा कार्येति ।। २१४ ।।

### कृष्णामृतमहार्णवः

**यथा सुहृत्सु कर्तव्यं [1]पितृमातृसुतेषु च ।**
**तथा करोति पूजादि समबुद्धिः स उच्यते ।। २१५ ।।**

---

१. 'पितदारसतादिष' इति स्मृ.कृ. तथा कृ. पाठः ।

**ताम्रपर्णी**—ननु तारतम्यं ज्ञात्वा गुणानुसारिणी पूजा कार्येत्युक्तं दृष्टिसाम्ये पूजायाः कथं तारतम्यमित्यतः समदृष्टिशब्दार्थमाह— **यथेति** ।। सुहृत्सु अनिमित्तोपकारिषु पितृमातृसुतेषु च यथा येन प्रकारेण ममैते इष्टा इति ज्ञात्वा । पूजादि पित्रोः पूजा सुतेषु लाल्नं, सुहृत्सु बहुमानं करोति । तथा तेनैव प्रकारेण भगवद्दासत्वान्ममैते इष्टा इति ज्ञात्वा पूजादि करोति स समबुद्धिरुच्यते नतु गुणसाम्यज्ञानीत्यर्थः ।। २१५ ।।

**उमर्जी**—समदृष्टिशब्दार्थमन्यथाप्रतीतिनिरासाय स्वयमाह— **यथेति** ।। तथा पित्रादिसादृश्येन सः पुरुषः बुद्धिमानित्यर्थः ।। २१५ ।।

**उपेन्द्र**—समदृष्टिशब्दार्थमन्यथाप्रतीतिनिरासायाह— **यथेति** ।। तथा पित्रादिसादृश्येन । सः पुरुषः समबुद्धिमानित्यर्थः ।। २१५ ।।

**कोनेरी**—समदृष्टिं च विविच्याह— **यथेति** ।। यः सुहृत्सु अत्याप्तबन्धुषु पितृमातृसुतादिषु यथा पूजां करोति तथा भगवति तदनुबन्धिषु च तद्योग्यतानुसारेण पूजादिकं करोति । 'पूजा स्याद्बन्धुसत्क्रिया' इत्युक्तेः । सः समबुद्धिरुच्यत इत्यन्वयः ।। २१५ ।।

**स्मृ.कृष्णाचार्य**—भूतेषु समदृष्टिः कार्येत्युक्तम् । का सा समदृष्टिरित्यतः समदृष्टिलक्षणमाह— **यथेति** ।। पितृदारसुतादिषु सुहृत्सु पूजा अर्चनादिकम् । आदिशब्देन वन्दनादिकमुच्यते । तद्यथा तेषु करोति । तथा गृहं प्रत्यागतेषु महात्मसु पूजादि करोति सः पुरुषः पूजाकर्ता समदृष्टिः सर्वत्र नियामकतया श्रीस्वामी वर्तत इति समदृष्टिर्विशिष्यत इत्यर्थः ।। २१५ ।।

कृष्णामृतमहार्णवः

**[54]तिर्यक्पुण्ड्रं न कुर्वीत सम्प्राप्ते मरणेऽपि वा ।**
**[55]नचान्यन्नाम विब्रूयात्परान्नारायणादृते ।। २१६ ।।**

**ताम्रपर्णी**—उपक्रमे यैर्न लब्धा हरेर्दीक्षेत्यर्चनाङ्गविष्णुदीक्षाऽकरणे प्रत्यवाय उक्तः । **वैष्णवदीक्षा** च—

तापः पुण्ड्रस्तथा नाम मन्त्रो यागस्तथैव च ।
अमी हि पञ्चसंस्कारा वैष्णवत्वस्य हेतवः ।।

इत्युक्तेः पञ्चविधा । तत्र पुण्ड्रशब्दस्य नामशब्दस्य च साधारणत्वाद्विवक्षितं वक्तुं अन्यत्प्रतिक्षिपति— **तिर्यगिति** ।। तिर्यक्पुण्ड्राकरणे पाषण्डेन राज्ञा स्वस्य मरणे सम्प्राप्तेऽपीत्यर्थः । नामकरणकाले पुत्रस्य शिष्यस्य वा परान्नारायणादृतेऽन्यस्य नाम न कुर्वीत । लक्ष्म्याः ईशकोट्यन्तर्भावाद्वायोर्गुरुत्वात्तत्पत्न्या गुरुपत्नीत्वाद्गुरुनामकरणस्य शास्त्रे विहितत्वात्तन्नामकरणं साम्प्रदायिकमविरुद्धमिति ज्ञेयम् ।। २१६ ।।

**उमर्जी—**

तापः पुण्ड्रस्तथा नाम मन्त्रो यागस्तु पञ्चमः ।
अमी हि पञ्चसंस्काराः वैष्णवत्वस्य हेतवः ।।

इति प्रभृतिवचनोक्तकर्मविशेषाणामेव पूजानिमित्तत्वमभिहितम् । एवञ्च तिर्यक्पुण्ड्रादेरपि पूजानिमित्तत्वं प्राप्तमित्यत आह— **तिर्यक्पुण्ड्रमिति** ।। न कुर्वीत ललाटे न धारयेत् । मरणे मरणलक्षणबाधके सम्प्राप्तेऽपीत्यर्थः ।

त्रिपुण्ड्रधारणाद्विप्रः सद्यः पाषण्डतां व्रजेत् ।
नरके नियतं वासः भवतीत्यनुशुश्रुमः ।।
भक्त्या विरहितः पुण्ड्रधारणाद्भ्रश्यते हि सः ।।

इति निषेधवचनात् । नारायणादित्यस्य नारायणवाचकशब्दे लक्षणा । नारायणवाचकशब्दादृते इत्यन्वयः । "ऋते नारायणादीनि" इत्युक्तेरिति भावः । परं

---

५४. न भस्म धारयेद्विप्रः परमापद्गतोऽपि वा ।
मोहाद्वै बिभृयाद्यस्तु स सुरापो भवेद्ध्रुवम् ।। ४८ ।।
तिर्यक्पुण्ड्रधरं विप्रं पट्टाम्बरधरं तथा ।
श्वपाक इव वीक्षेत न सम्भाषेत कुत्रचित् ।।
तस्माद् द्विजातिभिर्धार्यमूर्ध्वपुण्ड्रं विधानत. ।। ४९ ।।वृद्धहारीतस्मृतौ अ.२ ।।

५५. अन्यानि चैव नामानि गुणयोगे भवन्ति हि ।
तस्य नैसर्गिकं नाम वैष्णवं तु भवन्ति हि ।।
प्रथमं वैष्णवं नाम सर्ववर्णेषु कीर्तितम् ।। २८ ।।
न चेत्तु वैष्णवं नाम यस्य वै द्विजसत्तमाः ।
अनामिकः स विज्ञेयः सर्वकर्मविगर्हितः ।। २९ ।। व्यासस्मृतौ अ.२ ।।

अन्यत् नाम शंकरादिनाम । चोऽवधारणे । नैव ब्रूयात् । "अन्यानि नैव नामानि नैव ब्रूयाद्धरेः क्वचित्" इति ।। २१६ ।।

**उपेन्द्र**—भगवत्पूजादौ फलसाधनमङ्गान्तरनिमित्तं वक्तुं तद्विरुद्धस्यानर्थकत्वात्सर्वथा न कर्तव्यमित्याह— **तिर्यक्पुण्ड्रमिति** ।। मरणे सम्प्राप्ते विद्यावान् धारयेत् नारायणादित्यस्य तद्वाचकशब्दे लक्षणा। तद्वाचकादन्यन्नाम अन्यदेवताकं नाम न ब्रूयादित्यन्वयः । "अन्यानि नैव नामानि" इति हारीतवचनात् ।।२१६।।

**कोनेरी**—एवं वैष्णवदीक्षामुक्त्वा अवैष्णवदीक्षायाः हेयत्वमाह— **तिर्यक्पुण्ड्रमिति** ।। यो विष्णुभक्तः मरणे मरणसंकटे सम्प्राप्तेऽपि तिर्यक्पुण्ड्रं न कुर्वीत न धारयेत् । तथा परात्सर्वोत्तमात् नारायणनाम्नः ऋते अन्यन्नाम रुद्रादिदेवतानाम न विब्रूयात् । स्वातन्त्र्येण विशिष्टमोक्षादिफलप्रदमिति न ब्रूयात् । किन्तु भगवद-धीनाः भगवद्भक्ताः अस्मदादिज्ञानोपदेष्टारः इति ब्रूयादिति ।। २१६ ।।

**कृष्णामृतमहार्णवः**

**नैवेद्यशेषं देवस्य यो भुनक्ति दिनेदिने ।**
**सिक्थे सिक्थे भवेत्पुण्यं चान्द्रायणशताधिकम् ।। २१७ ।।**

**ताम्रपर्णी**—पावनं विष्णुनैवेद्यमित्यादिनोक्तं विष्णुनैवेद्यभक्षणमपि तन्नामधारणवद्दासभावेनेत्याह— **नैवेद्यमिति** ।। अत एव तिर्यक्पुण्ड्रमिति दीक्षामध्ये सदृशन्यायेन नैवेद्यशेषोक्तिरिति ज्ञेयम् । तथाच भागवते—

त्वयोपभुक्तस्रग्गन्धवासोऽलंकारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ।। इति ।। २१७ ।।

**उमर्जी**—पूर्वोक्तसाधनानामपि पूज्यताप्रयोजकत्वज्ञापनाय पूर्वोक्तं स्मारयति- — **नैवेद्यशेषमिति** ।। देवस्य पुरतः निवेदितं समर्पितं यावद्वर्तते तावदशेषवस्तुजातं तुलसीविमिश्रितं हर्यर्पितं च भुनक्ति भुङ्क्ते । सिक्थे सिक्थे कवले कवले एकैकान्नपिण्डस्वीकारे ।। २१७ ।।

**उपेन्द्र**—पूर्वोक्तनियमविशेषस्य फलसाधनत्वेन कर्तव्यत्वमाह— **नैवेद्यशेषमिति** ।। भुक्तशेषं भुनक्ति भुङ्क्ते । सिक्थे सिक्थे एकैकान्नस्वीकारे । शताधिकं

पुण्यं लभेदित्यन्वयः । कवले कवले प्रतिकवले गोविन्दस्यानुकीर्तनं कुर्वन्पुरुषः नित्योपवासी भवतीति शेषः ।। २१७ ।।

**कोनेरी—**पूजाव्याजेन प्रसक्तहरिनैवेद्यस्वीकारफलमाह— **नैवेद्यशेषमिति** ।। योऽधिकारी हरेर्नैवेद्यशेषं निवेदितान्नशेषं भक्त्या दिनेदिने प्रतिदिने भुङ्क्ते सिक्थे सिक्थे कवले कवले स्वीकृते सति शतचान्द्रायणादधिकं पुण्यं प्राप्नोतीत्यन्वयः ।। २१७ ।।

कृष्णामृतमहार्णवः

*[५६]ऊर्ध्वपुण्ड्रमृजुं [१]सौम्यं ललाटे यस्य दृश्यते ।
स चण्डालोऽपि शुद्धात्मा पूज्य एवं न संशयः ।। २१८ ।।

**ताम्रपर्णी—**तर्हि कीदृशः पुण्ड्रो धार्य इत्याशंक्य रामानुजादिपुण्ड्रव्यावृत्त्यर्थं चार्थवाद-माह— **ऊर्ध्वेति** ।। ऋजुमवक्रं दण्डाकारम् । सौम्यं पार्श्वद्वये सूक्ष्मरेखा-युक्तम् । ऊर्ध्वपुण्ड्रं बिभृयादिति शेषः । तद्यस्य ललाटे दृश्यते स चण्डालोऽपी-त्यन्वयः। यद्वा ऋजुमिति विभक्तिलिङ्गव्यत्ययः । ऋजुरूर्ध्वपुण्ड्रः यस्य ललाटे दृश्यते स चण्डालोऽपीत्यत्यनध्याहारेणान्वयः ।। २१८ ।।

**उमर्जी—**पूज्यताप्रयोजकं पुण्ड्रं कीदृशमित्यत आह— **ऊर्ध्वमिति** ।। ऋजुं अवक्रं । सौम्यं कोमलम् ।। २१८ ।।

---

*अयं श्लोकः स्कान्दे २-५-३-२ ।

१. 'साम्यं' इति कोनेरी पाठः ।

५६. अथर्वशिरसि प्रोक्तमूर्ध्वपुण्ड्रविधिं द्विजाः ।
प्रवक्ष्यामि हितार्थं वः भवपापप्रणाशनम ।। १०३ ।।
ऊर्ध्वगत्यां तु यस्येच्छा तस्योर्ध्वं पुण्ड्रमुच्यते ।
ऊर्ध्वगत्यां तु देवत्वं स प्राप्नोति न संशयः ।। १०६ ।। वाधूलस्मृतौ ।।
ऊर्ध्वपुण्ड्रधरो मर्त्यो म्रियते यत्रकुत्रचित् ।
श्वपाकोऽपि विमानस्थो मम लोके महीयते ।।
स्नात्वा पुण्ड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना ।

**उपेन्द्र**—यदर्थं अन्यनिषेध अतस्तदाह— **ऊर्ध्वपुण्ड्रमिति** ।। ऋजुं कोमलं सौम्यमविक्लवम् ।। २१८ ।।

**कोनेरी**—तिर्यक्पुण्ड्रं हित्वा ऊर्ध्वपुण्ड्रधारणफलमाह श्लोकद्वयेन— **ऊर्ध्वमिति** ।। सौम्येन हरिभक्तिसमत्वेन ध्रियमाणम् । यद्वा सर्वदेहेषु समत्वेन विद्यमानत्वात्समो हरिः तत्सम्बन्धिनामयुक्तं सौम्यम् । "ललाटे केशवं विद्यात्" इति वचनानुसन्धानपूर्वकं धृतमित्यर्थः । ऋजुं दीर्घरेखावद्वर्तमानम् । ऊर्ध्वपुण्ड्रं यस्य ललाटे दृश्यते । जात्या स चण्डालोऽपि तिर्यक्पुण्ड्रधारिणो ब्राह्मणादपि शुद्धात्मा शुद्धान्तःकरणः पूज्य एव । विष्णुभक्त इति मनसा पूज्य एवेत्यर्थः । अस्मिन्नर्थे सन्देहो नास्ति । तदुक्तं सप्तमे—

विप्राद्द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचनात्मगेह-
प्राणः पुनाति सकलं नतु भूरिमानः ।। इति ।।
ये कण्ठलग्नतुलसीनलिनाक्षमाला
ये बाहुमूलपरिशोभितशङ्खचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्राः
ते वैष्णवाः भुवनमाशु पवित्रयन्ति ।। इति च ।। २१८ ।।

---

५६. देवानभ्यर्च्य गन्धेन सर्वदोषापनुत्तये ।। वीरमित्रोदयोदाहृतब्रह्माण्डवचनम् ।।
त्रिसन्ध्यासु मृदा विप्रो यागकाले विशेषतः ।
श्राद्धे दाने तथा होमे स्वाध्याये पितृतर्पणे ।।
श्रद्धालुरूर्ध्वपुण्ड्राणि बिभृयाद् द्विजसत्तमः ।। ५८ ।।
ऊर्ध्वपुण्ड्रं मृदा शुभ्रं ललाटे यस्य दृश्यते ।
चण्डालोऽपि हि शुद्धात्मा विष्णुलोके महीयते ।। ६६ ।।
ऊर्ध्वपुण्ड्रस्य मध्ये तु ललाटे सुमनोहरे ।
लक्ष्म्या सह समासीनो रमते तत्र वै हरिः ।। ६७ ।।
निरन्तरालं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः ।
स हि तत्र स्थितं विष्णुं श्रियञ्चैव व्यपोहति ।। ६८ ।वृद्धहारीतस्मृतौ अ.२ ।।
वीक्ष्यादर्शे जले वापि यो विदध्यात्प्रयत्नतः ।
ऊर्ध्वपुण्ड्रं महाभाग स याति परमां गतिम् ।। स्कान्दे २-५-२-१८ ।।

**स्मृ.कृष्णाचार्य**—एवं मोक्षार्थिभिः कर्तव्यान्नानाविधवैष्णवधर्मान्प्रमाणैराह—**ऊर्ध्वपुण्ड्रमित्याभिः श्लोकैः** ।।

ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमध्यपरिशोभितशङ्खचक्राः।
ये वै ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति ।।

इत्यादिवचनैरूर्ध्वपुण्ड्रधारणस्य विहितत्वात्तद्धारिणां फलविशेषमाह—**ऊर्ध्वपुण्ड्रमिति** ।। यस्य ललाटे ऊर्ध्वपुण्ड्रं गोपीचन्दनेन ऋजुं अवक्रं सौम्यं दृष्टिप्रियं दृश्यते द्रष्टृभिः । स ऊर्ध्वपुण्ड्रधर्ता चण्डालोऽपि कर्मभ्रष्टोऽपि विशुद्धात्मा भवति । तस्मात्तद्धारणं कार्यमिति ।। २१८ ।।

**ऊर्ध्वपुण्ड्रं ललाटे तु दण्डाकारं सुशोभनम् ।**
**मध्ये च्छिद्रेण संयुक्तं तच्छिद्रं मम मन्दिरम् ।।**

**स्मृ.कृष्णाचार्य**—ऊर्ध्वपुण्ड्रं ललाटे सच्छिद्रमेव धार्यं न निश्छिद्रं इत्यत्र विष्णुवाक्यं प्रमाणयति— **ऊर्ध्वपुण्ड्रमिति** ।। तस्य ललाटे ऊर्ध्वपुण्ड्रं गोपीचन्दनादिना दण्डाकारं सुशोभनं ऊर्ध्वपुण्ड्रमध्ये सच्छिद्रं छिद्रेण सहितं कार्यम् । तच्छिद्रं तस्मिन्नूर्ध्वपुण्ड्रे यच्छिद्रं अन्तरालमस्ति तत् मम मन्दिरं आवासस्थानम् । तस्मा-च्छिद्रमेव कार्यमिति ।। ममेति विष्णुवाक्यम् ।।

कृष्णामृतमहार्णवः

**[*]अशुचिर्वाप्यनाचारो मनसा पापमाचरन् ।**
**शुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्रांकितो नरः ।। २१९ ।।**

**ताम्रपर्णी**— ।। **अशुचिर्वेति** ।। अशुचिः अशौचादिनाऽपवित्रः । अनाचारः आचाररहितः । मनसा मनःपूर्वम् । पापं पराङ्गनागमनादिलक्षणम् । आचरन् दुर्विषयकामनादिलक्षणं पापं मनसा आचरन्निति वा ।। २१९ ।।

**उमर्जी**—धारणादिना पूज्यताप्रयोजकत्वस्य बाधः केनापि न भवतीत्याह—**अशुचिरिति** ।। न विद्यते नित्यनैमित्तिकादिविहिताचारो यस्य सः अनाचारः । पूज्यतायां शुचिरेव भवेत् ।। २१९ ।।

---

[*]अयं श्लोकः स्कान्दे २-५-२-१४ ।

**उपेन्द्र**—अनाचारः न विद्यते विहिताचारो यस्य स तथा ।। २१९ ।।

**कोनेरी**— ।। **अशुचिर्वेति** ।। शुचिर्ज्ञानी सः न भवतीत्यशुचिरज्ञानी अत एवा-नाचारः आचारयुक्तजनसङ्गवर्जितः मनसा पापमाचरन् ऊर्ध्वपुण्ड्रांकितश्चेत् नरो अधिकारी शुचिरेव भवेदित्यन्वयः ।। २१९ ।।

**स्मृ.कृष्णाचार्य**—ऊर्ध्वपुण्ड्रांकनस्याशुचित्वाद्यनिष्टपरिहारकत्वात् ऊर्ध्वपुण्ड्रांकनं सदा कार्यमित्याह— **अशुचिर्वेति** ।। यः अशुचिरपवित्रः अनाचारः श्रुतिस्मृत्या-द्युक्ताचाररहितो वा मनसा मनआदीन्द्रियैः पापं कुर्यात्सः नित्यं शुचिरेव भवेत् । कुत इत्यत उक्तम् ।। **ऊर्ध्वपुण्ड्रांकित इति** ।। तस्मात्स नरः शुचिरेवेति ।।२१९।।

**कृष्णामृतमहार्णवः**

**[५७]ऊर्ध्वपुण्ड्रविहीनस्य स्मशानसदृशं मुखम् ।**
**अवलोक्य मुखं तेषामादित्यमवलोकयेत् ।। २२० ।।**

**ताम्रपर्णी**—ऊर्ध्वपुण्ड्रत्यागे निन्दार्थवादमाह— **ऊर्ध्वपुण्ड्रविहीनस्येति** ।। जात्येकवचनम् । अवैष्णवेषु सर्वेषूक्तविधोर्ध्वपुण्ड्राहित्यमनुगतमिति । ते चानेकविधाः तिर्यक्पुण्ड्रिणः, पादाकारपुण्ड्रिणः, शृङ्गाकारोर्ध्वपुण्ड्रिणः, अपुण्ड्रिण इत्यादयः। तेषां मुखावलोकने प्रायश्चित्तमाह— **अवलोक्येति** ।। तेषां मध्ये एकस्यापि मुखमवलोक्य आदित्यमवलोकयेदित्यर्थः । किमु सर्वेषां मुखानीति भावः ।। २२० ।।

**उमर्जी**—व्यतिरेकमुखेनापि पूज्यताप्रयोजकत्वमुपपादयति— **ऊर्ध्वपुण्ड्रविही-नस्येति** ।। स्मशानसदृशं अवलोकनादियोग्या न भवन्तीत्यर्थः । तेषां अवैष्ण-वानां दानपात्रता नेति भावः ।। २२० ।।

**उपेन्द्र**—अकरणे प्रत्यवायमाह— **ऊर्ध्वपुण्ड्रविहीनस्येति** ।। "पुरुषमुखं स्मशान-सदृशममङ्गलम्" इत्यर्थः । तेषामूर्ध्वपुण्ड्ररहितानां मुखं यदृच्छया अवलोक्य प्रायश्चित्तार्थमादित्यमवलोकयेत् ऊर्ध्वपुण्ड्ररहितानां तु प्रायश्चित्तमेव नास्ति इति भावः ।। २२० ।।

---

५७. यदि स्यात्तु मनुष्याणामूर्ध्वपुण्ड्रविवर्जितम् ।
द्रष्टव्यं नैव तत्किञ्चित् श्मशानमिव तद्भवेत् ।। वृद्धहारीतस्मृतौ २-६५ ।।

**कोनेरी—**ऊर्ध्वपुण्ड्राभावे को दोष इति चेत्तत्राह— **ऊर्ध्वपुण्ड्रविहीनस्येति** ।। ऊर्ध्वपुण्ड्रविहीनस्य श्मशानं यथाऽमङ्गलं तथा तन्मुखममङ्गलम् । तादृशमुखं दृष्ट्वा तद्दोषपरिहारार्थं सूर्यमवलोकयेदित्यन्वयः ।। २२० ।।

**स्मृ.कृष्णाचार्य—**ऊर्ध्वपुण्ड्रं सच्छिद्रं **धार्यमित्युक्तम्** । **तद**धारणे दोषमाह— **ऊर्ध्वपुण्ड्रविहीनस्येति** ।। ऊर्ध्वपुण्ड्र**धारणमकृतवतः तस्य** पापिनः मुखं स्मशानसदृशं स्मशानवदपवित्रम् । दर्शने दोषपरिहारायोक्तम् ।। **अवलोक्येति** ।। तेषां ललाटे दण्डाकारोर्ध्वपुण्ड्ररहितमुखमवलोक्य तद्दोषपरिहारार्थं आदित्यमवलोकयेत्पश्येदिति । तस्मात्तद्रहिते दोषश्रवणात्सदा तद्धार्यमिति ।। २२० ।।

**कृष्णामृतमहार्णवः**

***[५८]यज्ञो दानं [१]तपश्चैव स्वाध्यायः पितृतर्पणम् ।**
**व्यर्थं भवति तत्सर्वं ऊर्ध्वपुण्ड्रं विना कृतम् ।। २२१ ।।**

**ताम्रपर्णी—**श्राद्धादिकृतिकालेषु तिलकं न धार्यम् । "ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः" इत्युक्तेरिति केचित् । तदपाकरोति— **यज्ञ इति** ।। यज्ञो दानं तपः कृच्छ्रचान्द्रा-यणादि स्वाध्यायः पितृतर्पणम् श्राद्धादि यत्तत्सर्वं नित्यनैमित्तिकं ऊर्ध्वपुण्ड्रं विना कृतं कर्म व्यर्थमेव भवतीत्यन्वयः ।। २२१ ।।

**उमर्जी—**ननु यज्ञादीनामेव पूज्यताप्रयोजकत्वमस्तु । तथा दृष्टत्वात् । किं तेनोर्ध्वपुण्ड्रादिनेत्यत आह— **यज्ञ इति** ।। यज्ञः पञ्चमहायज्ञः । होमः औपासनादि । ऊर्ध्वपुण्ड्रं विना ऊर्ध्वपुण्ड्रपदेन पञ्चसंस्कारास्तापआदयो लक्ष्यन्ते । पञ्चसंस्कारं विना । अवैष्णवकृतत्वाद्यज्ञादयो न पूज्यताप्रयोजका इति भावः ।। २२१।।

**उपेन्द्र—**ऊर्ध्वपुण्ड्रस्य पूजाद्यङ्गत्वं स्पष्टयति— **यज्ञ इति** ।। यज्ञः पञ्चमहायज्ञः । होमः औपासनम् ।। २२१ ।।

---

*अयं श्लोकः स्कान्दे २-५-२-२१ ।

१. 'तपो होम' इति स्मृ.कृ. तथा क. पाठः ।

५८. श्राद्धं होमस्तथा दानं स्वाध्यायः पितृतर्पणम् ।
भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् ।। वृद्धहारीतस्मृतौ २-५९ ।।

**कोनेरी**—न केवलं ऊर्ध्वपुण्ड्ररहितं मुखममङ्गलम् । किन्तूर्ध्वपुण्ड्ररहितेन पुरुषेण कृतं कर्मजातमपि व्यर्थमित्याह— **यज्ञ इति** ।। यज्ञः पञ्चमहायज्ञाः जात्यैकवचनम् । दानं तुलापुरुषदानादि । तपः उपवासादि । उग्रतपो वा । स्वाध्यायः अध्ययनं पितृतर्पणं च । एतत्सर्वं ऊर्ध्वपुण्ड्रं विना कृतं व्यर्थं भवति ।। २२१ ।।

**स्मृ.कृष्णाचार्य**—ऊर्ध्वपुण्ड्ररहितस्य तत्कृतसन्ध्यावन्दनादिसर्वकर्मणां निष्फलत्वश्रवणादूर्ध्वपुण्ड्रं सर्वकर्मसु कार्यमित्यत्र वचनमाह— **यज्ञ इति** ।। यज्ञः अश्वमेधादियज्ञाः पञ्चमहायज्ञाश्च । दानं महादानादिकं गोभूतिलहिरण्या-दिदानं च । तपः कृच्छ्रचान्द्रायणादितपश्च । होमः अग्निहोत्रौपासनादिहोमः । स्वाध्यायः वेदशास्त्राध्ययनादिकम् । तर्पणं पितॄणां श्राद्धे तिलतर्पणादिकं तथा देवर्षितर्पणादिकं च यत् तत्सर्वं नित्यनैमित्तिककर्मजातं व्यर्थं भवति । यतः ऊर्ध्वपुण्ड्रं विना कृतम् । तस्मादूर्ध्वपुण्ड्रं धृत्वैव सर्वं कर्तव्यमिति । दानं जप इति पाठे जपः गायत्रीब्रह्मयज्ञादिजपः सर्वं व्यर्थं भवतीति द्रष्टव्यम् ।।

नासिकामूलमारभ्य आकेशान्तं प्रकल्पयेत् ।
दण्डाकारं ललाटे तु हृदये पद्मकुड्मलम् ।।
वेणुपत्राकृती बाह्वोरन्यान्यन्दी दीपाकृतीन्न्यसेत् ।

इत्यादौ द्वादशोर्ध्वपुण्ड्रधारणप्रकारो द्रष्टव्यः ।।

मृदा गोपिकया चोर्ध्वपुण्ड्रं कुर्यात्समाहितः ।
के ललाटे च बाहौ च हृदये कण्ठ एव च ।। इति ।। २२१ ।।

**कृष्णामृतमहार्णवः**

**[1]गोपीचन्दनलिप्ताङ्गो यं [2]यं पश्यति चक्षुषा ।**
**तं तं शुद्धं विजानीयान्नात्र कार्या विचारणा ।। २२२ ।।**

**ताम्रपर्णी**—पुण्ड्रधारणं च भस्मनेति केचित् । शुद्धश्वेतमृत्तिकयैवेति रामानुजाः । तद्व्युदासाय कैमुत्यन्यायेन गोपीचन्दनस्य पवित्रहेतुत्वमाह— **गोपीति** ।। गोपीचन्दनलिप्ताङ्गानि ।

---

१. 'गोपीचन्दनलिप्ताङ्ग' इति उम. पाठः ।
२ 'प्रपश्यति' इति स्मृ.कृ. तथा कृ. पाठः ।

के ललाटे च बाहौ च हृदये कण्ठ एव च ।
नासिकामूलमारभ्य त्वाकेशान्तं प्रकल्पयेत् ।।
दण्डाकारं ललाटे तु हृदये पद्मकुड्मलम् ।
वेणुपत्राकृतिं बाह्वोरन्यान्दीपाकृतीन् न्यसेत् ।।

इत्यादिप्रमाणोक्तानि ललाटादीनि यस्य सः । यद्वा गोपीचन्दनेन लिप्ताङ्गः लाञ्छिताङ्ग इत्यर्थः । तल्लाञ्छनं च मुद्राभिः ।

तदुक्तं—

गोपीचन्दनतो नित्यं लाञ्छितो यस्य विग्रहः ।
शङ्खचक्रगदापद्मैर्देहे तस्य सदा हरिः ।। इति ।।

यं यं देशं पुरुषं वा ।। २२२ ।।

**उमर्जी**—गोपीचन्दनकृतोर्ध्वपुण्ड्रमेव पूज्यताप्रयोजकमित्याह— **गोपीचन्दन-लिप्त इति** ।। गोपिकानां चन्दनेन मृदात्मना परिणतेन गन्धेन । कृष्णेन साकं रासक्रीडासमये स्त्रीणां अङ्गलिप्तचन्दनं पर्वताकारेण तत्र तत्र पतितत्वात् । लिप्ता-ङ्गानि ऊर्ध्वपुण्ड्ररूपेण लेपनेन अंकनेन युतानि अङ्गानि यस्य तं पञ्चसंस्कार-वन्तमित्यर्थः । पुरुषं पश्यति तं तं पुरुषं शुद्धं पूज्यं द्रष्टा विजानीयात् ।।२२२।।

**उपेन्द्र**—ऊर्ध्वपुण्ड्रधारणं कया मृत्तिकयेत्यत आह— **गोपीचन्दनलिप्ताङ्ग इति** ।। गोपीचन्दनेन धृतोर्ध्वपुण्ड्रः अङ्गो यस्य स । यं यं पुरुषं पश्यति तं तं शुद्धं विजानीयादित्यर्थः ।। २२२ ।।

**कोनेरी**—तिर्यक्पुण्ड्रधारणेऽनर्थमापाद्य गोपीचन्दनेनोर्ध्वपुण्ड्रं धृतवतो फलमाह— **गोपीचन्दनलिप्ताङ्ग इति** ।। गोपीचन्दनेन लिप्तं ऊर्ध्वपुण्ड्रादिना चिह्नितं अङ्गं यस्य स पुमान् यं यं पदार्थं चक्षुषा पश्यति तं तं पदार्थं शुद्धं पवित्रमिति विजानीयात् । येन केन निमित्तेन अशुद्धं चेत्तादृशं वस्तु शुद्धं भवति । न स्वरूपतो अशुद्धमिति भावः । अत्रास्मिन्विषये शुद्धमभृद्वा न वेति विचारणा न कार्येत्यन्वयः ।। २२२ ।।

**स्मृ.कृष्णाचार्य**—तथा आचम्य गोप्या पुण्ड्राणि धारयेत्सुसमाहितः इत्यादि-वचनैर्गोपीचन्दनेनोर्ध्वपुण्ड्रं धार्यमिति सिद्धवत्कृत्य तद्धारणे फलमाह— **गोपीच-**

न्दनेति ।। यः गोपीचन्दनलिप्ताङ्गः गोपीचन्दनेन लिप्तानि अङ्गानि ललाटहृदयबाहु-द्वयवयवानि यस्य सः अधिकारी यं यं जनं देशं वस्तु वा प्रपश्यति प्रकर्षेण पश्यति । तं तं देशं शुद्धं पवित्रमिति विजानीयात् । अत्र उक्तार्थे विचारणा विचारो न कार्यः न कर्तव्यः । तस्माद्गोपीचन्दनधारणं प्रशस्तमिति ।। २२२।।

**कृष्णामृतमहार्णवः**

**आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ।**
**वैष्णवोऽस्मत्कुले जातः स नः सन्तारयिष्यति ।। २२३ ।।**

**ताम्रपर्णी**—वैष्णवेनोर्ध्वपुण्ड्रधारणपूर्वकं कृतमेव श्राद्धादिकं पितृतुष्टिकरमन्यथा अनर्थकर्मित्युक्तं यत्तत्पितृवचनतत्क्रियाभिज्ञायत इत्याह— **आस्फोटयन्तीति**।। वैष्णवो विष्णुभक्तो विष्णुदीक्षावानस्मत्कुले जातः स नः श्राद्धादिना सन्तार-यिष्यतीति वचनात्पूर्वं पितरः पितृपितृव्यज्येष्ठभ्रात्रादयः, पितामहाः पितामहप्रपिता-महादयः आस्फोटयन्ति आस्फोटनं कुर्वन्ति उत्साहशब्दं कुर्वन्तीत्यर्थः।।२२३।।

**उमर्जी**—ऊर्ध्वपुण्ड्रधारणात्पितृणां हर्षपरं वाक्यमुदाहरति— **आस्फोटयन्तीति**।। तत्पितरः तत्पितामहाः । **वैष्णवः पञ्चसंस्कारवानित्यर्थः** । पुण्ड्रादिप्रकरणत्वा-द्वैष्णवत्वस्य हतवति प्रमाणवचनात् इति प्रनृत्यन्तीति शब्दाध्याहारेणान्वयः ।। २२३ ।।

**उपेन्द्र**—ऊर्ध्वपुण्ड्रधारणात्स्वपितृणां हर्ष इति वाक्यं पठति— **आस्फोटय-न्तीति**।। भुजद्वयास्फोटनं कुर्वन्तीत्यर्थः । हर्षनिमित्तमाह— **वैष्णव इति** ।। विष्णुप्रीतिकरोर्ध्वपुण्ड्रादिसंस्कारवान् ।। २२३ ।।

**कोनेरी**—न केवलं एतावानेव विष्णुभक्तस्य महिमा । अपि तु वैष्णवोत्पत्तिवेला-यामेव पितृणामानन्दातिशयो भविष्यतीत्याह— **आस्फोटयन्तीति** ।। पितरः वृद्ध-पितरः पितामहादयश्चास्मत्कुले इदानी वैष्णवो जातः सः नः अस्मान् सम्यक् तार-यिष्यतीति सम्भ्रमेण आस्फोटयन्ति नृत्यन्ति नर्तनं कुर्वन्तीति भावः ।। २२३ ।।

**स्मृ.कृष्णाचार्य**—एवं ध्यानादियुक्तविष्णुभक्तस्य जन्मतः पुत्रस्य सर्वाधिक्यं पितृवचनेन दर्शयति— **आस्फोटयन्तीति** ।। वैष्णवो विष्णुभक्त्यादिमान् अस्म-

त्कुले जातः पुत्रः सः नः नरके पच्यमानान् अस्मान् नरकेभ्यः सन्तारयिष्यति । सम्यङ्नरकादुद्धृत्य रक्षतीति पितरः विष्णुभक्तपुत्रस्य पितरो आस्फोटयन्ति भुजस्फोटनं कुर्वन्ति । तस्य पितामहाः पितामहप्रपितामहादयः प्रनृत्यन्ति प्रकर्षेण नर्तनादिकं कुर्वन्ति । तस्माद्वैष्णवपुत्रस्य जन्मतः पित्राद्युद्धारकत्वेन सन्तोषकारणत्वाद्वैष्णवेन सदा भाव्यमिति भावः ।। २२३ ।।

कृष्णामृतमहार्णवः

**जीवितं विष्णुभक्तस्य वरं पञ्चदिनान्यपि ।**
**नतु कल्पसहस्रैस्तु भक्तिहीनस्य केशवे ।। २२४ ।।**

**ताम्रपर्णी**—"अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः" इति वचनाज्ञातस्यापि जीवस्थैर्याभावात्कथं तस्य सन्तारकत्वमित्यत आह— **जीवितमिति** ।। विष्णुभक्तस्य आविर्भूतविष्णुभक्तियुतस्य पञ्चदिनान्यपि अपिशब्दात्तन्न्यूनदिनान्यपि । जीवितं जीवनं वरं स्वपरतारकम् । केशवे भक्तिहीनस्य कल्पसहस्राण्यपि जीवनं नैव तारकमित्यर्थः ।। २२४ ।।

**उमर्जी**—एवमर्चनस्मरणकीर्तनादिना विष्णुभक्तिं सम्पाद्य स्थितस्य जीवनं सार्थकं इत्युपसंहरति— **जीवितमिति** ।। वरं पुरुषार्थसाधनम् । भक्त्यभावे जीवनं व्यर्थमित्याह— **नत्विति** ।। २२४ ।।

**उपेन्द्र**—विष्णुभक्तिरेव पुरुषार्थसाधिकेत्याह— **जीवितमिति** ।। भक्त्या जीवनं वरं फलसाधनमित्यर्थः । तुशब्द एवार्थे । नैवेत्यर्थः ।। २२४ ।।

**कोनेरी**—पुनरपि श्लोकद्वयेन वैष्णवप्रशंसामाह— **जीवितमिति** ।। विष्णुभक्तस्य पञ्चदिनानि जीवितं वरं उत्तमम् । तावदायुरेव मोक्षसाधकं भवति । तदुक्तं द्वितीयस्कन्धे—

खट्वाङ्गो नाम राजर्षिर्ज्ञात्वेयत्तामिहायुषः ।
मुहूर्तात्सङ्गमुत्सृज्य गतवानभयं हरिम् ।। इति ।।

केशवे भक्तिहीनस्य कल्पकोटिशतैरपि । जीवितं न सार्थकम् । व्यर्थमित्यर्थः । तदप्युक्तम् ।

आयुर्हरति वै पुंसां उद्यन्नस्तं च यन्नासौ ।
तस्यर्ते यः क्षणो नीतः उत्तमश्लोकवार्तया ।। इति ।। २२४ ।।

**स्मृ.कृष्णाचार्य—**विष्णोर्माहात्म्यज्ञानपूर्वकसुदृढस्नेहलक्षणभक्तिमतो जीवनमेव सार्थकं तद्रहितस्य जीवनं व्यर्थं तस्माद्विष्णौ भक्तिः सदा कार्येति । तत्र वचनमाह— **जीवितमिति**।। विष्णुभक्तस्य विष्णावसाधारणभक्तिमतः पुंसः पञ्चदिनानि पञ्चदिनमात्रेण जीवितं अधिकारिणः वरं श्रेष्ठमेव । तस्मात्सदा भक्तिः कर्तव्या । अतः तद्रहितस्य जीवनं व्यर्थमित्याह— **नत्विति** ।। केशवे भक्तिहीनस्य कर्तव्यभक्तिरहितस्य पुरुषस्य कल्पसहस्रैः ब्रह्मकल्पसहस्रैरपि जीवितं वरं न भवति । तादृशजीवनमपि न कार्यमिति भावः । तस्माद्विष्णौ भक्तिस्सदा कार्येति ।।२२४।।

**कृष्णामृतमहार्णवः**

**किं तेन जातमात्रेण भूभारेणात्रशत्रुणा ।**
**यो जातो नार्चयेद्विष्णुं न स्मरेन्नापि कीर्तयेत् ।। २२५ ।।**

**ताम्रपर्णी—**ननु जातमात्रपुत्रनिरीक्षणेन मोक्षोक्तेः किं जातस्य वैष्णवत्वेनेत्यत आह— **किं तेनेति** ।। यो जातु कदाचित् वैष्णवदीक्षाभियुक्तो विष्णुं नार्चयेत्। न स्मरेत् नापि कीर्तयेत् । तेन जातमात्रेण किं प्रयोजनम् । न किमपि । न केवलं प्रयोजनाभावः किन्तु तज्जीवनमनिष्टं चेति भावेनोक्तम् ।। **भूभारेणेति** ।। भारतुल्यत्वाद्भूभारेण केवलमशनार्थमेव जीवनप्राप्त्याऽन्नशत्रुणेत्यर्थः । तथाच वैष्णवदीक्षाया आवश्यकत्वाद्गोपीचन्दनेनोर्ध्वपुण्ड्रादि धार्यमिति भावः ।। २२५ ।।

**उमर्जी—**लक्षयोन्युत्पत्त्यपेक्षया मानुषजन्मनः श्रेष्ठत्वात्तदेव फलरूपमित्याह-- **किं तेनेति** ।। वैय्यर्थ्यमेवोपपादयति— **भूभारेणेति** ।। यो जातो नार्चयेदित्यन्वयः ।। २२५ ।।

**उपेन्द्र—**वैय्यर्थमेवोपपादयति— **किं तेनेति** ।। केवलजन्मतः किम् । न किमपि फलजनकत्वाभावादित्यर्थः ।। २२५ ।।

**कोनेरी—**जन्ममात्रेण साफल्यं किन्न स्यादिति तत्राह— **किमिति** ।। यो भुवि जातः सन् विष्णुं भक्त्या नार्चयेत् । सर्वोत्तम इति ज्ञानपूर्वकं न स्मरेत् । अन्न-

शत्रुणा स्वोदरमात्रपूरकेण भुवः भारभूतेन जातमात्रेण भुवि जन्ममात्रं प्राप्तेन तेन पुरुषेण प्रयोजनं किम् । न किमपि । उक्तं भागवते—

तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत ।
न खादन्ति न मेहन्ति किं गृध्राः पशवोऽपरे ।।
श्वविड्वराहोष्ट्रखरैः सु तुल्यः पुरुषः पशुः ।
न यत्कर्णकथोपेतः जातु नाम गदाभृतः ।। इति ।। २२५ ।।

**स्मृ.कृष्णाचार्य**—भगवदर्चनस्मरणकीर्तनादिरहितस्य मानुषदेहं प्राप्तस्य जननं व्यर्थं भूभारत्वाद्भोजनान्नशत्रुत्वाच्च । अतस्तदर्चनादिकं सदा कार्यमित्यभिप्रेत्य वचनमाह— **किं तेनेति** ।। यः जातः मनुष्ययोनौ जातः उत्पन्नः पुरुषः विष्णुं नार्चयेत् । पूजासाधनद्रव्यैः काले काले न पूजयेत् । न स्मरेत् भगवन्माहात्म्य-ज्ञानपूर्वकं स्मरणं न कुर्यान्नापि कीर्तयेत् भगवन्नामार्थानुसन्धानपूर्वकं कीर्तनं न कुर्यात् । तेन तादृशभगवदर्चनादिरहितेन जातमात्रेण भगवद्धर्मरहितेन केवलजातेन किं फलम् । मानुषदेहे कर्तव्यस्याकृतत्वात् ।। किञ्च तादृशजन्म तस्य व्यर्थमित्याह-– **भूभारेणेति** ।। भूमेर्भारभूतत्वादन्नशत्रुणा अन्नस्य भोज्यान्नस्य वृथा भोक्तृत्वेन शत्रुभूतत्वात्तस्य जननं व्यर्थमिति। तस्मान्मनुष्यदेहे तदर्चनादिकं कार्यमिति ।। २२५ ।।

**श्वपाकमिव नेक्षेत लोके विप्रमवैष्णवम् ।**
**वैष्णवो वर्णबाह्योऽपि पुनाति भुवनत्रयम् ।।**

**स्मृ.कृष्णाचार्य**—विष्णौ भक्त्यादिहीनब्राह्मणापेक्षया वर्णबाह्यविष्णुभक्तस्य सर्वपावित्र्यकरणमाहात्म्यश्रवणाद्विष्णुभक्त्या सदा भाव्यमित्यत्र वचनमाह— **श्वपाकमिति** ।। लोके कर्मभूमौ अवैष्णवं उक्तरीत्या भक्त्या भगवदर्चनादिवैष्णव-धर्मरहितं विप्रमपि यज्ञादिविशिष्टकर्मकर्तृपुरुषमध्ये प्रकृष्टमपि ब्राह्मणं नेक्षेत अवलोकनं न कुर्यात्। तत्र दृष्टान्तः । श्वपाकमिव श्वानमांसादिपाचकं भ्रष्टमिव । वैष्णवः विष्णुभक्त्यादियुक्तश्चेत्सः वर्णबाह्योऽपि ब्राह्मणादिवर्णबाह्यः चण्डालोऽपि भुवनत्रये विद्यमानं जनं पुनाति विष्ण्वसाधारणभक्तिस्मरणनामकीर्तनादिना पुनाति पवित्रं करोति ।

विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचनार्थगेहप्राणः पुनाति सकलं ननु भूरिमानः ।।

इति भागवतोक्तेश्च सकलं पुनातीत्यर्थः ।। तथाच वर्णबाह्यस्यापि वैष्णवधर्मेण पावनहेतुत्वात् सर्वैः वैष्णवधर्मेण भाव्यमित्युक्तं भवति ।।

**वैष्णवो यद्गृहे भुङ्क्ते येषां वैष्णवसङ्गतिः ।**
**तेऽपि वः परिहर्तव्याः सत्सङ्गहतकिल्बिषाः ।।**

**स्मृ.कृष्णाचार्य**—विष्णुभक्त्यादिधर्मयुक्ताः येषां गृहे भुञ्जते तेषां महात्मनां सङ्गतिरस्ति तेऽपि भवद्भिर्मद्दर्शनार्थं नानेयाः किन्तु दूरे परिहर्तव्या इति । स्वदूतान्प्रति यमवचनात् वैष्णवत्वं सर्वैस्सम्पाद्यमिति तद्वचनमाह— **वैष्णव इति** ।। वैष्णवः विष्णुभक्त्यादिविशिष्टो ब्राह्मणः यद्गृहे यस्य गृहस्थस्य गृहे अतिथित्वादिनाऽगत्य भुङ्क्ते । तथा तेषां पुरुषाणां वैष्णवसङ्गतिः आसनशयनगमनपानभोजनादौ वैष्णवानां सङ्गतिः वैष्णवैस्सह सङ्गतिरस्ति । तेऽपि वैष्णवसत्कारकर्तारोऽपि वो युष्माभिः परिहर्तव्याः मल्लोकनरकदर्शनार्थं परिहर्तव्याः। नतु मत्समीपं प्रत्यानेतव्याः इति । तेषां पापिष्ठत्वात्कथं परिहर्तव्या इत्यत आह— **सत्सङ्गेति** ।। सतां विष्णुभक्तानां अन्नदानशयनसहवासादिभिर्हतकिल्बिषाः नष्टपापा गृहस्थाः यतः अतः ते परिहार्या इति यमभटान्प्रति यमवचनम् ।। अतो वैष्णवत्वं सम्पाद्यमिति ।।

**विष्णुभक्तस्य ये दासाः वैष्णवान्नं च भुञ्जते ।**
**तेऽपि तद्वत् द्विजा वैश्य गतिं यान्ति निराकुलाः ।।**

**स्मृ.कृष्णाचार्य**—विष्णुभक्तानां दास्यतदन्नभोजनादिना महाफलोक्तेः वैष्णवदीक्षया भाव्यमित्युत्तरश्लोकैराह— **विष्णुभक्तस्येत्यादिना** ।। विष्णुभक्तस्य विष्णुदीक्षापूर्वकमष्टाक्षरद्वादशाक्षरमन्त्रनिष्ठायुक्तस्य महात्मनो गृहस्थस्य ये दासाः दास्यकर्तारः तादृशवैष्णवान् ये अनुवर्तन्ते तेऽपि द्विजाः तद्वद्गतिं यान्ति । अन्नदातृविष्णुभक्तस्य महात्मन इव गतिं मोक्षलक्षणं यान्ति प्राप्नुवन्ति ।। कथम् । निराकुलाः वैष्णवान्नभोजनादिना सांसारिकमनोव्याकुलैर्रहिताः सन्त इति । हे वैश्य इति कस्यचिदृषेः सम्बोधनम् ।।

**प्रार्थयेद्वैष्णवस्यान्नं प्रयत्नेन विचक्षणः ।**
**सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ।।**

**स्मृ.कृष्णाचार्य—**विचक्षणः स्वात्मोद्धारकुशलः नरो वैष्णवस्य महात्मनः अन्नपानादिकं प्रार्थयेत् । प्रयत्नेन तेषां गृहं गत्वा अन्नादिकं प्रदेयमिति प्रार्थयेत् । नमस्कृत्वा प्रार्थनं कुर्यात् । एवं वैष्णवान्नभोक्तुः फलं किमित्यत आह— **सर्वपापेति** ।। स्वकृतनानाविधानेकसञ्चितपापैर्विनिमुक्तो विष्णुलोके वैकुण्ठादौ महीयते स्वावरैः पूज्यते । तस्माद्वैष्णवान्नं महत्फलदमित्युक्तं भवति ।।

**महापातकसंयुक्तो व्रजेद्वैष्णवमन्दिरम् ।**
**याचयेदन्नममृतं तदभावे जलं पिबेत् ।।**

**स्मृ.कृष्णाचार्य—**वैष्णवान्नस्य महापातकनिवर्तकत्वान्महात्मनामन्नं याचयेत् । कीदृशं अन्नं विष्णुनिवेदनेनामृतं अमृततुल्यं शुद्धमन्नं देयमिति प्रार्थयेत् । अहं पञ्चमहापातकी मत्पातकपरिहारार्थं भवतः गृहे भगवन्निवेदितमन्नं देयमिति प्रार्थयेदित्याह— **महापातकेति** ।। पञ्चमहापातकसंयुक्तः सम्यक्सम्बद्धः पापपुरुषः अन्नार्थं वैष्णवगृहं प्रति स्वयमेव व्रजेत् गच्छेत् । गत्वा तेषामन्नं याचयेत् । कीदृशमन्नं विष्णुनिवेदनेन अमृतममृततुल्यं शुद्धमन्नं प्रार्थयेत् । अहं पञ्च-महापातकी, मत्पातकपरिहारार्थं भवतः गृहे भगवन्निवेदितमन्नं देयमिति प्रार्थयेत् । तद्गृहे तस्यान्नस्याभावे स्वयमन्नदानयोग्यो न भवतीति वैष्णवान्नस्यालाभे जलं पिबेत् । तत्र विद्यमानं भगवन्निवेदितं तत्पीतशेषं जलं याचयित्वा स्वपापनिवृत्त्यर्थं पिबेत् पानं कुर्यात् । तादृशजलपानेनापि अलं निष्पापो भवतीति भावः ।।

**सर्वपापविशुद्ध्यर्थं विष्णुभक्तगृहं व्रजेत् ।**
**तं नमस्कृत्य भक्त्या तु याचयेदन्नमुत्तमम् ।।**

**स्मृ.कृष्णाचार्य—**उक्तार्थे वचनान्तरमाह— **सर्वेति** ।। सर्वपापविशुद्ध्यर्थं स्वकृत महापातकादिपापैर्विशुद्ध्यर्थं विष्णुभक्तस्य पुण्यक्षेत्रादौ विद्यमानस्य गृहं प्रति गच्छेत् । तत्र विद्यमानं वैष्णवं नमस्कृत्य तदन्नं याचयेत् । किमिति । मत्कृतानेकपापपरिहारः युष्माभिर्भगवन्निवेदितान्नभक्षणेन भूयादिति भक्त्या तं याचयेत । तदन्नस्य पापपरिहारकत्वं कुत इत्यत उक्तम ।। **उत्तममिति** ।।

विष्णोर्निवेदितस्य वैष्णवभुक्तशेषस्यान्नस्योत्तमफलप्रदत्वात्तदन्नं याचयेत् । तदन्न-भोजनेन तस्य सर्वपापपरिहारो भवतीत्यर्थः ।

**साङ्गं समुद्रं सन्न्यासं सहर्षिच्छन्ददैवतम् ।**
**सदीक्षाविधिवत्स्नानं सयन्त्रं द्वादशाक्षरम् ।।**

**स्मृ.कृष्णाचार्य**—एतावत्पर्यन्तमुक्तं वैष्णवमाहात्म्यं दृढीकर्तुं वैष्णवानामसाधा-रणलक्षणमाह— **साङ्गमित्यादिना** ।। द्वादशाक्षरं वासुदेवद्वादशाक्षरमष्टाक्षरं नारायणाष्टाक्षरं वा मन्त्रं जपन्तः एते वैष्णवा ज्ञेया इति सम्बन्धः ।। तं मन्त्रं वैष्णवं कथं जपन्तः वैष्णवा इत्यत उक्तम् ।। **साङ्गमिति** ।। साङ्गं अङ्गन्यासससहितम् । सहर्षिछन्ददैवतं तन्मन्त्रद्रष्टा ऋषिः, छन्दोजगत्यादि छन्दांसि, दैवतं तन्मन्त्रप्रति-पाद्यदेवता तैस्सहिता सा दीक्षा वैष्णवदीक्षा । तया तेन मन्त्रेण विधिवत्स्नानं यत्तत्सहितम् । सयन्त्रं द्वादशाक्षरादिमन्त्रैर्यन्त्रकरणम् । एतादृशं द्वादशाक्षरमन्त्रं एतादृशमष्टाक्षरमन्त्रं वा जपन्तस्ते वैष्णवा इत्यर्थः ।।

**अष्टाक्षरं च मन्त्रेशं जपन्तस्ते हि वैष्णवाः ।**
**तान् दृष्ट्वा ब्रह्महा शुद्धः स्यादन्यो वैष्णवः स्वयम् ।।**

**स्मृ.कृष्णाचार्य**—मन्त्रद्वयजपमात्रस्य कथं वैष्णवत्वसम्पादकत्वं, इतरमन्त्राणां सत्वादित्यत उक्तम् ।। **मन्त्रेशमिति** ।। सर्वमन्त्रेष्वनयोरेव श्रेष्ठत्वाद्वैष्णवत्व-सम्पादकत्वमित्यर्थः । अत्र समाख्या—

तापःपुण्ड्रस्तथा नाम मन्त्रो यगस्तु पञ्चमः ।
अमी हि पञ्चसंस्कारा वैष्णवत्वस्य हेतवः ।।

एतादृशवैष्णवदर्शने फलं पूर्वोक्तमेव भवतीति उपसंहारेणाह— **तान् दृष्ट्वेति** ।। एतादृशविष्णुभक्तान् ब्रह्महापि दृष्ट्वा शुद्धः स्यात् । अवैष्णवस्य पापिनः कथं वैष्णवदर्शनेन शुद्धिरित्यत उक्तम् ।। **वैष्णवः स्वयमिति** ।। स्वयं वैष्णवः विष्णुदीक्षायुक्तः सन् प्रमादेन पापादिसम्बन्धे सति तत्परिहारार्थं तान्दृष्ट्वा तद्दर्शनं कृत्वा विशुद्धः स्यादिति। तस्माद्वैष्णवत्वं सर्वेषामतिदुर्लभम् इति नानाप्रकारेण विष्णुभक्त्या वैष्णवत्वं सम्पाद्य मुक्तो भवेदिति भावः ।।

**कृतघ्नो वाऽथ गोघ्नो वा हैतुकः सर्वपातकः ।**
**गोपीचन्दनसम्पर्कात्पूतो भवति मानवः ।।**

गोपीचन्दनसम्पर्कमात्रेणापि महापातकादिपापकृतां पावित्र्यकरणश्रवणाद्गोपीचन्दनेनैवोर्ध्वपुण्ड्रं धार्यमित्यत्र वचनमाह— **कृतघ्नो वेति** ।। कृतघ्नः अन्यैः कृतोपकारानुसन्धानरहितः । गोघ्नः ज्ञानतः अज्ञानतो वा गवां हन्ता । हैतुकः वेदशास्त्राद्युक्तार्थेषु हेतुवादकर्ता किं बहुना सर्वपापकर्ताऽपि मानवः गोपीचन्दनस्य सम्पर्कमात्रेण पूतो भवति । स्वकृतपापपरिहारद्वारा परमपवित्रो भवतीत्यर्थः । तस्मादेतादृशमाहात्म्यवत्त्वात् गोपीचन्दनेनैवोर्ध्वपुण्ड्राणि धार्याणीति भावः । "गोपीचन्दनतो नित्यं लाञ्छितो यस्य विग्रहः" इत्यादिवचनान्तरमत्र ज्ञेयम् ।।

**नावैष्णवाय दातव्यं नोदबिन्दुं न तण्डुलम् ।**
**चक्रांकिताय दातव्यं हव्यं कव्यं द्विजातये ।।**

**स्मृ.कृष्णाचार्य**—एवं गोपीचन्दनधारणे फलमुक्त्वा वैष्णवस्य भगवत्प्रीतिकरतप्तचक्रधारणं कार्यमिति वक्तुं तद्वत एव दानादिकं कार्यम्। नतु तद्रहितस्येत्यत्र वचनमाह— **नावैष्णवायेति**।। अवैष्णवाय ऊर्ध्वपुण्ड्रादिचक्रशङ्खादिवैष्णवचिह्नरहिताय तण्डुलादिकं न दातव्यम् । "नोदबिन्दुं न तण्डुलमि"त्युक्तेः उदबिन्दुमपि न देयम् । तद्दाने दोषश्रवणात् । किन्तु चक्रांकिताय भगवच्चक्रशङ्खादिना अंकिताय वैष्णवाय द्विजातये हव्यं देवतोद्देशेन देयं, कव्यं पित्रुद्देशेन देयं, तत्सर्वं चक्रांकिताय दातव्यमित्युक्तेः ।।

[५९]**दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।**
**वामे शङ्खं च बिभृयात्तद्विष्णोरिति वै ऋचा ।।**

**स्मृ.कृष्णाचार्य**—चक्रादिकं धार्यमित्यत्र स्थानविशेषं प्रमाणेन दर्शयति— **दक्षिणे त्विति** ।। विप्रः ब्राह्मणेषु विशिष्टः सुदर्शनं भगवच्चक्रप्रतिमाभृतं सुदर्शनं दक्षिणे भुजे दक्षिणबाहौ बिभृयात् । तथा वामे बाहौ शङ्खं च बिभृयात् । अग्रौ तप्तं सुदर्शनं शङ्खं च गुरुमुखेन स्वयं लाञ्छयेत् । तत्र धारणे मन्त्रमाह— **तद्विष्णो-**

---

५९. शङ्खचक्रांकनं कुर्यादात्मनो बाहुमूलयोः ।
कलत्रापत्यभृत्येषु पश्चादेष विमत्सरे ।। योगसारस्मृती १.३५ ।।

रिति ।। "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति ऋचा मन्त्रेण तप्तचक्रादिलाञ्छनं कुर्यादिति ।।

**उपवीती बद्धशिखो ब्राह्मणो भुजमूलयोः ।**
**धारयेदब्जचक्रे तु पवित्रं त इति श्रुतिः ।।**

तद्धारणे पुनः प्रकारमाह— **उपवीतीति** ।। ब्राह्मणः ब्रह्माणनयोग्यः वैष्णवः भुजमूलयोः स्वस्य भुजद्वयमूले अब्जचक्रे गुरुभिः मन्त्रवत्तया पूजिततप्तशङ्खचक्रे। "सुदर्शन महाज्वाल कोटिसूर्यसमप्रभे" त्युक्तप्रार्थनापूर्वकं गुरुहस्तेन धारयेत् । भुजे धारयेदिति । तप्तचक्रादिधारणेषु पुनर्मन्त्रमाह— **पवित्रमिति** ।। "पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्नतदामो अश्नुत" इति श्रुतिः यतः, अतः तप्तचक्रादिधारणं कर्माङ्गभूतं सर्वैः धार्यमिति । 'उपवीती बद्धशिख' इति शुचित्वोपलक्षणमेतत् । 'पवित्रं त' इति श्रुत्युदाहरणं तप्तचक्रधारणपरमिति ।।

**पञ्चायुधानि धार्याणि भक्तिश्रद्धोपबृंहितैः ।**
**ललाटे मूर्ध्नि हृदि बाह्वोः एकैकं तु पृथक्पृथक् ।।**

एवं तप्तचक्रधारणं कार्यमिति अभिधाय—

पञ्चायुधानि धार्याणि गोपीचन्दनमृत्स्नया ।
प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यति ।।

इत्युक्तवचनानुसारेण पञ्चायुधानि धार्याणीति प्रमाणेनाह— **पञ्चायुधानीति** ।। भक्तिश्रद्धोपेतैर्भगवद्भक्तैः तद्भक्तितत्कर्मास्तिक्यबुद्ध्यादिसहितैर्भक्तैः पञ्चायुधानि चक्रादीनि गोपीचन्दनमृत्स्नया धार्याणि । कुत्र कुत्र धार्याणीत्यपेक्षायामाह— **ललाटेति** ।। एकैकं चक्रादिकं ललाटे मूर्ध्नि हृदि बाह्वोः पृथक्पृथग्धार्याणीति सामान्येनोक्त्वा तद्धारणस्थानान्याह— **ललाटेति** ।। ललाटे गदा गोपीचन्दनेन धार्या । दरं मूर्ध्नि, चापं शरं हृदि पद्मं, नन्दकं भुजद्वये । शङ्खचक्रे गोपीचन्दनेन धार्ये इति । एतद्धारणं अधिकारिविशेषविषयमिति ज्ञेयम् । नरसिंहपुराणे प्रकारान्तरेण पञ्चायुधधारणस्योक्तेः ।

दक्षे बाहौ स्तने पार्श्वे द्वे द्वे चक्रे तथा हृदि ।
शङ्खमेकं बाहुमूले शङ्खचक्रे गले तथा ।।

कुक्षौ चतुष्टयं धार्यमेकं पृष्ठे च मूर्धनि ।
वामपार्श्वे स्तने बाहौ गलपार्श्वे गलेऽपि च ।
हृदये पृष्ठमूले च द्वौ द्वौ शंखौ च धारयेत् ।।
चक्रमेकं बाहुमूले हृदि पद्मं च धारयेत् ।
दक्षिणे बाहुमूले च धरेत्पद्मद्वयं तथा ।।
ललाटे तु गदा धार्या वामबाहौ गदाद्वयम् ।
चतुर्दशसु स्थानेषु मुद्रां नारायणीं धरेत् ।।
धार्याः पञ्चमहामुद्राः ब्रह्मस्थाने विशेषतः ।।

इत्यादिनोक्तप्रकारेण चक्रशङ्खादिपञ्चायुधानि धार्याणि ।
तदुक्तम्—

गोपीचन्दनतो नित्यं लाञ्छितो यस्य विग्रहः ।
शङ्खचक्रगदापद्मैः देहे तस्य सदा हरिः ।। इति ।।

**कृष्णामृतमहार्णवः**

**[६०]यो ददाति द्विजातिभ्यश्चन्दनं गोपिमर्दितम् ।**
**अपि सर्षपमात्रेण पुनात्यासप्तमं कुलम् ।। २२६ ।।**

**ताम्रपर्णी—**किञ्च धारणार्थमत्यल्पगोपीचन्दनदानमात्रेण पितृणां तारणोक्तेर्गोपीचन्दनेनोर्ध्वपुण्ड्रं बिभ्रता किमु वाच्यमिति भावेनाह— **यो ददातीति** ।। गोपिमर्दितं द्वारकायां कदाचित्कृष्णसन्दर्शनार्थं आगताभिर्गोपीभिः कृष्णस्याङ्गे मर्दितम् । गोपीकुचादिषु वा कृष्णेन मर्दितं घर्षितं चन्दनं तच्छेषभूतमिति यावत् । आसप्तमं सप्तमपुरुषपर्यन्तं विद्यमानकुलम् ।। २२६ ।।

**उमर्जी—** अन्नदानापेक्षया गोपीचन्दनदानस्य फलाधिक्यमाह— **य इति** ।। गोपिमर्दितं गोपिकास्त्रीप्रयुक्तम् । वैकुण्ठस्थानादाहृत्य मया प्रतिष्ठापितम् । गोपीभिः क्षालनात् इदंरूपेण स्थितं वा चन्दनम् ।

---

६०. गोपीचन्दनखण्डं तु यो ददाति च वैष्णवे ।
कुलमष्टोत्तरं तेन तारितं वै भवेच्छतम् ।। स्कान्दे २.५.३.२० ।।

वैकुण्ठस्थहृदादेतच्चन्दनं स्थापितं मया ।<br>
गोपस्त्रीणां च भोगार्थं यदाहृत्य च तत्पुनः ।।<br>
गोपीभिः क्षालितं तत्र पर्वताकारतोऽप्यभूत् ।<br>
गोपीचनन्दनमाख्यातं श्रीकृष्णाधिष्ठितं च तत् ।।<br>
सर्वकर्माधिकारार्थं सदा धार्यं मुमुक्षुभिः ।।<br>
—इति वासुदेवोपनिषद्वचनात् ।।

सर्षपमात्रेणापि सर्षपपरिमाणचन्दनदानेनैवेत्यर्थः ।। २२६ ।।

**उपेन्द्र**—गोपीचन्दनमाहात्म्यमाह— **य इति** ।। गोपिमर्दितं गोपिकास्त्रीभिर्लिप्तं सर्षपपरिमाणेनापि यो ददातीत्यन्वयः ।। २२६ ।।

**कोनेरी**—गोपीचन्दनधारणफलमुक्त्वा दानफलमाह— **यो ददातीति** ।। गोपिमर्दितं गोपीनां कुचेषु श्रीकृष्णेन मर्दितं लिप्तं चन्दनं सर्षपमात्रमपि द्विजातिभ्यः वैष्णवेभ्यः विष्णुमुद्दिश्य ददाति । सः आसप्तमं सप्तपुरुषपर्यन्तं कुलं पुनाति ।। २२६ ।।

**कृष्णामृतमहार्णवः**

**[61]ज्ञानी च कर्माणि सदोदितानि**<br>
**कुर्यादकामः सततं भवेत ।। २२७ ।।**<br>
**अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः ।**<br>
**एतादृशोऽपि नाचारं श्रौतं स्मार्तं परित्यजेत् ।। २२८ ।।**

---

६१. समस्तयज्ञभोक्तारमज्ञात्वा विष्णुमव्ययम् ।<br>
वेदोदितं यः कुरुते स लोकायतिकः स्मृतः ।। १७३ ।।<br>
यस्तु वेदोदितं धर्मं त्यक्त्वा विष्णुं समर्चयेत्।<br>
स पाषण्डत्वमापन्नो नरकं प्रतिपद्यते ।। १७४ ।।<br>
वेदाः प्राणा भगवतो वासुदेवस्य सर्वदा ।<br>
तदुक्तकर्माऽकुर्वाणः प्राणहर्ता भवेद्धरेः ।। १७५ ।।<br>
विष्णोराराधनाद्वेदं विना यस्त्वन्यकर्मणि ।<br>
प्रयुञ्जीत विमूढात्मा वेदहन्ता न संशयः ।। १७६ ।। वृद्धहारीतस्मृतौ अ.८ ।।

**ताम्रपर्णी**—एवं "अर्चितः संस्मृत" इति प्रतिज्ञाय अर्चनादीनामनुष्ठेयत्वमुपपादितम्। अत्र केचित् कर्मणां ज्ञानार्थत्वात् ज्ञानानन्तरं कर्म नानुष्ठेयमित्याहुः । तच्छ्रुतिस्मृतिभ्यां दूषयति— **ज्ञानीति** ।। अपरोक्षज्ञान्यपि श्रुतिस्मृत्युदितानि कर्माणि सदा नियमेन कुर्यात् । तत्फले स्वर्गादौ सन्ततमकामो भवेदिति श्रुत्यर्थः ।।२२७।।
स्मृतावाचारमिति आचारलक्षणाङ्गयुक्तं कर्मेत्यर्थः ।। २२८ ।।

**उमर्जी**—ननु "कामाचाराः कामभक्षा" इति ज्ञानिनो पूर्वोक्तं कर्मजातं न विहितमित्यतः तस्यापि कर्मविधिरस्तीत्याशयेन श्रुतिस्मृती आह— **ज्ञानीति** ।। **अतीतानागत इति च** ।। निरुपपदज्ञानशब्दस्य मुख्यार्थत्वात् ज्ञानी अपरोक्षज्ञान्यपि उदितानि वेदविहितानि कर्माणि भगवदाराधनरूपाणि कुर्यादेव । तत्करणं च फलाभिसन्धित्यागपूर्वकमित्याह— **अकाम इति** ।। भगवज्ज्ञानप्रसादादितरकामरहित इत्यर्थः । प्रसादादिकामस्तु कार्य एव । "इच्छा चैतस्य युक्ता" इत्यादि गीताभाष्योक्तेः । कामचारश्रुतिस्तु ज्ञानिनः स्वेच्छाचारोऽपि न मोक्षप्रतिबन्धक इत्यभिप्रायः । नतु कर्म न कार्यमित्याशय इत्यभिप्रायः ।। २२७-२२८ ।।

**उपेन्द्र**—ननु कामचाराः कामभक्षाः इति ज्ञानिनो यथेष्टाचरणाभ्यनुज्ञानात्पूर्वोक्तं कर्मजातं ज्ञानिनो न विहितमित्यतस्तस्यापि कर्मविधिरस्तीत्याशयेन श्रुतिस्मृती पठति— **ज्ञानीति** ।। **अतीतानागत इति च** ।। निरुपपदज्ञानशब्दस्य मुख्यत्वात् ज्ञानी अपरोक्षज्ञान्यपि उदितानि वेदविहितानि कर्माणि भगवदाराधनरूपाणि कुर्यादेव । तत्र करणं फलादित्यागपूर्वकमित्याह— **अकाम इति** ।। भगवद्भक्तिप्रसादादितरकामनारहित इत्यर्थः । प्रसादादिकामस्तु कार्यः एव । "इच्छा च तस्य युक्ते" त्यादि गीताभाष्योक्तेः । कामचारश्रुतिस्तु ज्ञानिनः स्वेच्छाचरणेऽपि न मोक्षप्रतिबन्ध इत्यभिप्रायः । नतु कर्म न कार्यं इत्याशय इति भावः ।। २२७-२२८ ।।

**कोनेरी**—अपरोक्षज्ञानार्थं कर्माणि कुर्यादित्युक्तम् । ज्ञानोत्पत्त्यनन्तरं तत्प्रयोजनाभावात्कर्मणा किं प्रयोजनमित्याशंक्य ज्ञानोत्पत्त्यनन्तरमपि मुक्तावानन्दातिशयार्थं कर्माणि कर्तव्यानीति श्रुतिस्मृती चाह— **ज्ञानी चेत्यादिना** ।। चशब्द अप्यर्थे । ज्ञानी अपरोक्षज्ञान्यपि उदितानि श्रुतिस्मृत्युदितानि भगवत्प्रीतिजनकानि कर्माणि

सदा निरन्तरं कुर्यात् । कर्मकरणदशायामकामो भवेत् । अ इति ब्रह्मेति श्रुतेः । तस्मिन्कामो यस्य सः अकाम इति ।। २२७ ।।

तथातीतानागतज्ञानी त्रिकालदर्शी त्रैलोक्योद्धरणक्षमः समर्थः एतादृशो श्रौत्रं स्मार्तं श्रुत्युक्तं स्मृत्युक्तं आचारं न परित्यजेत् । अपितु स्वविहिताचारं कुर्यादेव । इमे श्रुतिस्मृती मन्दाधिकारिविषयिण्यौ ।। २२८ ।।

## कृष्णामृतमहार्णवः

### *यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति ।। २२९ ।।

**ताम्रपर्णी**—ननु ज्ञानिना कर्म न कर्तव्यं तत्फलस्य ज्ञानस्य प्राप्तत्वात् । मोक्षस्य ज्ञानेनैवोपपत्तेरित्याशंकां श्रुत्या परिहरति— **यदेवेति** ।। श्रद्धया आस्तिक्यनिष्ठया बुद्ध्या सहितया उपनिषदा स्वयोग्यया विद्यया यदेव कर्म करोति तदेव कर्म वीर्यवत्तरं आनन्दातिशययुक्तत्वात् अतिशयेन सामर्थ्ययुक्तं भवतीत्यर्थः । ज्ञानस्य प्राप्तत्वेऽपि मोक्षस्य ज्ञानादेव क्लृप्तत्वेऽपि अपरोक्षज्ञानोत्तरं कर्मणा आनन्दातिशयसद्भावादवश्यमनुष्ठेयमिति भावः ।। २२९ ।।

**उमर्जी**—ननु "कर्मणा ज्ञानमातनोति, ज्ञानेनामृती भवति" इति श्रुतेः अन्तःकरणशुद्धिद्वारा ज्ञानैकफलानि बहुतरायाससाध्यानि कर्माणि ज्ञानिना किमर्थं कार्याणि । तत्फलस्य ज्ञानस्य प्राप्तत्वात् । नहि प्राप्तस्वर्गेण ज्योतिष्टोमो कर्तुं इच्छाविषयीक्रियते इत्यतो ज्ञानात्प्राक्तनकर्मणां ज्ञानार्थत्वात्, ज्ञानोत्तरं कृतस्य मुक्तावानन्दातिशयसाधनत्वात् तदुद्देशेन ज्ञानिनापि कर्म कार्यमेवेत्यभिप्रायेण तथाविधां श्रुतिं पठति— **यदेवेति** ।। श्रद्धया आस्तिक्यबुद्धियुक्तया । उपनिषदा उप समीपे निषीदति इत्युपनिषत् योग्यतया "स्वयोग्यं तु परिज्ञानं यत्तस्योपनिषत्स्मृतम्" इत्युक्तेः कर्मनिर्णयटीकोक्तेश्च । विद्यया अपरोक्षज्ञानेन। यदेव कर्म करोति । तदेव वीर्यवत्तरम् आनन्दातिशयसाधनं भवतीत्यर्थः । सम्मतं चेदं श्रुतिव्याख्यानं भगवत्पादानाम् । यथोक्तमनुव्याख्याने—"कर्मविद्यायुतं पश्चात् मोक्षे वीर्यप्रदं त्विति" इति । व्याख्यातं च सुधायां "वीर्यप्रदं आनन्दातिशयप्रदम्" इति ।। २२९ ।।

---

* अयं मन्त्रः छान्दोग्योपनिषदि २ ।

**उपेन्द्र**—ननु कर्मणा ज्ञानमातनोति, ज्ञानेनामृती भवतीति श्रुतेरन्तःकरणशुद्धिद्वारा ज्ञानेनैहिकफलानि बहुतरायाससाध्यानि कर्माणि ज्ञानिना किमर्थं कार्याणि । तत्फलस्य प्रागेव प्राप्तत्वात् । नहि प्राप्तस्वर्गेण ज्योतिष्टोमः ज्ञानात्प्राक्तनकर्मणांज्ञानार्थत्वेऽपि ज्ञानजन्मनि कृतस्य मुक्तावानन्दातिशयसाधनत्वात्तदुद्देशेन ज्ञानिनापि कर्म कार्यमित्यभिप्रायेण तथाविधां श्रुतिं पठति— **यदेवेति** ।। श्रद्धया श्रद्धायुक्तया उपनिषदा उप समीपे निषीदतीत्युपनिषत् योग्यतया 'स्वयोग्यं तु परिज्ञानं यत्तस्योपनिषत् स्मृतमि'मिति कर्मनिर्णयटीकोक्तेश्च । विद्यया अपरोक्षज्ञानेन यदेव कर्म करोति तदेव वीर्यवत्तरं भवति आनन्दातिशयसाधनं भवतीत्यर्थः । सम्मतमिदं व्याख्यानं भगवत्पादानां यथोक्तमनुव्याख्याने 'कर्मविद्यायुतं पश्चान्मोक्षे वीर्यप्रदंत्विति' इति । व्याख्यातं च सुधायाम् 'वीर्यप्रदमानन्दातिशयप्रद'मिति ।। २२९ ।।

**कोनेरी**—उत्तमाधिकारिणां प्रत्यकाम्याभावस्योक्तत्वात् ज्ञानपूर्वककर्मानुष्ठानेन फलातिशयो भवतीति उपनिषत्सम्मतिमाह— **यदेवेति** ।। विद्यया अखण्डध्यानरूपविद्यया । श्रद्धया आस्तिक्यबुद्ध्या । उपनिषदा अन्तर्निष्ठया यत्कर्म करोति तदेव कर्म वीर्यवत्तरं भवति अत्यन्तवीर्यवत्तरं भवति । तस्मात् ज्ञानपूर्वकं कर्म कार्यम् ।। २२९ ।।

### कृष्णामृतमहार्णवः

**[*]कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ।। २३० ।।**
**[*]आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ।**
**[*]वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।। २३१ ।।**

**ताम्रपर्णी**—ज्ञानिनामपि कर्माकरणे आनन्दह्रासप्राप्तेश्च कर्म कार्यमिति श्रुत्याऽऽह— **कुर्वन्नेवेति** ।। इह भगवद्विषये कर्माण्यर्चनादीनि कुर्वन्नेव शतं समाः जिजीविषेत् । जीवितुमिच्छेत् । जीवेदिति यावत् । एवं कर्म कर्तरि नरे त्वयि अकरणप्रयुक्तं पापकर्म न लिप्यते । इतोऽन्यथा कर्म न लिप्यत इति न ध्रुवं लिप्यते एवेत्यर्थः । तथाच भाष्यम्—

---

[*] अयं मन्त्रः ईशावास्योपनिषदि २ । [*] अयं पादः भागवते ६-१-४० ।

अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः ।
ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम् ।। इति ।। २३० ।।

ननु कोऽयं धर्मः को वाऽधर्मः यत्परित्यागेन धर्मोऽनुष्ठेय इत्यत आह— **आचार इति** ।। अत्रैवं भावः । योग्यः वेदप्रणिहितो धर्मस्तद्विरुद्धस्तद्विपर्ययस्तेन वेदेन विपर्ययो निषेधो यस्य सः तन्निषिद्धोऽधर्म इत्यर्थः । तर्हि पुत्र्यादिकामस्य एकस्य अनेकैर्विवाहस्य च वेदविरुद्धत्वात् ब्रह्मणः पाण्डवानां च सोऽधर्मः स्यादित्यत उक्तम् ।। **साधूनामात्मनस्तुष्टिरेव चेति** ।। साधूनां महानुभावानां च यत्रात्मनो मनसस्तुष्टिः प्रसादो भवति । अत एव धर्मस्तेषां स्वेच्छानियतत्वात् । "धर्माचलत्र मम मतिर्हि तदेव मानम्" इति वचनात्तथा च सूत्रम् । भावशब्दाच्चेति ।

धर्मस्वरूपचित्रत्वाद्यो यो देवमनोगतः ।
स एव धर्मो विज्ञेयः.................... ।। इति वचनात् ।।

वेदप्रणिहित इति साधारणो विधिरिति भावः । यद्वा वेदवाक्यविशेषदर्शने धर्मसन्देहे कथं कार्यमित्यत उक्तम् ।। **आचार इति** ।। कामक्रोधाद्यग्रस्तानां यत्राचारः स एव धर्मः । ननु प्रमाणेषु तात्पर्यापरिज्ञानेन विप्रतिपन्नेषु तात्कालिकसाधुष्वपि विप्रतिपन्ने कथं धर्मनिर्णय इत्यत उक्तम् ।। **आचार इति** ।। साधूनां स्वपूर्वाचार्याणां यत्राचारो धर्मबुद्ध्याऽनुष्ठानं वर्तते, स एव धर्मः पूर्वाचारपरिज्ञाने तु बहूनां साधूनां यत्राचारोऽनुष्ठानं स एव धर्मः । विरोधे तु "बहूननुवर्तेत वैष्णवान्" इति वचनात् । अनुष्ठातृणां साधूनां साम्ये तु यत्रात्मनः मनसस्तुष्टिः प्रसादो भवति स धर्म इत्यर्थः । यद्वा वेदविहितेष्वपि धर्मेषु मध्ये यदनुष्ठाने साधूनामात्मनो मनसस्तुष्टिः प्रीतिर्भवति स एव धर्मः तदप्रियस्तु न धर्मः । तदुक्तम् । "धर्ममप्यप्रियं तेषां नैव किञ्चित्समाचरेत्" इति ।। २३१ ।।

**उमर्जी**— अत्रोक्तान्यार्चनादीनि ज्ञानार्थिनाऽवश्यमनुष्ठेयानि । नत्वर्थवादबुद्ध्योपेक्षणीयानि इत्याशयवानाह— **कुर्वन्निति** ।। शतं समाः शतवर्षाणि इह

---

६२. भगवन्तमनुद्दिश्य यः कर्म कुरुते नरः ।
स पाषण्डीति विज्ञेयः सर्वलोकेषु गर्हितः ।। वृद्धहारीतस्मृतौ ५-१८ ।।

६३. वेदप्रविहितं कर्म तन्मन्ये मङ्गलं परम् ।
अवैदिकन्तु यत्कर्म तदेवाशुभमेव च ।। ब्रह्मवैवर्ते २-२५-७ ।।

मानुषादिजन्मनि यज्जिजीविषेत् जीवितुमिच्छेदिति यत् तत्कर्माणि स्वोचितानि कुर्वन्नेव । आमरणं भगवत्पूजात्मकानि असंकल्पितफलानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत् । कुत इत्यत उक्तम् ।। **एवमिति** ।। एवं पूर्वोक्तप्रकारेण कर्माणि शुभानि कुर्वति नरे मनुष्यमात्रेऽपि केवलं अल्पाधिकारिणि त्वयि । कर्म पापं न लिप्यते । स्वोचितेनासंकल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिणमपि न प्रागुत्तराणि कर्माणि बाधन्ते ज्ञानप्रतिबन्धकानि न भवन्ति। ततश्च ज्ञानाधिकारी सः भवतीति यावत् । इतः कर्मकरणादन्यथा उक्तविधकर्माकरणे नरे त्वयि कर्म न लिप्यत इति नास्ति । भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव ज्ञानप्रतिबन्धकानि भवन्त्येव । ततश्चासौ ज्ञाने नाधिक्रियते । अतः कर्माणि उक्तविधानि कार्याणीत्यर्थः ।। २३० ।।

धर्माधर्मविवेकार्थं धर्मज्ञप्तिकारणान्याह— **आचार इति** ।। श्रुतिस्मृत्यर्थनिष्ठानां साधूनामेवाचारः धर्मबुद्ध्यानुष्ठानम् । धर्मज्ञप्तिकारणमिति शेषः । विकल्पविषये धर्मे आत्मनः स्वस्य तुष्टिश्च तथा । वेदप्रणिहितः वेदविहितः । तद्विहितस्य विपर्ययः वेदनिषिद्ध इति यावत् ।। २३१ ।।

**उपेन्द्र**— अत्रोक्तान्यर्चनादीनि ज्ञानार्थमवश्यमनुष्ठेयानि । नत्वर्थवादबुद्ध्योपेक्षणीयानि इत्याशयेनाह— **कुर्वन्निति** ।। शतं समाः शतं वर्षाणि । इह मनुष्यादिजन्मनि यज्जिजीविषेत् जीवितुमिच्छेदिति यत् तत्कर्माणि स्वोचितानि कुर्वन्नेव। आमरणं भगवत्पूजात्मकानि असंकल्पितफलानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत् । कुतः । एवं कर्माणि कुर्वति नरे मनुष्यमात्रे त्वयि कर्म पापं न लिप्यते स्वोचितेनासंकल्पितफलेन कर्मणा भगवत्पूजां कुर्वतां अल्पाधिकारिणामपि न प्रागुत्तराणि कर्माणि पापानि बाधन्ते ज्ञानप्रतिबन्धकानि न भवन्ति । ततश्च ज्ञानाधिकारी सः भवतीति यावत् । इतः कर्मकरणादन्यथा उक्तविधकर्माकरणे कर्म न लिप्यत इति नास्ति । भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव । ज्ञानप्रतिबन्धकानि भवन्त्येव । ततश्चासौ ज्ञाने नाधिक्रियते । अतः कर्माण्युक्तविधानि कार्याणीत्यर्थः ।। २३० ।।

धर्माधर्मविवेकार्थं धर्मज्ञप्तिकारणमाह— **आचार इति** ।। विकल्पविषये धर्मे आत्मनः स्वस्य तुष्टिश्च तथा । वेदप्रणिहितः वेदविहितः तद्विपर्ययः वेदनिषिद्ध इति यावत् ।। २३१ ।।

**कोनेरी**—अल्पाधिकारी इह मनुष्यजन्मनि यदि जिजीविषेत् शतं समाः शतं वर्षाणि जीवितुमिच्छेत् तत्कर्माणि स्वोचितानि आमरणं भगवत्पूजात्मकानि असंकल्पितफलानि कर्माणि कुर्वन्नेव जिजीविषेत् । कुतः । एवं कर्माणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि कर्म पापं न लिप्यते । स्वोचितेन असंकल्पितफलेन कर्मणा भगवत्पूजां कुर्वतामल्पाधिकारिणामपि न प्रागुत्तराणि पापानि बाधन्ते। इतः कर्मकरणादन्यथा कर्म न लिप्यत इति नास्ति । भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव । अतः भगवत्प्रीतिकराणि कर्माणि कुर्यादिति ।। २३० ।।
"अर्चितः संस्मृतो ध्यात" इत्यारभ्य "ब्रह्माभ्येति सनातनमि"त्यन्तेन ग्रन्थेन उत्तममध्यमाधिकारिभिरिममर्थं गर्भीकृत्य मन्दाधिकारिणां बहिर्मुखानां स्वविहितमजानतां ज्ञानमुत्पादयिषुराचार्यवर्यः अल्पेष्वधिकमाहात्म्यकथनं एकादशस्कन्धतृतीयाध्यायगत—

वेदोक्तमेव कुर्वाणो निस्सङ्गोऽर्पितमीश्वरे ।
नैष्कर्म्याल्लभते सिद्धिं रोचनार्थं फलश्रुतिः ।। इति ।।

श्लोकोक्तार्थरीत्या ज्ञेयमित्यभिधाय सद्भिरनुष्ठित एवाचारः वेदोक्त एव धर्मः । निष्काममेव कर्म एतैराचरितैरुत्पन्नापरोक्षज्ञानेनैव मोक्षप्राप्तिरन्यथा नरकाद्यनर्थप्राप्तिरिति प्रदर्शयितुमुपसंहरति— **आचार इति** ।। साधूनामाचार एवाचार इत्युच्यते । आत्मनः परमात्मनः तुष्टिरेव तुष्टिः । वेदे कर्तव्यत्वेन यः प्रणिहितः स एव धर्मः । अकर्तव्यत्वेन प्रणिहितः सोऽधर्मः । ज्ञानपूर्वकं निष्कामं यत्कर्म क्रियते तदेव कर्म निवृत्तमिति चोच्यते । निवृत्तं कर्म कुर्वाणो ज्ञानी सनातनं ब्रह्म गुणपरिपूर्णं वासुदेवाख्यं अभ्येति प्राप्नोति । तदुक्तम् "आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे" इति ।। तुशब्दः प्रसिद्धिद्योतकः ।। २३१ ।।

**स्मृ.कृष्णाचार्य**—एवं भगवतः पूजादि गुणानुसारेण कार्यमित्युक्त्वा भगवत्प्रीत्यर्थं निवृत्तधर्मः कार्य इति वक्तुं धर्मलक्षणमाह— **आचारश्चेति** ।। साधूनां महात्मनां यः आचारः विहिताचरणं स धर्मः । तथात्मनस्तुष्टिः आत्मनां महात्मनां आत्मनो

मनसस्तुष्टिः यद्धर्मकरणे सन्तोषः स धर्मः । किञ्च वेदप्रणिहितः वेदशास्त्रेष्वयं धर्म इति अभिहितः स एव धर्मः धारकत्वाद्धर्म इत्युच्यते । स धर्म इति ज्ञेयः । प्रसङ्गादधर्मस्वरूपमाह— **अधर्म इति** ।। तद्विपर्ययः तेषां साध्वाचारसाधुमनस्तुष्टि-वेदप्रणिहितधर्माणां विपर्ययः तेषु विपर्ययं विपरीतकरणं वाऽधर्म इत्यर्थः ।। २३१ ।।

**कृष्णामृतमहार्णवः**

**[६४]निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते ।**
**निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ।। २३२ ।।**
(निवृत्तमेव सेवेत प्रवृत्तं तु परित्यजेत् ।।)

**ताम्रपर्णी**—धर्मो द्विविधः । निवृत्तः प्रवृत्तश्चेति । तत्र निवृत्तधर्मस्य लक्षणकथन-पूर्वं तदेवानुष्ठेयमिति भावेन तत्फलमाह— **निष्काममिति** ।। इह कर्ममध्ये स्वर्गादिकामनारहितम् ।

नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।
तथापि मत्कृता पूजा तत्प्रसादेन नान्यथा ।।
तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनःपुनः ।
कर्मन्यासो हरावेवं विष्णोर्मोक्षफलप्रदः ।।

इत्युक्तेर्भगवत्स्वातन्त्र्यादिज्ञानपूर्वं कर्म निवृत्तमुच्यते । निवृत्तं कर्म सेवमानः सनातनं ब्रह्माभ्येतीत्यर्थः ।। २३२ ।।

**उमर्जी**—ननु "ज्ञानी च कर्माणि" इत्यादौ सर्वत्र कर्मपदेन निवृत्तं कर्म विव-क्षितं नतु प्रवृत्तम् । तस्य नियतफलत्वादभिमतं भगवत्पादानाम् । तद्द्वैविध्यं किं प्रामाणिकं इत्यत आह— **निष्काममिति** ।। तर्मिति शेषः । अनेवंविधं तु प्रवृत्त-मिति भावः । फलकामनोपाधिप्रयुक्तं कर्मद्वैविध्यं वस्तुतः न द्वैविध्यं कर्मण इति भावः । ननु प्रवृत्तकर्मणः कामनानुसारेण फलसम्भवेऽपि निवृत्तं कर्मत्वानिष्फलं

---

*अस्य श्लोकस्य आकरः मनुस्मृति इति गीताभाष्ये(३ ४) उदाहृत. ।

६४. काम्यं कर्म प्रवृत्तं स्यान्निवृत्तं ज्ञानपूर्वकम् ।
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।। अग्निपुराणे १६२ ३ ।।

इत्यापतितमित्यत आह— **निवृत्तमिति** ।। ब्रह्माभ्येति ज्ञानद्वारा अथवा ब्रह्माभ्येति मनसेति शेषः । अपरोक्षतो ब्रह्मज्ञानीति यावत् । अन्तःकरणशुद्धिद्वारेणेति ज्ञेयम् ।। २३२ ।।

**उपेन्द्र**—ननु "ज्ञानी च कर्माणी"त्यादौ सर्वत्र कर्मपदेन निवृत्तकर्म विवक्षितम्। नतु प्रवृत्तम् । तस्य निष्फलत्वादित्यभिमतं भगवत्पादानाम् । तद्वैविध्य एव किं प्रमाणमित्यत आह— **निष्काममिति** ।। कृतमिति शेषः । अनैर्वविधं तु प्रवृत्तमिति भावः । ननु प्रवृत्तकर्मणः कामनानुसारेण फलसम्भवेऽपि निवृत्तकर्मणः निष्कामत्वान्निष्फलमित्यायातमित्यत आह— **निवृत्तमिति** ।। ब्रह्मा अभ्येति ज्ञानद्वारा । अथवा ब्रह्माभ्येति मनसेति शेषः । अपरोक्षतः ब्रह्मज्ञानीति यावत् अन्तःकरणशुद्धिद्वारेणेति ज्ञेयम् ।। २३२ ।।

**स्मृ.कृष्णाचार्य**—निवृत्तशब्दार्थमाह— **निष्काममिति** ।। निष्कामं कामनारहितं भगवन्माहात्म्यज्ञानपूर्वकं यत्कर्म तत् निवृत्तकर्मेति शास्त्रेषूच्यते । निवृत्तकर्मसेवकस्य फलमाह— **निवृत्तमिति** ।। पूर्वोक्तं निवृत्तं कर्म सेवमानः सदा सत्कर्मानुष्ठाता सनातनं ब्रह्म शश्वेदकप्रकारं गुणपूर्णं नारायणं अभ्येति प्राप्नोति । वैकुण्ठादिस्थितं प्राप्नोतीत्यर्थः । तस्माद्भक्तेन निवृत्तकर्मसेवनं कार्यमिति ।। निवृत्तधर्ममेवाचरेत् न प्रवृत्तं फलाधिक्यसत्वादित्याह— **निवृत्तमिति** ।। फलेच्छारहितः केवलभगवत्प्रीतिकरं कर्मरूपं धर्ममधिकारी सेवेत । केवलभगवत्प्रीतिकरधर्ममेव मोक्षार्थी आचरेत् । नतु प्रवृत्तं कर्म । विषयाद्यपेक्षया प्रवृत्तं कर्म धर्मं परित्यजेत् । भक्त इति शेषः ।। २३२ ।।

कृष्णामृतमहार्णवः

**श्रीमदानन्दतीर्थार्यसहस्रकिरणोत्थिता ।**
**गोततिः सततं सेव्या गीर्वाणैश्शुद्धिदा[1] भवेत् ।। २३३ ।।**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः**
**श्रीकृष्णामृतमहार्णवः**

---

१. 'सिद्धिदा' इति उम. पाठः ।।

**ताम्रपर्णी**—एवं निरूपिताशेषमोक्षसाधनो भगवानाचार्यः स्वस्वरूपज्ञानस्यापि मोक्षान्तरङ्गत्वात् "मध्व आधव" इत्यादिवेदप्रसिद्धं मध्वनामापरपर्यायस्वनामकथनपूर्वं स्वकृतस्य श्रीकृष्णामृतमहार्णवस्य मोक्षपर्यवसायित्ववरप्रदानं करोति- – **श्रीमदिति**।। आनन्दसन्दायिसुशास्त्रकर्तृत्वात्परमानन्दरूपस्य परब्रह्मणो मुख्यसन्निधानपात्रभूतत्वाच्चानन्दतीर्थनामकोऽयमार्यः आनन्दतीर्थार्यः । श्रीमांश्चासावानन्दतीर्थार्यश्च श्रीमदानन्दतीर्थार्यः स एव सहस्रकिरणः सूर्यः ज्ञानरश्मिविततत्वात्तेनोत्थिता उद्भूता गीर्वाणैस्सततं सेव्या गोततिः ब्रह्मस्वरूपतत्प्राप्तिमार्गप्रकाशकत्वात्सूर्यप्रकशवद्विद्यमानवाक्यततिः शुद्धिदा भावरूपाज्ञाननिवर्तनद्वारा स्वरूपशुद्धिप्रदा भवेदिति मङ्गलम् ।। २३० ।।

कृष्णामृतमहार्णवनिगूढमहार्थरत्न-
संवाहिनीं विमलवाक्यतरङ्गमालाम् ।
श्रीमध्वदेवविमलेन्दुकृपावलोक
ज्योत्स्नेधितां मधुपतौ गुरुरर्पयेन्मे ।। १ ।।
श्रीविठ्ठलार्यपुत्रेण श्रीमत्तीर्थार्यसेविना ।
तरङ्गमाला रचिता श्रीनिवासेन निर्मला ।। २ ।।

**उमर्जी**—समापितग्रन्थो भगवानानन्दतीर्थमुनिः स्वकृग्रन्थस्योपादेयताप्रयोजकसर्वज्ञत्वप्रणीतत्वज्ञापनाय स्वस्य सूर्यसाम्यमुपपादयति— **श्रीमदिति** ।। श्रीमदानन्दतीर्थार्य एव सहस्रकिरणः सूर्यः । तेन उत्थिता प्रतिपादिता इत्यर्थः । अनेन सर्वज्ञप्रणीतत्वमुक्तं भवति । गोततिः निर्दुष्टवाक्यसमूहः । सूर्यपक्षे किरणसमूहः । सततं सुखार्थिभिस्सेव्या । ननु सहस्रकिरणोत्थितस्याल्पैः सेवनं कथं घटते इत्यतः उक्तम् ।। **गीर्वाणैरिति** ।। भक्तोपलक्षणमेतत् । तदुक्तं मध्वविजये-

महानन्दतीर्थस्य ये भाष्यभावं मनोवाग्भिरावर्तयन्ते स्वशक्त्या ।
सुराद्या नरन्ता मुकुन्दप्रसादादिमं मोक्षमेते भजन्ते सदेति ।। इति ।।

निरन्तरसेवाफलमाह— **सिद्धिदेति** ।। मोक्षदा भवेदिति अशेषमतिमङ्गलम् ।।

उमर्जीकृष्णशर्मार्यनिर्मलात्मजसूरिणा ।
विवृतोऽयं यथावोधं कृष्णामृतमहार्णवः ।।

कृष्णं रामं व्यासदेवं श्रीशं नरहरिं गुरुम् ।
वन्दे श्रीयादवाचार्यान् तथा तिर्मलसद्गुरून् ।।
उमर्जीतिर्मलपितृन्सकलाभीष्टदान् सदा ।
येरहं शुकवत्सम्यक् शिक्षितोऽस्मि कृपालुभिः ।।

**उपेन्द्र**—समापितग्रन्थो भगवानानन्दतीर्थमुनिः स्वकृतग्रन्थस्योपादेयताप्रयोजकीभूतसर्वज्ञप्रणीतत्वज्ञापनाय स्वस्य सूर्यसाम्यमुपपादयति— **श्रीमदिति** ।। आनन्दतीर्थ एव ज्ञानलक्षणसहस्रकिरणवान्सूर्यः तेनोत्थिता प्रतिपादितेति यावत् । अनेन सर्वज्ञप्रणीतत्वमुक्तं भवति । गोर्ततिर्निर्दुष्टवाक्समूहः सततं निरन्तरं सुखार्थिभिः सेव्या । ननु सहस्रकिरणोत्थितस्य कथमल्पाधिकारिभिः सेवनं घटत इत्यत उक्तम् ।। **गीर्वाणैरिति** ।। भक्तोपलक्षणमेतत्—

महानन्दतीर्थस्य ये भाष्यभावं मनोवाग्भिरावर्तयन्ते स्वशक्त्या ।
सुराद्या नरान्ता मुकुन्दप्रसादादिमं मोक्षमेते भजन्ते सदेति ।।
—इति मध्वविजयोक्तेः ।।

निरन्तरसेवाफलमाह— **सिद्धीति** ।। मोक्षदा ।। २३० ।।

विष्णुदासार्यवंशाब्धिचन्द्रो भावप्रकाशकृत् ।
श्रीनिवास उपाध्यायः तमन्वयगुरुं भजे ।।
श्रीनृसिंहपदाम्भोजयुगलभ्रमरायितान् ।
अवधानिकुलाधीशान् रघुनाथगुरून्भजे ।।
उपेन्द्रकृष्णभट्टार्यसूनुना श्रीशतुष्टये ।
विवृतोऽयं यथाबोधं कृष्णामृतमहार्णवः ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**
**श्रीकृष्णामृतमहार्णवविवरणं उपेन्द्रकृष्णभट्टार्यसूनुविरचितं समाप्तम्**

**कोनेरी**—समापितग्रन्थो भगवानानन्दतीर्थमुनिः स्वकृतग्रन्थस्य अत्युपादेयत्वमाह— **श्रीमदानन्दतीर्थाख्य इति** ।। श्रीमदानन्दतीर्थाख्यः सहस्रकिरणः सूर्यस्तस्मा-दुत्थितः गोततिः वाक्ततिः गीर्वाणैरपि सततं सेव्या । अल्पाधिकारिभिः सेव्येति किं वक्तव्यमिति । फलमाह— **सिद्धिदेति** ।। सर्वाधिकारिणां योग्यतया सर्वसिद्धिदा भवेत् भवत्येवेत्यशेषमतिमङ्गलम् ।। २३० ।।

गुरूपदिष्टमार्गेण तेषामेव कृपाबलात् ।
कृष्णामृतमहार्णार्थो यद्ज्ञातो स प्रकाशितः ।।
कृष्णामृतमहार्णाख्यज्ञाने तु कुशलाः सुराः ।
स्वस्वयोग्यानुसारेण मध्यमा अधमा अपि ।
ते कुर्वन्तु सदा नित्यमल्पज्ञे ये दयालवः ।।
एषां संस्मरणादेव ज्ञानसिद्धिरभून्मम ।
मात्सर्येणार्बुदान् दोषान् ब्रूयुर्दोषा नचास्ति मे ।।
रमाब्रह्मादिवन्द्याङ्घ्रिः किमल्पज्ञैर्न विद्यते ।
श्रीतिर्मलार्यतनुजः शेषवर्याभिधो गुरुः ।
सन्मार्गवर्तिनं नित्यं मां करोतु कृपानिधिः ।।
नीलाम्बुदनिभः श्रीमान् कृष्णः कृष्णाहिमर्दनः ।
कृष्णामृतार्णसद्व्याख्यारचनात्प्रीयतां मम ।।
कृष्णामृताब्धिजनकोज्वहृदब्जवासा
कृष्णप्रियानतपदः कुरुसत्सभायाम् ।
नित्यं निरस्य कलुषं हृदि सद्दयालुः
दद्यादभीष्टममितं मम रुक्मिणीशः ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितकृष्णामृतमहार्णवव्याख्या पद्मनाभशेषवर्यतनुजकोनेरीकृता समाप्ता**

**स्मृ.कृष्णाचार्य—** अयं ग्रन्थः केवलं मनुष्ययोग्य इति न मन्तव्यः । किन्तु देवैरपि सेव्य इति वदन् अन्यकृतत्वशंकाव्यावर्तनाय स्वनामकथनपूर्वकं सर्वसेव्यत्वमाह- – **श्रीमदानन्दतीर्थेति** ।। श्रीमन्तः ये आनन्दतीर्थास्त एव सहस्राकिरणः सूर्यस्तेन उदितः प्रकाशितः गोततिः किरणसमूहरूपः अयं ग्रन्थः । तथा सहस्राकिरणस्य सूर्यस्य गोततिः किरणसमूहो यथा सर्वैस्सेव्यस्तथा श्रीमदानन्दतीर्थार्यमुखनिस्सृता गोततिः निर्दुष्टवाक्समूहः । अयं ग्रन्थः गीर्वाणैस्सततं सेव्यो भवेत् । कुत इत्यत उक्तम् ।। **शुद्धिद इति** ।। देवानामपि मनःशुद्धिदत्वादयं ग्रन्थस्तैस्सेव्यः । किल । किं वक्तव्यं भगवद्भक्तैर्मनुष्यैस्सेव्य इति भावः ।। २३१ ।।

पूर्णप्रज्ञाचार्यकृतः कृष्णामृतमहार्णवः ।
कृष्णाचार्येण व्याख्यातस्तेन प्रीतोऽस्तु मे हरिः ।।

न जानामि पदार्थं वा वाक्यार्थं वापि कुत्रचित् ।
अर्थसंकथनेनैव दयां कुर्वन्तु सज्जनाः ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीकृष्णामृतमहार्णवस्य व्याख्यानं कृष्णाचार्यकृतं सम्पूर्णम्**

**यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
**बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः**
**मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ।। * ।।**
**यस्सर्वगुणसम्पूर्णः सर्वदोषविवर्जितः ।**
**प्रीयतां प्रीत एवाऽलं विष्णुर्मे परमः सुहृत् ।। * ।।**

# श्लोकानुक्रमणिका

॥

# अधिकश्लोकानुक्रमणिका

# कृष्णामृतमहार्णवव्याख्यानोदाहृतश्रुतिस्मृतयः तथा तेषामाकराः

| क्र. | उद्धरणम् | आकरः |
|---|---|---|
| १. | प्रातः श्रौतं द्विजः | पञ्चरात्रम् |
| २. | श्रवणं कीर्तनं विष्णोः | भागवतम् |
| ३. | तत्पादवन्दनं चैव | वृद्धहारीतस्मृतिः |
| ४. | अधिकारं फलं चैव | भागवततात्पर्यं |
| ५. | अधृत्वा विधिवच्चक्रं | वसिष्ठस्मृतिः |
| ६. | पशुपुत्रादिकं सर्वं | शाण्डिल्यस्मृतिः |
| ७. | उपवीतादिवद्धार्याः | शङ्खस्मृतिः |
| ८. | शङ्खं चक्रं स्मरन् | वसिष्ठस्मृतिः |
| ९. | शिष्येच्छामन्त्रतत्त्वज्ञो | तन्त्रतिलक |
| १०. | नामचिह्नादिना देहे | विष्णुरहस्यम् |
| ११. | अयं सर्वेष्टदाता मे | विष्णुरहस्यम् |
| १२. | शुक्लशोणितसम्भूते | हारीतस्मृतिः |
| १३. | बिल्वपत्राच्छमीपत्रात् | स्कन्दपुराणम् |
| १४. | ऐश्वर्यादिगुणैः षड्भिः | कूर्मपुराणम् |
| १५. | स्वकर्मनिष्ठः शत- | भागवतम् |
| १६. | गायत्री त्रिपदं ज्ञेयं | बृहद्भाष्यम् |
| १७. | जाते ब्रह्मालये ब्रह्मन् | नारदपुराणम् |
| १८. | कर्मणा कर्मनिर्हारो | भागवतम् |
| १९. | ते न स्मरन्त्यतितराम् | भागवतम् |
| २०. | तद्यथेषिका तूलमग्नौ | छान्दोग्योपनिषत् |
| २१. | मर्त्यं देहं परित्यज्य | ब्रह्मसूत्रभाष्यम् |
| २२. | मन्त्रतन्त्रोपकरण | संग्रहरामायणम् |
| २३. | अकामः सर्वकामो वा | भागवतम् |
| २४. | देवान्हित्वा यजन्तोऽपि | भागवतम् |
| २५. | कुर्युर्विष्णावपि द्वेषं | भागवततात्पर्यं |
| २६. | देहेन्द्रियप्राणधियाम् | भागवततात्पर्यं |
| २७. | कलिं सभाजयन्ति | पद्मपुराणम् |
| २८. | कलौ न राजञ्जगतां | भागवतम् |
| २९. | दूरे क्रीडनकासक्तम् | भागवतम् |
| ३०. | दधिस्थघृतवत्काष्ठे | भागवततात्पर्यम् |
| ३१ | सर्वाणि तीर्थानि वसन्ति | भागवतम् |
| ३२. | तस्येत्यर्पणमन्त्रेण प्रीतो | ऋग्भाष्यम् |
| ३३. | जिह्वा सा दर्दुरिकैव | भागवतम् |
| ३४. | भयं प्रमत्तस्य वनेष्वपि | भागवतम् |
| ३५. | विले बतोरुक्रम- | भागवतम् |
| ३६. | पादौ नृणां तौ द्रुम- | भागवतम् |
| ३७. | बर्हायिते ते नयने | भागवतम् |
| ३८. | अल्पमात्रकृतो धर्मो | स्मृतिः |
| ३९. | पदान्तरे पदं न्यस्तं | वराहपुराणम् |
| ४०. | चन्द्रवृद्ध्या समश्नीयात् | वराहपुराणम् |
| ४१. | सकृदेव तु योऽश्नाति | पद्मपुराणम् |
| ४२. | तिथिवृद्ध्या चरेत्- | याज्ञवल्क्यस्मृतिः |
| ४३. | अष्टावष्टौ समश्नी- | याज्ञवल्क्यस्मृतिः |
| ४४. | नद्यः सर्वाः स्व- | स्कन्दपुराणम् |
| ४५. | विष्णुपादोदकं पुण्यं | स्कन्दपुराणम् |
| ४६. | सर्वा नद्यः कलौ नृणां | गङ्गामाहात्म्यम् |
| ४७. | अभिदर्धाति मुनीन्द्राः | सुमध्वविजयः |
| ४८. | सः स्नातः सर्वतीर्थेषु | स्मृतिः |
| ४९. | स्नाने चाचमने चैव | व्यासस्मृतिः |
| ५०. | गङ्गायां च प्रयागे च | स्मृतिः |
| ५१. | यत्त्वगस्थिगतं पापं | स्मृतिः |
| ५२. | नैवेद्यशेषं तुलसी- | स्मृतिः |
| ५३. | सालिग्रामशिलाचक्रं | पञ्चरात्रम् |
| ५४. | चातुर्वर्ण्यव्यवस्थानं | विष्णुस्मृतिः |
| ५५. | आत्मेत्येव परं देवं | ब्रह्मसूत्रभाष्यम् |
| ५६. | मुख्यत्यागो हरेरेषः | स्मृतिः |
| ५७. | रमाब्रह्मादिकानां च | स्मृतिः |
| ५८. | यदा नृदेहोऽस्ति | भागवतम् |
| ५९. | वृद्धौ प्रसिद्धसिद्धान्तं | शिष्टवचनम् |
| ६०. | व्रतानामेव सर्वेषाम् | निर्णयामृतम् |
| ६१. | आर्यभट्टेन गणनं | निर्णयामृतम् |
| ६२. | द्वौ तिथ्यन्तावेकरात्रे | पद्मपुराणम् |

| क्रम | उद्धरणम् | स्रोतः |
|---|---|---|
| ६३. | एकस्मिन्वासरे त्वह्नि | पद्मपुराणम् |
| ६४. | एकादशी द्वादशी च | स्कन्दपुराणम् |
| ६५. | वेधस्तु द्विविधः प्रोक्तः | कूर्मपुराणम् |
| ६६. | श्वलीढं पञ्चगव्यं च | स्मृतिकौस्तुभः |
| ६७. | अष्टवर्षा भवेत्कन्या | स्मृतिः |
| ६८. | दिनक्षयात्परा या तु | समाख्यावचनम् |
| ६९. | आदित्योदयवेलायां | नारदपुराणम् |
| ७०. | अरुणोदयवेलायां | भविष्योत्तरपुराणम् |
| ७१. | पञ्चपञ्चाशतादूर्ध्वं | स्कन्दपुराणम् |
| ७२. | अतिवृद्धावष्टयुगं | तिथिनिर्णयः |
| ७३. | अरुणोदयवेलायां | गोभिलस्मृतिः |
| ७४. | अरुणोदयकाले तु | भविष्यत्पुराणम् |
| ७५. | चतस्रो घटिकाः | प्रमाणसंग्रहः |
| ७६. | चतस्रो घटिकाः | ब्रह्मवैवर्तपुराणम् |
| ७७. | अरुणोदयतः पूर्वं | स्कन्दपुराणम् |
| ७८. | बह्वागमविरोधे नु | स्मृतिः |
| ७९. | पञ्चपञ्चाशतादूर्ध्वं | वैष्णवसंहिता |
| ८०. | पञ्चपञ्चाशदधिका | विष्णुधर्मोत्तरः |
| ८१. | अरुणोदयमारभ्य | स्मृतिकौस्तुभः |
| ८२. | षण्णाड्यधिक- | वराहपुराणम् |
| ८३. | यदा सूर्योदयात्पूर्वं | कूर्मपुराणम् |
| ८४. | दशम्यां श्रवणर्क्षे तु | मत्स्यपुराणम् |
| ८५. | विष्णोश्च जन्मदिवसे | पद्मपुराणम् |
| ८६. | द्वादशी श्रवणोपेता | कूर्मपुराणम् |
| ८७. | अरुणोदयवेलायां | धर्मसंहिता |
| ८८. | नागविद्धा तु या | निगमः |
| ८९. | त्रयोदश्यां मृताहश्चेत् | स्कन्दपुराणम् |
| ९०. | त्रयोदश्यां मृततिथिः | विष्णुपुराणम् |
| ९१. | निमेषस्त्रिलवो ज्ञेयः | भागवतम् |
| ९२. | दशमीवेधहीना चेत् | कूर्मपुराणम् |
| ९३. | उदयार्दभिजिह्लग्र- | मरीचिः |
| ९४. | ब्राह्मेण पैतृकादीन | निर्णयसारः |
| ९५. | रिक्तामारभ्यातिवृद्धा | गरुडपुराणम् |
| ९६. | द्वादशी श्रवणोपेता | गरुडपुराणम् |
| ९७. | अनङ्गयुक्तद्वादश्यां | विष्णुतीर्थीयः |
| ९८. | ये श्रुत्वा पारणं कुर्युः | अत्रिस्मृतिः |
| ९९. | द्वादश्यां श्रुतियुक्तायां | जाबालस्मृतिः |
| १००. | यदा तु शुक्लद्वादश्यां | धर्मसंहिता |
| १०१. | शुक्ला वा यदि वा | नारदपुराणम् |
| १०२. | एवं श्रोणोदयद्वन्द्व- | विष्णुरहस्यम् |
| १०३. | आहुरब्भक्षणं विप्राः | भागवतम् |
| १०४. | रुद्रोऽपि सर्वदेवानां | विष्णुतीर्थीयः |
| १०५. | अद्य स्थित्वा निरा- | पञ्चसंस्कारसंग्रहः |
| १०६. | कन्यासहस्रं तिथिवत् | स्कन्दपुराणम् |
| १०७. | उपावृतस्य पापेभ्यः | स्कन्दपुराणम् |
| १०८. | एकादश्यां प्रान्तभागो | विष्णुतीर्थीयः |
| १०९. | अब्भक्षणं मुनिश्रेष्ठ | पञ्चसंस्कारसंग्रहः |
| ११०. | नतो यमपुरीं प्राप्य | विष्णुतीर्थीयः |
| १११. | बुद्ध्या विहितपुष्पैर्वा | गीतातात्पर्य |
| ११२. | श्रुत्वा मत्वा तथा | अनुव्याख्यानम् |
| ११३. | यस्य हस्तौ च पादौ | महाभारतम् |
| ११४. | जीवंश्चतुर्दशादूर्ध्वं | गीतातात्पर्य |
| ११५. | विद्याविनयसम्पन्ने | भगवद्गीता |
| ११६. | त्वयोपभुक्तस्रग्गन्ध | भागवतम् |
| ११७. | विप्राद् द्विषड्गुण- | भागवतम् |
| ११८. | खट्वाङ्गो नाम राजर्षिः | स्कन्दपुराणम् |
| ११९. | तरवः किं न जीवन्ति | भागवतम् |
| १२०. | पवित्रं ते विततं | श्रुतिः |
| १२१. | दक्षे बाहौ स्तने पार्श्वे | नरसिंहपुराणम् |
| १२२. | वैकुण्ठस्थ | वासुदेवोपनिषत् |
| १२३. | अज्ञस्य कर्म- | ईशावास्यभाष्यम् |
| १२४. | महानन्दतीर्थस्य यं | सुमध्वविजयः |